ले. सं. १२०२ द्रव्यालङ्कारवृत्तिः । रामचन्द्र–गुणचन्द्रौ क्र. ९५

परिपूर्णोऽयं ग्रन्थः प्रकाशत्रयात्मकः, किन्त्वत्र केवलं द्वितीय-तृतीयावेव प्रकाशाववलोक्येते। तृतीयप्रकाशोऽप्यपूर्णः, वृत्तिसमन्वितोऽयं नान्यत्रोपलभ्यते। मूलमात्र एव बृ. कर्त्रा सूचितः। अत्र प्रथमप्रकाशे जीवद्रव्यम्, द्वितीये पुद्गलप्रकाशे पुद्गलद्रव्यम्, तृतीयेऽकम्पप्रकाशे च त्रीणि धर्माधर्माकाशद्रव्याणि प्रमाणप्रतिष्ठितानि । आभ्यामेव विद्वद्भ्यां सम्मील्य नाट्यदर्पणं विरचितम् । एतयोश्च पं. रामचन्द्रः प्रबन्धशतकर्तृत्वेन प्रसिद्धः सिद्धहेमशब्दानुशासनविधातुः सुप्रसिद्धस्य हेमसूरेः शिष्यः, स्वयं चानेन ज्ञापितमेतदन्यत्र निजकृतौ । प्रभावकचरितादावयं हेमसूरिपट्टधरत्वेन वर्णितः। रचना त्वस्य द्वादशशताब्द्युत्तरार्धे इत्यनुमानं न दोषावहम् । कुमारविहारशतकम्, कौमुदीमित्राणन्दम्, द्वात्रिंशिकाः, नलविलासः, निर्भयभीमव्यायोगः, मल्लिकामकरन्दः(?), यादवाभ्युदयः, रघुविलासः, राघवाभ्युदयः, सत्यहरिश्चन्द्रम् इत्याद्याऽस्यानल्पा कृतिर्विदुषां मनांसि हरति । अस्य च सहकारी कोऽयं गुणचन्द्रः? हेमविभ्रमवृत्तिकारो वादिदेवसूरिशिष्योऽथवा हेमसूरेरेव शिष्यो येन सं. १२४१ वर्षे सोमप्रभाचार्यसन्दर्भितः कुमारपालप्रतिबोधः श्रुत इति विशिष्टप्रमाणं विना निर्णेतुं दुःशकम्, समयविचारे वादिदेवसूरिशिष्येण साकमस्य सङ्गतिर्विशेषतो घटते।

## जैन-वादग्रन्थाः।

ले. सं. १२१५ बोटिकनिराकरणम् [ हरिभद्रसूरिः ] क्र. २४८(१)

बोटिकानां दिगम्बराणां मतमत्र खण्डितम् । C. प्रतिप्रान्ते 'कृतिरियं हरिभद्रसूरेः' इत्युल्लेखो वर्तते । अयं च सूरिः सुप्रसिद्धश्चतुर्दशशतप्रकरणकारो याकिनीमहत्तराधर्मपुत्रो ज्ञायते।

वादस्थलम् । प्रद्युम्नसूरिः पृ. ६०

---

१ 'द्रव्यालङ्कारस्तत्कः पं. रामचन्द्रगुणचन्द्रकृतः ४८० ।'—बृ०

२ 'रामचन्द्रकृतं प्रबन्धशतं द्वादशरूपकनाटकादिस्वरूपज्ञापकम् ।'—प्राचीनपत्रे

३ "सूत्र०—मारिष ! श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनविधानवेधसः श्रीमदाचार्य-हेमचन्द्रस्य शिष्ये(ष्यं) रामचन्द्रमपि(पि) जानासि ? । पारि० ( साक्षेपम् )—

पञ्चप्रबन्धमिषपञ्चमुखानकेन विद्वन्मनःसदसि नृत्यति यस्य कीर्तिः ।
विद्यात्रयीचणमचुम्बितकाव्यतन्द्रं कस्तं न वेद सुकृती किल रामचन्द्रम् ? ॥

किं तु(नु) द्रव्यालङ्कारनामा प्रबन्धोऽनभिनेयत्वेन तावदास्ताम् । अपरेषां राघवाभ्युदय–यादवाभ्युदय–नलविलास–रघुविलासानां चतुर्णां रमणीयतमसप्रपञ्चनिवेशानां विशदप्रकृतीनां पुनर्मध्ये कुत्र प्रजानामनुरागः ? ।"—रघुविलासे P. P. ५।१४४

४ "हेमसूरिपदपङ्कजहंसैः श्रीमहेन्द्रमुनिपैः श्रुतमेतत् ।
वर्धमान–गुणचन्द्रगणिभ्यां साकमाकलितशास्त्ररहस्यैः ॥"—कुमारपालप्रतिबोधप्र०

५ 'बोटिकनिषेधो वस्त्रव्यवस्थापनरूपः ।'—बृ०

**खरतरगच्छीयैर्विप्रतिपाद्यमानमाशापल्लीयोदयनविहारमूर्तीनां वन्दनार्हत्वमत्र साधितम् । ग्रन्थकारोऽयं सुप्रसिद्धवादिदेवसूरिशिष्यस्य महेन्द्रसूरेः शिष्यस्त्रयोदशशताब्दीपूर्वार्धे विद्यमानः सम्भाव्यते । पितुः प्रबोधार्थमस्य रचनेत्यन्ते निगदितम् । सा. ³क्षेमन्धरोऽस्य पिता ज्ञायते ।**

प्रबोधोदयवादस्थलम् । जिनपतिसूरिः प्र. ६०

**पूर्वनिर्दिष्टस्य वादस्थलस्य खण्डनमेतत् । अत्र तासामेव मूर्तीनां वन्दनानर्हत्वं प्रतिपादितम् । ची. दलालेनानयोर्द्वयोरपि विषयः समानो दर्शितः, किन्तु परस्परमनयोर्विरुद्धो विषयः । यद् यत्पूर्वग्रन्थकारेण वादिना साधितम्, तत्तदनेन प्रतिवादिना विबाधितम् । गूर्जरत्रायामाशापल्लीपुरे** पूर्वमेतद्विषयको वादोऽपि सभासमक्षमासीदित्येतत्प्रारम्भप्रान्तविलोकनादवगम्यते । **अयं** सूरिर्जिनचन्द्रसूरिशिष्यो जिनेश्वरसूरि–जिनपालोपाध्याय–सूरप्रभवाचक–पूर्णभद्रगणि–सुमतिगण्यादीनां गुरुः, येषां नैका कृतिरत्रान्यत्र दर्शिता । ख. पट्टावल्याद्यनुसारेणास्य सूरेर्जन्म सं. १२१० वर्षे, दीक्षा सं. १२१८ वर्षे, सूरिपदं सं. १२२३ वर्षे, स्वर्गमनं च सं. १२७७ वर्षे समजनीति ज्ञायते । सं. १२३३ वर्षेऽनेन कल्याणनगरे महावीरप्रतिमा प्रतिष्ठितेति तीर्थकल्पे जिनप्रभसूरिः । **एतदतिरिक्ताऽस्य कृतिस्तीर्थमाला, सङ्घपट्टकटीका, पञ्चलिङ्गीविवरणमित्यादिका सुप्रसिद्धा ।**

---

१ "इह केचिज्जिनपतिमतानुसारिणोऽप्यपारतमःस्तोमास्तगमस्तशेमुषीविशेषास्तत्तत्कदाग्रहग्रहग्रहिलतया सकर्णाभ्यर्णप्रचारपरिहारपरवचःप्रपञ्चचातुरीधुरीणतया च जनितस्वजनमनोविश्लेषाश्चतुस्त्रिंशदतिशयवतां भगवतामर्हतामपि श्वेताम्बरयतिप्रतिष्ठितास्वपि प्रतिमास्वनभिवन्दनीयतामुपदिशन्ति तान् प्रतीदमनुमानमुपन्यस्यते ।"—वा० प्रारम्भे II.

"ततश्च निःशेषदोषप्रमोषपोषितः परतीर्थिकापरिगृहीतत्वे सति श्वेताम्बरयतिप्रतिष्ठितार्हद्बिम्बत्वादिति हेतुः स्वसाध्यं साधयन् न गीर्वाणप्रभुणाऽप्यपहस्तयितुं पार्यत इति ।"—वा० प्रान्ते II.

२ "इह हि भगवदागमेषु बहुधा निर्णीतमायतनानायतनविभागं धीशतया यथावदधिगामुका अप्यधीशतया कदभिनिवेशावेशास्कन्दितमानसा मानसानुमच्छिखराधिरोहप्ररोहदुच्चावचवचनाडम्बराः केचित् सिताम्बरा आयतनमेवार्हद्बिम्बं न तु कथञ्चिदनायतनमपीति बाहुदण्डमुद्धृत्य मुग्धेभ्यः प्रतिदिशमनिशमुपदिशन्तः श्रीगूर्जरत्रोदरे श्रीमदाशापल्लीपुरेऽसङ्ख्यसङ्ख्यावन्मुख्यस्वपक्षपरपक्षसामाजिकसमाजसमक्षं बहुशो निःप्रश्नव्याकरणीकृत्यास्माभिः सिद्धान्तरहस्यसुधारसं पायिता अपि भाग्यविपर्ययात् तमुद्वम्य स्ववसतिकोणके प्रविश्य प्रतिपदमसभ्यवागवर्पणेन स्वयमेव प्रकृतप्रमेयस्य सभानर्हतां सूचयन्त आजन्मप्रपीतोत्सूत्रसूत्रणविषोद्गारप्रकारं प्रेक्षावतामनुपादेयं प्रमेयं चिकीर्षन्तः प्रकृतिस्वच्छस्य कज्जलसन्निधेः कालिम्नावभासिनः स्फटिकस्येव निसर्गायतनस्य पार्श्वस्थादिपरिग्रहेणानायतनतया प्रतिभास्वरस्यापि तस्यायतनत्वसिद्धयेऽनुमानप्रमाणमेवमुपन्यस्यन्ति । आशापल्लीवदनतिलकायमानोदयनविहारान्तर्वर्तीन्यर्हद्बिम्बानि यति–गृहिणां वन्दनीयानि × × ॥"

—प्रबोधोदयप्रारम्भे II.

३ "अतो गीर्वाणप्रभुणेत्यादि त्वद्वाक्यमुत्तानवावदूकप्रलापकल्पं तदेवमलमेभिर्भवत्प्रयुक्तैर्जात्युत्तरैरुन्मत्तप्रलापैरिव बालकेलिकारैः । यच्च सोऽयमभञ्जि सभासदां समक्षमिति स्वयं स्वावदातोत्कीर्तनं तद्यद्याशापल्ल्यां तदा त्वदुपासकदण्डनायकश्रीअभयडप्रभृतिसभासदां समक्षं यदभूत् तत् सर्वत्र गूर्जरत्रायां प्रतीतम् । अथ स्ववसतिकोणके तदा स्वस्य गेहेनर्दिताप्रकाशनमात्रमेव ।

सं. १६६५ उत्सूत्रोद्धटनखण्डनम् । गुणविनयः पृ. ५८

तपागच्छीयधर्मसागरोपाध्यायविहितस्योत्सूत्रोद्धटनकुलकस्यतत् खण्डनं तपागच्छखण्डनरूपं खरतरगच्छमण्डनरूपम् । खण्डनकारोऽयं गुणविनयपाठकः खरतरगच्छीयजयसोमोपाध्यायस्य शिष्यः सप्तदशशताब्दीमध्यकालीनः । अस्य कृतिबाहुल्यं विज्ञायते यथा—

सं. १६४१ खण्डप्रशस्तिकाव्यवृत्तिः ( सं. १६५७ विचाररत्नसङ्ग्रहलेखनम् )
सं. १६४६ रघुवंशटीका सं. १६५९ लघुशान्तिटीका
सं. १६४६ दमयन्तीचम्पूवृत्तिः सं. १६६२ अञ्जनासुन्दरीसम्बन्ध (गू.)
सं. १६४७ प्रा० वैराग्यशतकवृत्तिः सं. १६६४ इन्द्रियपराजयशतकवृत्तिः
सं. १६५१ सम्बोधसप्ततिकावृत्तिः सं. १६६५ गुणसुन्दरीचतुष्पदिका (गू.)
सं. १६५५ कर्मचन्द्रमन्त्रिवंशप्रबन्धः (गू.)

एतदतिरिक्ता अज्ञातरचनासमयाश्चैते ग्रन्थाः—

जिनवल्लभीयाजितशान्तिवृत्तिः, मितभाषिणीवृत्तिः, लुम्पकमतत्तमोदिनकरचतुष्पादिका (गू.) सत्त्वार्थशब्दार्थसमुच्चय इत्यादयः । सं. १६७५ वर्षे विमलाचले जिनराजसूरिकृतायामादिनाथप्रतिष्ठायामयमपि तत्रासीत् ( एपिग्राफिआ इण्डिका २।६२–६३ ) ।

[ सं. १७३१[1] ] पाण्डित्यदर्पणम् । उदयचन्द्रः पृ. ५६

अनूपसिंहसंज्ञकस्य मरुदेशीयनृपस्याज्ञयाऽस्य रचना । अत्र मनजीकादीनां पण्डितानां मतमवमतम् , निजाभीष्टप्रयोगाश्च प्रमाणपुरस्सरं समर्थिताः ।

---

## बौद्धन्यायग्रन्थाः ।

ले. सं. १२०६ धर्मोत्तरटिप्पनम् । मल्लवादी क्र. १४.१३०(१) [P.P.५।३]

बौद्धाचार्यधर्मोत्तरकृतायाः सुप्रसिद्धाया न्यायबिन्दुटीकाया एतट्टिप्पनम् । टिप्पनकारो मल्लवाद्याचार्यो जैनो नयचक्र सम्मतितर्कवृत्त्यादिकर्ता ज्ञायते; यस्य चरित्रं प्रभावकचरित्र-प्रबन्धचिन्तामणि-सम्यक्त्वसप्ततिवृत्ति-प्रबन्धकोषादौ दृष्टिगोचरं भवति । विरहाङ्कहरिभद्रसूरिणाऽस्यास्मारि स्वग्रन्थे । कुमारपालप्रतिबोधकहेमसूरिरपि सिद्धहेमशब्दानुशासने तार्किकशिरोमणित्वेनोदाहरदेनं सूत्रोदाहृतिप्रसङ्गे[2] । प्रभावकचरित्रकारेणास्य समयो वीरनि. सं. ८८४=वि. सं. ४१४ रूपो न्यरूपि[3], किन्तु न्यायबिन्दुटीकाकारस्य धर्मोत्तरस्य सत्ता पाश्चात्यविद्वद्भिर्विक्रमीयसप्तमशताब्द्यां निर्णीयतेऽतो टिप्पनकारस्यार्वाचीनतेति स्पष्टमथवाऽयं मल्लवादी कश्चिदन्यः सम्भाव्यः । अपूर्णा मुद्रिता च न्यायबिन्दुटीका-टिप्पण्यस्माद् भिन्नाऽभिन्ना वेति तत्रत्यप्रतिसमीक्षणं विना निर्णेतुं दुःशकम् ।

---

यदपि पितुः प्रबोधावधये इत्यादि तत्रायं पुण्यात्मा विधिचैत्यादिविचारसारशब्दकोविदशिरःशेखरः सा० क्षेमन्धरः सकलपवित्रगोत्रपरिवारेण सह प्रभुश्रीजिनदत्तसूरियुगप्रधानप्रकाशितविधिमार्गप्रतिबोधबन्धुर एवेति स्वकृतप्रकृतवादस्थानकमसिद्धसाध्यत्वान्न सम्यक् साधनमिति भवता स्वयमेव सूचितं, सम्यक् साधनं हि स्वसाध्यं साधयत्येवेति ॥"—प्रबोधोदयोपान्त्ये II.

१ चन्द्राग्नि-मुनि-भूसंख्ये वत्सरे सुदि चाश्विने ।
चन्द्रेणोदयपूर्वेण दशम्यां विशदीकृतः ॥ C.

२ 'अनुमल्लवादिनं तार्किकाः'—हैम० २।२।३९

३ "श्रीवीरवत्सरादथ शताष्टके चतुरशीतिसंयुक्ते ।
जिग्ये स मल्लवादी बौद्धांस्तद्व्यन्तरांश्चापि ॥"—प्रभा० पृ० ७४.

ले. सं. १२०१　　न्यायप्रवेशटीका । हरिभद्रसूरिः　　क्र. २३

मूलमात्रेयं कृतिर्दिङ्नागनामधेयस्य बौद्धाचार्यस्य । टीकाकारस्तु जैनेषु महामान्यश्चतुर्दश-शतप्रकरणकृत्त्वेन सुप्रसिद्धो विरहाङ्को हरिभद्रसूरिः, यस्य समयनिर्णयार्थं नैके विद्वांसो विवदन्ते । वि. सं. ५८५ वर्षेऽस्य सूरिवर्यस्य स्वर्गमनं समजनीति प्राचीनानां मतम्, आधुनिकैस्तु विक्रमीयाष्टम-नवमशताब्दीमध्यकालीनत्वं स्वीक्रियते (पृ. १८) । अचिरेण प्राकट्यं नेष्यतेऽयं ग्रन्थोऽनया संस्थया ।

[पं. सं. ११६९]　　न्यायप्रवेश[टीका]पञ्जिका । [पार्श्वदेवगणिः]

क्र. २४४ [P.P. ११८१]

इयं पूर्वसूचितायाष्टीकायाः पञ्जिका टीकया सार्कं प्रसिद्धिमानेष्यतेऽनया संस्थया । पञ्जिकाकारः शीलभद्रसूरिशिष्यधनेश्वरसूरिशिष्यः पूर्वं पार्श्वदेवनाम्ना प्रसिद्धो विशेषावस्थायां तु श्रीचन्द्रसूरिनाम्ना प्रथितो यस्य कृतिसमुदितिः पूर्वं (पृ. २१) सूचिता ।

तत्त्वसङ्ग्रहः । [शान्तरक्षितः]　　क्र. १२०

तत्त्वसङ्ग्रहपञ्जिका । कमलशीलः　　क्र. ८

सूचितं खल्वनया संस्थया पञ्जिकासमेतोऽयं ग्रन्थो मुद्रापयितुमारब्धः, स चाचिराद् दृष्टिगोचरीकरिष्यते विद्वद्वृन्देन ।

ले. सं. ११९४　　प्रमाणान्तर्भावः　　क्र. ६

H. प्रतिप्रान्तं पत्तनीयसूच्युल्लेखं च दृष्ट्वा दर्शितं 'प्रमाणान्तरुचि' इति नाम न सम्यक् । जैनग्रन्थावल्यां ही. सूच्याधारेण दर्शिते 'प्रमाणान्तःस्तव' 'बौद्धमीमांसारलन' इति नामनी अपि न समीचीने । तथैव देवभद्र-यशोदेवौ चास्य कर्तारौ न, केवलमस्य लेखकावेताविति प्रतिभाति H. प्रतिप्रेक्षणेन । किञ्च पुस्तकेऽत्र ग्रन्थद्वयं वर्तते, पूर्वं चतुर्दश पत्राणि यावन्मीमांसकदर्शनस्य शाबरभाष्यस्य प्रथमाध्यायस्य प्रथमपादो वर्तते; तदनन्तरं तस्य कुमारिलकृतश्लोकवार्तिकस्य च खण्डनरूपो बौद्धदर्शनानुसारी प्रत्यक्षानुमान-

---

१ 'न्यायप्रवेशकटीका च हारिभद्री सू० टी० ५९७'—बृ०

२ "न्यायप्रवेशशास्त्रस्य सद्वृत्तेरिह पञ्जिका ।
स्वपरार्थं दृब्धा स्पष्टा पार्श्वदेवगणिनाम्ना ॥
ग्रह-रस-रुद्रैर्युक्ते विक्रमसंवत्सरे तु राधायाम् ।
कृष्णायां च नवम्यां फाल्गुनमासस्य निष्पन्ना ॥"—पञ्जिकाप्रान्ते P.
'न्यायप्रवेशकटिप्पनं ११६९ वर्षे श्रीचन्द्रीयम्'—बृ०

३ 'तत्त्वसङ्ग्रहः प्रकृतीश्वरादिनिरासवाच्यो बौद्धः ३७१६'—बृ०

४ "यस्य प्रज्ञाप्रकाशः कवलयति जगच्चक्रमेषा(षो)कलंकः
सत्यार्थं (?) वा विधातुं यदपर उदयी नासमर्थोकलंकः ।
तन्नत्वा स्वार्थसंपत्सुहितमनुपमो मंहु(जु)वाग् यो न दीनः
प्रत्यक्षं चानुमा धे(चे)त्यत उदितमिदं येन तुल्यो नदीनः ॥"
—प्रमाणान्तर्भावप्रारम्भे H.

प्रमाणद्वयसाधकः शाब्दोपमानार्थापत्त्यभावाख्यप्रमाणचतुष्टयान्तर्भावसंसाधकः परिच्छेदचतुष्टयोपेतोऽयं प्रमाणान्तर्भावनामधेयो बौद्धन्यायग्रन्थः । बृ. दर्शितं 'अपौरुषेयवेदनिराकरणं प्रत्यक्षानुमानाधिकप्रमाणनिराकरणं च यशोदेवसाधुकृतम्' नास्माद् भिन्नं प्रतिभाति । श्रीहर्षस्य नामग्रहणादयं ग्रन्थकारस्तत्समकालीनोऽथवा तदुत्तरकालीन इति स्पष्टम् ।

## नैयायिकग्रन्थाः ।

ले. सं. १२०८　　न्यायमीमांसा (?)　　क्र. २४२

अस्य ग्रन्थस्य सम्यङ् नाम नावबुध्यते । ही. सूच्यां 'प्रमाणप्रमेयन्याय' इति नाम दर्शितम् । न्यायदर्शनभाष्यस्य काचिद् व्याख्या प्रतिभाति. व्याख्यातुर्नाम नावगम्यते ।

भाष्यवार्तिकटीका । अनिरुद्धः　　क्र. ५३(१)

इयं भाष्यवार्तिकटीकाविवरणपञ्जिकानाम्ना प्रान्तोल्लेखे दर्शिता । भाष्यं त्वत्र न्यायदर्शनभाष्यं ज्ञायते । अनेन पण्डितेन विहिता भट्टिकाव्यटीकाऽत्र दर्शिता । सुप्रसिद्धा साङ्ख्यसूत्रवृत्तिश्चास्य कृतिर्ज्ञायते ।

न्यायमञ्जरीग्रन्थिभङ्गः । चक्रधरः　　क्र. ३२५(२)

इयं न्यायमञ्जरी जयन्तभट्टकृता गौतमसूत्रतात्पर्यवृत्तिरवबुध्यते । तस्या ग्रन्थीनां विषमपदानां भङ्क्ताऽयं चक्रधरो भट्टशङ्करात्मज इत्यतोऽधिकं नावगतम् । अस्मिन्नश्वघोषस्य राज्यपालनाटककर्तृत्वं प्रादर्शि ।

[3]श्रीकण्ठन्यायटिप्पनकम्　　पृ. ४८

सूचितं खल्वेतदुदयनविरचिताया न्यायतात्पर्यपरिशुद्धेः टीकारूपम् ।

[3]न्यायालङ्कारटिप्पनम् । अभयतिलकोपाध्यायः　　पृ. ४७

पूर्वोक्तायाः श्रीकण्ठवृत्तेरेतट्टिप्पनं पञ्चप्रस्थन्यायतर्कव्याख्येति संज्ञितम् । टिप्पनकारोऽभयतिलकोपाध्यायो चतुर्दशशताब्दीप्रारम्भे विद्यमान आसीत् । सं. १३१२ वर्षेऽनेन

---

१ प्रमाणान्तर्भावे शाब्दप्रमाणान्तर्भावः प्रथमः परिच्छेदः ।—H. प. १८
उपमानान्तर्भावो द्वितीयः परिच्छेदः ।—H. प. १९
प्रमाणान्तर्गतौ तृतीयोऽर्थापत्तिपरिच्छेदः ।—H. प. २२
इत्यद्व(द्ध)० प्रमाणान्तरुचिः( र्भावः ) समाप्तः ।—H. प. २६

२ "अथ कालान्तरत्वेन युक्तः सोऽर्थः प्रसाध्यते ।
कालान्तरस्थितिर्नैव श्रीहर्षादेः प्रसिध्यति ॥"—H. प. १६

३ 'न्यायतर्कसूत्रं (१) भाष्य (२) वार्तिक (३) तात्पर्यटीका (४) तत्परिशुद्धि (५) न्यायालङ्कारवृत्ति (६) पञ्चप्रस्थन्यायतर्काणि (क्रमशः) अक्षपाद–वात्स्यायन–भारद्वाज–वाचस्पति–उदयन–श्रीकण्ठ–अभयतिलकोपाध्यायकृतानि षडपि ५३००० ।'—बृ०

"न्यायसूत्र–भाष्य–न्यायवार्तिक–तात्पर्यटीका–तात्पर्यपरिशुद्धि–न्यायालङ्कारवृत्तयः क्रमेणाक्षपाद–वात्स्यायनोद्योतकर–वाचस्पति–श्रीउदयन–श्रीकण्ठाभयतिलकोपाध्यायविरचिताः ५४००० ।"
—षड्दर्शनसमुच्चयटीकायां गुणरत्नसूरिः ।

विरचिता हैमसं० द्व्याश्रयस्य वृत्तिरत्र दर्शिता। सं. १३१२ वर्षेऽनेन चन्द्रतिलकोपाध्यायस्याभयकुमारचरित्रं संशोधितम्। उपदेशमालाबृहद्वृत्तिप्रान्ते प्रशस्तिश्चैनेन विनिर्मिताऽत्र (पृ. ३६) सूचिता। अस्या व्याख्यायाः संशोधको लक्ष्मीतिलकोपाध्यायोऽस्य विद्यागुरुः, जिनेश्वरसूरिश्चास्य दीक्षागुरुरिति सूचितमेतत्प्रान्ते।

वैशेषिकग्रन्थाः।

पदार्थधर्मसङ्ग्रहव्याख्या क. ९६

व्याख्यातुर्नाम नोपलभ्यते। कन्दली–किरणावलीभ्यां भिन्नेयं कदाचिद् व्योमशिवाचार्यकृता व्योममतिः सम्भवेत्।

वैशेषिकवृत्तिः। चन्द्रानन्दः पृ. ४५

न्यायकन्दलीटिप्पनम्। नरचन्द्रसूरिः क. १९(१)

टिप्पनकारोऽयं जैनाचार्यो हर्षपुरीयगच्छीयमलधारिदेवप्रभसूरिशिष्यस्त्रयोदशशताब्युत्तरार्धे विद्यमान आसीत्। सुप्रसिद्धमन्त्रिवस्तुपालस्याभ्यर्थनयाऽनेन कथारत्नसागरो निर्मितः। एतद्व्यतिरिक्ता अनर्घराघवटिप्पनम्, ज्योतिःसारः, प्राकृतदीपिका (प्रबोधः) इत्याद्या एतदीया अनल्पग्रन्थास्तत्तच्छास्त्रेष्वस्य वैदुष्यमुद्बोधयन्ति। सं. १२७१ वर्षेऽस्यैवादेशात् पं०गुणवल्लभेन समर्थिता व्याकरणचतुष्कावचूरिरत्र (पृ. ३६) प्रदर्शिता। देवप्रभसूरीयं पाण्डवचरित्रम्, उदयप्रभसूरीयं धर्माभ्युदयकाव्यं चानेन संशोधितम्। सं. १२८८ वर्षे प्रस्तुतसूरेरचितानि प्रशस्तिरूपाणि वस्तुपालस्तुतिकाव्यानि गिरिनारगिरौ शिलालेखे वर्तन्ते। मं. वस्तुपालप्रार्थनयाऽलङ्कारमहोदधिविरचयिता नरेन्द्रप्रभसूरिरस्य शिष्यः।

द्रव्य (?) प्रकाशः। रामचन्द्रः पृ. ५२

ग्रन्थस्य नाम सम्यग् नावगम्यते, तथापि वैशेषिकन्यायानुसारीति प्रतिभाति। अभिधेयाभिधायकसूचकश्लोकोत्तरार्धे प्रकाश इत्येतावदेव नाम दृश्यते।

द्रव्यप्रच्छकः (?)। रामचन्द्रः पृ. ५२

अयमपि पूर्ववद् वैशेषिकमतानुसारी स्फुटसंज्ञाविहीनः।

साङ्ख्यग्रन्थः।

साङ्ख्यसप्ततिवृत्तिः (माठरवृत्तिः ?) क. ९३(२)

माठरवृत्तिस्तु साम्प्रतं मुद्रिता, तस्याश्च प्रमाणं न महद्, इयं तु महती; इत्यत इयं काचिदन्याऽन्यकृता सम्भवेत्।

---

१ "द्व्याश्रयटीकाकारी द्विव्याकरणः सुदृष्टसाहित्यः।
सुकविरभयतिलकगणिश्चाशोधयतामिदं शास्त्रम्॥"
—अभयकुमारचरित्रे चन्द्रतिलकोपाध्यायः।

२ "व्योमशिवाचार्यकृता टीका व्योममतिर्मता।
सा स्यान्नव सहस्राणि ×××× ॥"—षड्दर्शनसमुच्चये राजशेखरसूरिः।

३ "टिप्पनमनर्घराघवशास्त्रे किल टिप्पनं च कन्दल्याम्।
सारं ज्योतिषमद्भद् यः प्राकृतदीपिकामपि च॥"
—न्यायकन्दलीपञ्जिकायां राजशेखरसूरिः।

४ 'क्रियते रामचन्द्रेण प्रकाशोऽयं बुधप्रियः।'—पृथक् पत्रे

## वेदान्तग्रन्थौ ।

### इष्टसिद्धिः । विमुक्तात्माचार्यः　　　　क्र. १४०(२)

इयमपूर्णरूपा प्रथमाध्यायात् किञ्चिदधिकाऽत्र दृश्यते । बर्नेलसूचिपत्रे (पृ.९५) सूचितोऽयं ग्रन्थः । मधुसूदनेनाद्वैतसिद्धावस्य नाम गृहीतम्, आनन्दज्ञानेन चास्य वाक्यानि स्वतर्कसङ्ग्रह उद्धृतान्यवलोक्यन्तेऽतोऽस्य प्राचीनतेति स्पष्टम् ।

### खण्डनखण्डखाद्यटीका ( शिष्यहितैषिणी )　　क्र. २२५ [ P. P. ५।२९ ]

विद्यासागरीव्याख्योपेतस्य मुद्रितखण्डनखण्डखाद्यस्य प्रस्तावनायां लक्ष्मणशास्त्रिणा शिष्यहितैषिण्याः कर्ता पद्मनाभः सूचितः, किन्त्वस्याः प्रान्तनिरीक्षणेऽनुभवस्वरूपो व्यज्यते स चानुभूतिस्वरूपाचार्यः सम्भाव्यते । 'P. P. ५।३०' इत्यत्र मुद्रितो 'व्योम्नीवाम्बभवस्वरूप–'इति पाठः सम्यग् न भाति ।

## सर्वदर्शनसङ्ग्रहः ।

### सर्वसिद्धान्तप्रवेशः　　　　क्र. २९३(३)

षण्णामपि दर्शनानां स्वरूपप्रतिपादकोऽयं ग्रन्थो जिनेश्वरप्रणामरूपमङ्गलकरणाज्जैनाचार्यकृत इत्यनुमीयते । त्रयोदशशताब्द्युत्तरार्धलिखितपुस्तिकायामागतत्वादस्य रचना ततः पूर्वमिति स्फुटम् ।

## जैनद्रव्यानुयोगः ।

### ले. सं. १२२२　　कम्मपयडीसंग्रहणीटीका　　क्र. २७७

इयं सुप्रसिद्धायाः शिवशर्मसूरिरचितायाः कर्मप्रकृतेश्चूर्णिः प्रतिभाति ।

### कर्मप्रकृतिचूर्णिविशेषवृत्तिः　　　　क्र. १७८

कर्मप्रकृतिप्राभृतसङ्ग्रहणीचूर्णिपदविषयकटिप्पनकरूपेयं रचयितुर्नामविहीनात्र विलोक्यते; तथाप्यन्यत्र मुनिचन्द्रसूरिकृतं टिप्पनं सूचितं तदेवैतत् सम्भाव्यते । अयं मुनिचन्द्रसूरिरनेकान्तजयपताकावृत्तिटिप्पनादेर्विधाता सं. ११७८ वर्षे स्वर्गभाग् ज्ञायते ( पृ. २५ ) ।

### शतकवृत्तिः । मलधारिहेमचन्द्रसूरिः　　क्र. २८४ [ P. P. ४।१३० ]

२८६ क्रमाङ्के शतकचूर्णिनाम्ना दर्शिताऽपीयमेव वृत्तिः प्रतिभाति । २३२२ श्लोकमिता शतकचूर्णिस्तु साम्प्रतं मुद्रिता । शतकसूत्रकारः शिवशर्मसूरिरत्यन्तप्राचीनः । वृत्तिकारोऽयं द्वादशशताब्द्युत्तरार्धे सिद्धराजादिसत्कृत आसीदित्यन्यत्र ( पृ. ३९ ) सूचितम् ।

### ले. सं. १२११　सि(सं)त्तरीटिप्पनम । रामदेवगणिः　　क्र. ३१९

---

१ 'कर्मप्रकृतिचूर्णिटिप्पनकं मुनिचन्द्रीयम् १९२० ।'—बृ०

२ 'बृहच्छतकवृत्तिर्मलधारिहेमचन्द्रीया ३७४० ।'—बृ०

३ 'सत्तरिटिप्पनकम् खरतररामदेवगणिकृतम् गाथा ५४७ ।'—बृ०

चन्द्रर्षिमहत्तरविरचितं मूलं मलयगिरिरचितया वृत्त्या समेतं मुद्रितम् । टिप्पनमेतत् प्राचीनाश्चूर्णीरनुसृत्य व्यधायीत्येतत्प्रान्ते प्रोक्तम् । टिप्पनकारोऽयं जिनवल्लभसूरेः शिष्यः, यस्मादन्यदपि षडशीतिटिप्पनकमग्रे दर्शितम् । द्वादशशताब्द्या उत्तरार्धेऽस्य रचना सम्भाव्यते ।

ले. सं. १२४६ षडशीतिटिप्पनकम् । रामदेवगणिः पृ. ४५

अस्य मूलं जिनवल्लभसूरिविरचितं टीकाद्वयोपेतं मुद्रितम् । वस्तुविचारसारेत्यस्यैवापरं नाम । प्रा० टिप्पनकर्ताऽयं मूलकारस्यैव शिष्य इत्यत्र गदितम् । पूर्ववदस्यापि रचना द्वादशशताब्द्या उत्तरार्धेऽनुमीयते ( सं. ११७३ वर्षे ? ) । सं. १२९५ वर्षे सुमतिगणिरिमं गणिनं सूक्ष्मार्थसार-प्रकरणवृत्तिकृत्त्वेन दर्शयामास । कागदपत्रात्मिकेयं प्रतिः प्राचीनाऽथवाऽत्र दर्शितो लेखन-संवत्सरः प्राचीनादर्शस्येति निर्णेतुं न साधनम् ।

---

जीवसमासः क्र. ३०९(१)

जीवाजीवादिस्वरूपप्रतिपादकोऽज्ञातकर्तृनामाऽयं प्राचीनो ग्रन्थः, यतोऽस्य शीलाङ्काचार्य-मलधारिहेमचन्द्रकृते वृत्ती उपलभ्येते । सं. ११६४ वर्षे स्वयं मलधारिहेमचन्द्रसूरिणा लिखिता सवृत्तिकस्यास्य स्तलपत्रीया प्रतिः स्तम्भतीर्थे विद्यते 'P. P. ११९८' इत्यत्र सूचिता ।

ले. सं. १२२२ विभत्तिवियारो( विचारमुखप्रकरणम् ) । अमरचन्द्रसूरिः क्र. २४९(२)

कोऽयममरचन्द्रसूरिरिति न निर्णीयते, नागेन्द्रगच्छीयः सम्भवेत् ।

वृ. सं. ११३९, ले. सं. १२०१ सङ्ग्रहणीवृत्तिः । शालिभद्रसूरिः क्र. ९८,१७७(१) [ P. P. ५।४१,१३३ ]

मूलमात्रेयं जिनभद्रगणिक्षमाश्रमणकृता मलयगिरिविहितवृत्तियुता मुद्रिता । अयं वृत्तिकारः थारापद्रपुरीयगच्छीयपूर्णभद्रसूरिशिष्य इत्याद्यत्र प्रोक्तम्; 'P. P. ५।१३२-३' इत्यत्र शालि-भद्रस्थाने 'शीलभद्र' इति दर्शितम्, तन्न सुष्टु । सं. ११२२-२५ वर्षे प्रतिक्रमणसूत्रपद-विवृति-रुद्रटालङ्कारटिप्पनकारो नमिसाधुरस्य शिष्यो ज्ञायते ।

सङ्ग्रहणीवृत्तिः ( हारिभद्री ) क्र. २६८(३)

मूलं प्रागुक्तं तदेव । वृत्तिकारोऽयं कैश्चिच्चतुर्दशशतप्रकरणकारः प्राचीनो हरिभद्रसूरिरित्य-न्यत्रोल्लिखितः, किन्तु सिद्धराजराज्ये विद्यमानो बृहद्गच्छीयमानदेवसूरिशिष्यजिनदेवोपाध्यायस्य शिष्योऽयमपरो हरिभद्रसूरिः सम्भाव्यते । येन सं. ११७२ वर्षे बन्धस्वामित्व-षडशीत्यादि-कर्मग्रन्थवृत्तिः, मुनिपतिचरित-श्रेयांसचरिते, सं. ११८५ वर्षे प्रशमरतिवृत्तिरित्यादि विहितम्; स एवास्या वृत्तिकार इत्यस्मदाकूतम् ।

---

१ 'वस्तुविचारसाराख्यबृहत्षडशीतिकस्य जिनवल्लभस्य वृत्तिः प्राकृता रामदेवी ८०५ ।'—बृ०

२ "स हि भगवान् ( जिनवल्लभसूरिः ) यस्य शिरसि स्वहस्तपद्मं ददाति, स जडोऽपि रामदेवगणिरिव वदनकमलावतीर्णभारतीकोऽत्यन्तदुर्बोधसूक्ष्मार्थसारप्रकरणवृत्तिं विरचयति ।"
—गणधरसार्धशतकवृत्तिः H.

३ "बृहत्सङ्ग्रहणीवृत्तिः ११३९ वर्षे शालिभद्री २८००-२५०० ।'—बृ०

## जैनगणितानुयोगः ।

[1]क्षेत्रसमासवृत्तिः । हरिभद्रसूरिः क्र. २६८(१) [S. २।८०]

वृत्तिकारोऽयं प्राचीनो हरिभद्रसूरिरित्यन्यत्र दर्शितम्, किन्त्वस्मदभिप्रायेण पूर्वं सूचितः सङ्ग्रहण्यादिवृत्तिकारोऽपरोऽयं सूरिः सम्भाव्यते । सं. ११८५ वर्षे चास्या रचनेति प्रान्तश्लोकार्थः प्रस्फुरत्यस्मच्चित्ते ।

क्षेत्रसमासवृत्तिः क्र. ४३,२८५(२)

इयं प्राचीना बृहद्वृत्तिरज्ञातकर्तृनामा सिद्धसूरीयैवान्या वेति न निर्णीयते ।

वृ. सं. ११९२ [3]क्षेत्रसमासवृत्तिः । सिद्धसूरिः क्र. २३५ [P. P. ३।१९३]

मूलं जिनभद्रगणिक्ष० कृतं मलयगिरिविरचितवृत्तिसमेतं मुद्रितम् । अयं वृत्तिकार उपकेशगच्छीयदेवगुप्तसूरिशिष्यो गुरुभ्रातृयशोदेवोपाध्यायादधीतशास्त्रं स्वं पर्यचाययत् (पृ. ३९) ।

## जैनचरणकरणानुयोगः ।

पञ्चवस्तुकम् । हरिभद्रसूरिः क्र. २१९ [P. P. २।७१;५।१६१]

स्वोपज्ञवृत्तिसमेतमेतत साम्प्रतं मुद्यमाणं श्रूयते ।

साधुप्रतिमाप्रकरणम क्र. ८९

अज्ञातकर्तृनामैतद हरिभद्रसूरिकृतादेतन्नामकपञ्चाशकात तु विषयेन समम पि भिन्नं प्रतिभाति ।

ले. सं. ११६९ अणुव्वयविही क्र. २८०(१)

प्राकृतभाषामयस्यास्य कर्तृनाम न व्यज्यते ।

ले. सं. ११६९ संज(य)माख्यानकम् क्र. २८०(४)

इदं पुस्तकं विजयसिंहाचार्याणामिति सूचितम्, कर्ता क इति न ज्ञायते ।

संयममञ्जरी । [महेश्वरसूरिः] क्र. ३०९(७) [P. P. १।५०]

अपभ्रंशभाषायां लब्ध्यप्यतिमनोहरेयं कृतिरस्या ग्रन्थमालाया भविष्यदत्तकथाग्रन्थस्य पीठिकायां (पृ. ३७) प्रदर्शिता । अस्याश्च वृत्तिर्हेमहंससूरिशिष्यकृता 'P. P. ४।१२१' इत्यत्र सूचिता । अयं महेश्वरसूरिः कदाऽऽसीत् कस्य शिष्यो वेत्यादि न व्यज्यते ।

[वृ. सं. ११७६] [4]पिण्डविशुद्धिवृत्तिः । यशोदेवसूरिः क्र. २७४

अस्या मूलं जिनवल्लभसूरिकृतम् । वृत्तिकारोऽयं स एव चान्द्रकुलीनचन्द्रसूरिशिष्यो ज्ञायते येन सं. ११७२ वर्षे प्रथमपञ्चाशकचूर्णिः, सं. ११७४ वर्षे ईर्यापथिकी-चैत्यवन्दन-वन्दनकचूर्णिविवरणादि, सं. ११८० वर्षे पाक्षिकसूत्रवृत्तिः, सं. ११८२ वर्षे प्रत्याख्यानस्वरूपमित्यादि च प्रणीतम् ।

सं. ११९० धम्मविही । नन्नसूरिः क्र. ३३२

---

१ 'लघुक्षेत्रसमासवृत्तिर्हरिभद्रसूरीया ५११ ।'—बृ०

२ "पञ्चाशीतिकवर्षे विक्रमतो व्रजति शुक्लपञ्चम्याम् ।
शुक्रस्य शुक्रवारे पुष्ये शस्ये च नक्षत्रे ॥"—क्षेत्र० S. २।८०

३ 'बृहत्क्षेत्रसमासवृत्तिः सिद्धसूरीया ११९२ वर्षे ३००० ।'—बृ०

४ 'पिण्डविशुद्धिसूत्रं जैनवल्लभम् गाथा १०३ । वृत्तिः ११७६ वर्षे यशोदेवी २८०० ।'—बृ०

अयं दशदृष्टान्तविभूषितो ज्ञानदर्शनगुणविशोधकः प्राकृतग्रन्थः समस्तशास्त्रेभ्य उद्धृत्य विहित इति स्वयं कर्त्राऽत्र दर्शितम् । अस्य रचना-लेखनसमयः प्रायः समान एव विलोक्यते ।

सुखबोधा सामाचारी । श्रीचन्द्रसूरिः क्र. १७ [ P. P. ५।६४ ]

अस्याः कर्तुर्नाम धनेश्वरसूरिरिति दलालेन दर्शितम्, किन्त्वन्यत्र धनेश्वरसूरिशिष्य-श्रीचन्द्रसूरेः कर्तृत्वं प्रदर्शितमुपलभ्यते, तदेव सम्यक् प्रतिभाति । अयं श्रीचन्द्रसूरिः स एव यस्य सामान्यावस्थायां पार्श्वदेवगणिनामासीत् । द्वादशशताब्युत्तरार्धे त्रयोदशशताब्दीप्रथमांशे विद्यमानोऽयमत्र ( पृ. २१ ) परिचायितः ।

सामाचारी । तिलकाचार्यः क्र. १८५

इयं पूर्णिमापक्षीया सम्भाव्यते, यतोऽयं तिलकाचार्यश्चन्द्रप्रभसूरिसन्तानीयः पूर्णिमापक्षीय-स्त्रयोदशशताब्द्युत्तरार्धे चतुर्दशशताब्दीप्रारम्भे च विद्यमानो विज्ञायते, यस्यान्ये ग्रन्थाः पूर्वं ( पृ. २० ) सूचिताः । क्र. ७(३) इत्यत्र सूचिता साधुसामाचारी तु कल्पसूत्रसम्बद्धा मुद्रिताऽऽभाति ।

[ वृ. सं. १२७७[2] ] सम्यक्त्वप्रकरणवृत्तिः । चक्रेश्वरसूरि-तिलकाचार्यौ पृ. ५५

मूलं पूर्णिमापक्षप्रकाशयितृ-प्रमेयरत्नकोशादिविनिर्मातृचन्द्रप्रभसूरिविरचितं दर्शनशुद्धीत्य-परनाम्ना प्रसिद्धं देवभद्रसूरिकृतवृत्त्या समेतं मुद्रितं तदेव ज्ञायते । अस्या वृत्तेः प्रारम्भश्चक्रेश्वर-सूरिणा कृतः, किन्तु दैववशादनिर्वाहितायामेवास्यां दिवं गतेऽस्मिन् तत्प्रशिष्यतिलकाचार्येणेयं निर्वाहिता । तिलकाचार्यस्तु पूर्वोक्त एव ।

श्रावकदिनकृत्यवृत्तिः क्र. १५ [ P. P. १।१३,४१ ]

तपागच्छीयजगच्चन्द्रसूरिशिष्यदेवेन्द्रसूरेः कृतिरियमित्यन्यत्र तन्निर्मितग्रन्थानां नामावल्यां प्रदर्शिता । यस्य स्वर्गमनं सं. १३२७ वर्षे इति गुर्वावल्यादावुक्तम् ।

सं. १३१३ श्रावकधर्मप्रकरणम् । जिनेश्वरसूरिः क्र. ३०१(६)

अस्य रचना प्रह्लादनपुरे । जावालिपुरे सं. १३१७ वर्षे रचिताऽस्य बृहद्वृत्तिरपि श्रूयते । अयं सूरिवर्यो जिनपतिसूरिशिष्य इति स्वत्र सूचितम् । विशेषवृत्तान्तस्तु सोममूर्तिगणिना

---

१ "सिरिसीलभद्दसूरिचरणसरसूरिरिसससिरिचंदसूरिसमुद्धरिया सू(सु)हबोहसमायारी समत्ता ।"
P. P. ५।६४

'सामाचारी सुबोधा सर्वानुष्ठानगोचरा धनेश्वरशिष्यश्रीचन्द्रीया १४५०-१२२१ ।'—बृ०

२ 'सम्यक्त्ववृत्तिः सूत्रकारचन्द्रप्रभसूरिसन्तानीयश्रीतिलकीया १२७७ वार्षिकी ८००० ।'—बृ०

३ "सारवृत्तिदशाः कर्मग्रन्थदीपास्तमोहराः । तस्य प्रवचनावासे भान्ति प्रेष्ठार्थदर्शकाः ॥
नानास्तवनप्रकरणरत्नानि समुद्धृतानि समयाब्धेः । पुरुषोत्तमेन तेनालङ्कृतये शासनस्यासन् ॥
पञ्चाशिका सिद्धविचारवाच्या भाष्याणि वृत्तं च सुदर्शनायाः ।
उपासकानां दिनकृत्यसूत्रवृत्ती च टीकाऽपि च धर्मरत्ने ॥
देवेन्द्राङ्का श्राद्धयामाद्यभङ्गिग्रन्थाद्याऽन्याऽप्यस्त्यनेकाऽस्य सृष्टिः ।
एवं नानाग्रन्थसोपानपङ्क्त्या स्वारोऽहं तन्मुक्तिसौधं व्यधात् सः ॥"
—गुर्वावल्यां मुनिसुन्दरसूरिः ।

विहितात् 'जिनेश्वरसूरिदीक्षाविवाहवर्णनरास(गृ.)' ग्रन्थात्, खरतरगच्छपट्टावल्यादेश्चोपलभ्यते। 'सट्ठिसय'नामकप्रकरणविधातुर्मरुकोट्टनिवासिनो नेमिचन्द्रभाण्डागारिकस्यायं पुत्र आसीत्। अस्य जन्म सं. १२४५ वर्षे, दीक्षा सं. १२५५ वर्षे, सूरिपदं सं. १२७८ वर्षे, स्वर्गमनं सं. १३३१ वर्षे ख० दर्शितम्। 'वीरप्रभ'इत्यस्य दीक्षाकालिकं नामात्र (पृ. २) सूचितम्। अस्य जिनप्रबोधसूरि–जिनरत्नसूरि–लक्ष्मीतिलकोपाध्यायाभयतिलकोपाध्याय–चन्द्रतिलकोपाध्याय–देवमूर्त्युपाध्याय–पूर्णकलशगणि–विवेकसमुद्रगणि–सर्वराजगण्याद्योऽनेके विद्वांसो ग्रन्थकाराः शिष्या आसन्। एतैरन्यैश्चैतदाज्ञाधारिभिर्जिनपतिसूरिशिष्यैर्जिनपालोपाध्याय–पूर्णभद्रगणि–सुमतिगण्यादिभिः स्वस्वग्रन्थेषु प्रस्तुतोऽयं सूरिः प्रस्तुतः। अस्य बीजापुरागमनादिवृत्तान्तः सङ्घपुरस्थशिलालेखादभयकुमारचरितप्रान्तप्रशस्तितश्च प्रकटमवगम्यते, विस्तरभयान्नात्र विविच्यते। क्र. १६२(२), १६८(२) इत्यत्र निर्दिष्टं 'सावगधम्म'पुस्तकं तु हरिभद्रसूरीयप्रथमपञ्चाशकाद् भिन्नं न विभाव्यते।

सम्यक्त्वालङ्कारः क्र. ६१

अस्य कर्ता विवेकसमुद्रगणिरित्यन्यत्र (ही.) सूचितम्। जिनेश्वरसूरेः संस्मरणमकार्यतानेनेति सम्भाव्यते स एव सं. १३३४ वर्षे पुण्यसारकथाकारोऽस्यापि कर्ता।

## जैनोपदेशग्रन्थाः।

उपदेशपदम्। हरिभद्रसूरिः क्र. २८,४८,१७७(२) [P. P. १।३४;३।४६]

मुनिचन्द्रसूरिकृतटीकासमन्वितं गूर्जरानुवादसहितमपूर्णरूपमेतन्मुद्रितम्। अयं ग्रन्थकारश्चतुर्दशशतप्रकरणप्रणेतृत्वेन विरहाङ्कत्वेन च सुप्रसिद्धः स एव।

टी. सं. १०५५ उपदेशपदटीका। वर्धमानसूरिः क्र. ४८,५१

पूर्वसूचितस्येयं टीका। टीकाकारोऽयं चैत्यवासिविजेतृत्वेन, सं. १०८० वर्षेऽष्टकवृत्त्यादिकर्तृत्वेन च सुप्रसिद्धस्य जिनेश्वरसूरेः, सं. १०८० वर्षे बुद्धिसागरव्याकरणविधातृत्वेन प्रसिद्धस्य बुद्धिसागरसूरेश्च गुरुर्ज्ञायते। उपमितिभवप्रपञ्चानामसमुच्चयः, उपदेशमालाबृहद्वृत्तिश्चास्य कृतिर्ज्ञायते। यस्य वचनादस्याः प्रथमा प्रतिराम्रदेवमुनिनाऽलेखि, येन च वृत्तिकारस्य स्तुतिः प्रान्ते वर्णिता स पार्श्विलगणिर्नागेन्द्रगच्छीयो ज्ञायते; यत्कृतप्रतिमाप्रतिष्ठायाः शकसं. ९१०=वि. सं. १०४५ वर्षीयो लेखः कटीग्रामे उपलभ्यते।

नाणाचि(इ)त्तम्। क्र. ३०९(५) [P. P. १।४८]

एतद् विरहाङ्कहरिभद्रसूरिकृतिगणनायां गण्यते।

ले. सं. १३४५ धर्मोपदेशमाला क्र. २५(२) [P. P. १।४७,५५, ६४,७०;५।८०]

इयं कृष्णर्षिशिष्यजयसिंहसूरिणा विरचितेत्यन्यत्र समसूचि।

धर्मोपदेशमालाप्राकृतटीका[1] क्र. ११२

धर्मोपदेशमालावृत्तिः[2]। जयसिंहाचार्यः पृ. ५३

आराधना क्र. २५१(३)

---

१ 'उ(? धर्मो)पदेशमालावृत्तिः प्राकृता कृष्णर्षिशिष्यजयसिंहसूरिकृता ९१३ वर्षे।'—बृ०

२ 'धर्मोपदेशमालालघुवृत्तिः ९१५ वर्षे जयसिंहीया।'—बृ०

प्राचीनगूर्जरकाव्यसङ्ग्रहे मुद्रिताया भिन्नाऽभिन्ना वेयमिति प्रतिदर्शनं विना निर्णेतुमशक्यम् ।

आराधनाकुलकादिप्रकरणपुस्तिका क्र. १९९

अभयदेवसूरिकृतमाराधनाकुलकं 'P. P. १।८४' इत्यत्र दर्शितं तदेव सम्भाव्यते, किन्त्वन्ये के ग्रन्था इति विज्ञातुं न साधनम् ।

ले. सं. ११६९ उपदेशकुलकम् क्र. २८०(३)

'P. P. ३।१०' इत्यत्र दर्शितं तदेवैतदथवाऽन्यदिति न ज्ञायते ।

ले. सं. ११६९ जीवोपदेशपञ्चाशिका क्र. २८०(२)

इयं जिनचन्द्रसूरिकृता सम्भाव्यते ।

[सं. ११२५[1]] ले. सं. १२०७ संवेगरङ्गशाला । जिनचन्द्रसूरिः क्र. १८३

आराधनेत्यपराह्वेयं नवाङ्गवृत्तिकाराभयदेवसूरेरभ्यर्थनया[2] विरचिता । विरचयिता चायं जिनेश्वरसूरेर्मुख्यः शिष्योऽभयदेवसूरेश्च वृद्धसतीर्थ्यः । पाश्चात्यैरनेकैर्ग्रन्थकारैरस्याः कृतेः संस्मरणमकारि[3] । अयं ग्रन्थः खरतरगच्छीयसंस्थया मुद्राप्यत इति श्रूयते । S. २।२८ इत्यत्र ले. सं. १२०३ दर्शितः । अत्रैव वटपद्रकेऽस्य लेखनमिति प्रान्ते सूचितम् ।

---

1 "विक्कमनिवकालाओ समइक्कंतेसु वरिसाण । एक्कारससु सएसु पणवीससमहिएसु ॥ निप्पत्ति संपत्ता एसाराहण त्ति फुडपायडपयत्था ।"—संवेगरंगशालाप्र० C.

'संवेगरङ्गशाला ११२५ वर्षे नवाङ्गाभयदेववृद्धभ्रातृजिनचन्द्रीया १००५३'—बृ०

2 "सिरिअभयदेवसूरि त्ति पत्तकित्ती परं भवणे ।
जेण कुबोहमहारिउविहम्ममाणस्स नरवइस्सेव ।
सुयधम्मस्स दढत्तं निव्वत्तियमंगवित्तीहिं ॥
तस्सब्भत्थणवसओ सिरिजिणचंदमुणिवरेण इमाण ।
मालागारेण व उच्चिणिउ(ऊण) वरवयणकुसुमाइं ॥
मूलसुयकाणणाओ गंथित्ता निययमइगुणेण दढं ।
विविहत्थसोरभभरा निम्मवियाराहणामाला ॥ C.

3 "संवेगरंगसाला न केवलं कव्वविरयणा जेण ।
भव्वजणविम्हयकरी विहिया संजमपवित्ती वि ॥"
—महावीरचरिते गुणचन्द्रगणिः ।

"संवेगरंगसाला विसालसालोवमा कया जेण ।
रागाइवेरिभयभीयभव्वजणरक्खणनिमित्तं ॥"—गणधरसार्धशतके जिनदत्तसूरिः ।

"नर्तयितुं संवेगं पुनर्नृणां नृत्तनृत्यमिव कलिना ।
संवेगरङ्गशाला येन विशाला व्यरचि रुचिरा ॥"—पञ्चलिङ्गीविवरणे जिनपतिसूरिः ।

"पश्चाज्जिनचन्द्रसूरिवर आसीद् यस्याष्टादश नाममालाः सूत्रतोऽर्थतश्च मनस्यासन् सर्वशास्त्रविदः । येनाष्टा(?)दशसहस्रप्रमाणा संवेगरङ्गशाला मोक्षप्रासादपदवी भव्यजन्तूनां कृता । येन जावालिपुरे दू(?)तेन श्रावकाणामग्रे व्याख्यानं 'चीवंदणमावस्सय' इत्यादिगाथायाः कुर्वता सिद्धान्तसंवादाः कथितास्ते सर्वे सुशिष्येण लिखिताः शतत्रयप्रमाणो दिनचर्याग्रन्थः श्राद्धानामुपकारी जातः ॥"
—गणधरसार्धशतकवृत्तौ सुमतिगणिः H.

[ वृ. सं. ११६५ ][1] नवपदप्रकरणबृहद्वृत्तिः । [ यशोदेव उपाध्यायः ]
क्र. ५६ [ P. P. ३।४०; A. ९।१३२ ]

मूलं देवगुप्तसूरिकृतम् , संक्षिप्ता वृत्तिरपि तेनैव विहितेत्यत्र ( पृ. ७ ) सूचितम् । अस्याश्च बृहद्वृत्तेः कर्तुर्नाम-समयादि नात्रोपलभ्यते, तथाप्यन्यतो विज्ञायते । येन सं. ११७४ वर्षे नवतत्त्वविवरणम् , सं. ११७८ वर्षे चन्द्रप्रभचरितम् इत्यादयो ग्रन्था विहिताः, यस्य च पार्श्वे सं. ११९२ वर्षे क्षेत्रसमासवृत्तिकर्ता सिद्धसूरिरधीतवान्[2]; स एवोपकेशगच्छीयदेवगुप्तसूरिशिष्यः पूर्वं धनदेवनामोपाध्यायपदानन्तरं च यशोदेवनामधेयोऽस्याः कर्ता । अस्या रचनाऽणहिल-पाटकपुरे उपकेशीयवीरजिनमन्दिरे समजनि, यत्र चानेनान्याऽपि पूर्वदर्शिता कृतिः कृता ।

[ वृ. सं. ११७० ][3] भववभावनावृत्तिः । मलधारिहेमचन्द्रः क्र. २४६,२९५

'P. P. ११७८,९६' इत्यत्रास्या मूलं सूचितम् । 'P. P. ३।१५५' इत्यत्र तद्ग्रन्थकर्तृप्र-शस्तिश्च प्रदर्शिता । अनेन सूरिवर्येण सं. ११७५ वर्षे विरचिताया विशेषावश्यकवृत्तेः प्रान्ते स्वग्रन्थसूचनायां सवृत्तिकस्यास्यापि नाम समसूचि । सं. ११९१ वर्षे उपदेशमालावृत्तिकर्ता विजयसिंहसूरिः, सं. ११९३ वर्षे मुनिसुव्रतचरित्रकर्ता श्रीचन्द्रसूरिश्चास्यैव शिष्यौ स्वस्वग्र-न्थप्रशस्तावपि संसूचयामासतुरेतद्ग्रन्थान् , वर्णयामासतुश्च सिद्धराजादिराजकसत्कृतस्यैतस्य सूरिवर्यस्यावितथगुणानिति तत्रैव ( P. P. ५।१३,९०,९६ ) विशेषतो द्रष्टव्यम् ।

---

"संवेगरंगशालागुरुभिः सुरविटपिकुसुममालेव ।
शुचिसरसाऽमरसरिदिव यस्य कृतिर्जयति कीर्तिरिव ॥"
—गङ्गपुरमन्दिरशिलालेखः ।

"तस्याभूतां शिष्यौ तत्प्रथमः सूरिराजजिनचन्द्रः ।
संवेगरंगशालां व्यधित कथां यो रसविशालाम् ॥
बृहन्नमस्कारफलं श्रोतृलोकसुधाप्रपाम् ।
चक्रे क्षपकशिक्षां च यः संवेगविवृद्धये ॥"
—अभयकुमारचरित्रे चन्द्रतिलकोपाध्यायः ।

"ततः श्रीजिनचन्द्राख्यो बभूव मुनिपुङ्गवः ।
संवेगरंगशालां यश्चकार च बभार च ॥"—राजगृहशिलालेखे भुवनहितोपाध्यायः ।

1 'एतत्कथाविस्तरस्तु, अस्मत्प्रपञ्चितनवपदवृत्तेरेवावगन्तव्यः ।'
—नवतत्त्वविवरणे ( पृ. ५५ ) यशोदेवोपाध्यायः ।

"उपाध्यायो यशोदेवो धनदेवाद्यनामकः ।
जडोऽपि धार्ष्ट्यतश्चक्रे वृत्तिमेतां सविस्तराम् ॥
एकादशशतसङ्ख्येष्वब्देष्वधिकेषु पञ्चषष्ट्येयम् ।
अणहिलपाटकपुरे सिद्धोकेशीयवीरजिनभवने ॥"
—नवपदवृत्तिप्र० P., A. ९।१३२

'नवपदवृत्तिः ११६५ वर्षे यशोदेवोपाध्यायकृता ९५०० ।'—बृ०

2 "गुरुभ्रातृयशोदेवोपाध्यायज्ञातशास्त्रार्थः ।"—क्षेत्रसमासवृत्तौ सिद्धसूरिः ।

3 'भवभावनावृत्तिः सूत्रकृन्मलधारिहेमचन्द्रीया ११७० वर्षे १३००० ।'—बृ०

उपदेशमालाबृहद्वृत्तिः ( हेयोपादेया ) क्र. २७३,२८९

पृथक् पुस्तकद्वये दर्शिताऽपीयमेकैव ज्ञायते । लेखप्रशस्तिकर्त्रोश्च समयस्त्रयोदश-चतुर्दशशताब्दीरूपः परिगण्यतेऽतो लेखनकालोऽप्यस्याः स एवानुमीयते । मूलमात्रेयं धर्मदासगणिगदिता सिद्धर्षिकृतहेयोपादेयसंज्ञकवृत्तिसमन्विता चैषा मुद्रिता । सिद्धर्षिकृतैव केनापि कथानकैर्योजिताऽन्यत्र च वर्धमानसूरिकृतित्वेन दर्शिता सैवेयं बृहद्वृत्तिः प्रतिभाति ।

[ वि. सं. १२३८[2] ] उपदेशमालावृत्तिः ( दोघट्टी ) । रत्नप्रभसूरिः

क्र. १३४ [ P. P. ३।१६५;५।१२३ ]

पूर्ववत् [3]सिद्धर्षिवृत्तिमनुसृत्यास्या अपि विशेषवृत्ते रचनेति तत्प्रान्तप्रेक्षणादवगम्यते । वृत्तिकारोऽयं सुप्रसिद्धस्य वादिदेवसूरेः शिष्यः, येन सं. १२३३ वर्षे प्रा. नेमिनाथचरित्रं प्रणायि । यस्य च प्रतिभापटुत्वपटहरूपा कृती रत्नाकरावतारिका सुप्रसिद्धा ।

वि. सं. १२४३ प्रश्नोत्तररत्नमालावृत्तिः । हेमप्रभसूरिः क्र. ९०(१)

मूलमात्रेयं विमलसूरिकृता, सं. १४२९ वर्षे देवेन्द्रसूरिविरचितया वृत्त्या समेता च मुद्रिता । अयं वृत्तिकारश्चन्द्रप्रभसूरिसन्तानीयः, जयसिंहनृपतिसत्कृतधर्मघोषसूरितः सूरिपदं लब्धवतो यशोघोषसूरेः शिष्यः । हरिपालमन्त्रिविज्ञप्तेश्चास्या रचनेत्यादि स्वयं वृत्तिकर्त्रा प्रान्ते प्रोक्तमेव । अस्या लेखनप्रशस्तिकारो देवमूर्त्युपाध्यायश्चतुर्दशशताब्दीप्रारम्भे आसीदितीयं कागदपत्रात्मिकाऽपि प्रतिः प्राचीना ज्ञायते ।

[ वि. सं. १२९३[4] ] द्वादशकुलकविवरणम् । जिनपालः क्र. २२(१)

धर्मोपदेशमयान्येतानि द्वादश कुलकानि जिनवल्लभसूरिणा विरचितानि । येन पिण्डविशुद्धि-प्रकरण–सूक्ष्मार्थसिद्धान्तविचारसार(सार्धशतक)—वस्तुविचारसार( षडशीति )—सङ्घपट्टक-धर्मशिक्षा-प्रश्नोत्तरशतक-चित्रकूटीयप्रशस्ति–स्वप्नाष्टकविचाराजितशान्तिस्तव-भावारिवारणस्तोत्र–

१ 'हेयोपादेयेत्यादिकैव केनापि कथाभिर्योजिता ग्रं. १५००,९५०० ।'—बृ०

"कृतिरियं जिन–जैमिनि–कणभुक्–सौगतादिदर्शनवेदिनः सकलग्रन्थार्थविनिगु(पु)णस्य श्रीसिद्धार्थमहावर्धमानाचार्यस्य । श्रीसिद्धर्षिकृता वृत्तिः कथानकैर्योजिता स्वाववोधार्थम् । प्राक्तनमुनीन्द्ररचितैश्चारुभिरुपदेशमालायाः ॥"—उप० P.

२ "विक्रमाद् वसुलोकार्कवर्षे माघे समर्थिता । एकादश सहस्राणि मानं सार्धं शतं तथा ॥"

—P. P. ३।१६८

'दोघट्टी उपदेशमालावृत्ती रत्नप्रभा सं. १२३८ वर्षे अगृत्रा ११११०, सगृत्रा ११८२९ ।'—बृ०

३ "व्याख्यातृचूडामणिसिद्धनाम्नः प्राणेण गाथार्थ इहाभ्यधायि ।"—P. P. ३।१६८

४ "श्रीमत्सूरिजिनेश्वरस्य सुमुनिव्रातप्रभोः साम्प्रतं
शीघ्रं चारुमहाप्रबन्धकवितुर्वाक्यात् समारम्भि यत् ।
तन्निष्ठामधुना ययौ गुणनवादित्यप्रमाणे वरे
वर्षे भाद्रपदे सिते शुभतरे द्वादश्यहे पावने ॥"—द्वा० कु० वि० P.

पोषधविधिप्रकरण-जिनकल्याणकस्तोत्र-जिनचरित्रमयजिनस्तोत्रादयोऽनेके ग्रन्था जग्रन्थिरे। संवेगरङ्गशाला च (पृ. २१) संशोधिता। जैनग्रन्थावल्यां तीर्थङ्करस्थानप्रकरण-पर्यन्तोपदेश-प्रतिक्रमणसामाचारी-रत्नचूडकथा-जिनभद्रीयसङ्ग्रहणीवृत्त्याद्यपि प्रस्तुतसूरिकृतं सूचितम्, किन्तु तत् शङ्कितम्। अनेनाभयदेवसूरिपार्श्वेऽधीत्य चैत्यवासं त्यक्त्वा गृहस्थगेहवसतिः स्वीकृतेति नैकत्रोल्लेख उपलभ्यते (पृ. २)। गणधरसार्धशतकादिग्रन्थकारो जिनदत्तसूरिरस्य शिष्यो गणधरसार्धशतक-चर्चर्यादावस्य भूरिगुणान् प्राशंसत्। सत्तरि-षडशीतिटिप्पनकारो रामदेवगणिरस्य शिष्यः। सट्ठिसयप्रकरणकर्त्रा भां० नेमिचन्द्रेण चित्रकूटीयचामुण्डाऽऽदिप्रतिबोधकस्य प्रस्तुतसूरिवर्यस्य गुणवर्णनगीतानि विहितानि। नागपुरे नेमिनाथजिनालयनिर्माता वैराग्यशतककर्तुः पद्मानन्दकवेर्जनको धनदेवश्रेष्ठी चैत्यवासप्रतिषेधकस्यास्य सूरेर्भक्त आसीत्। गणधरसार्धशतकवृत्त्यादावस्य चरितं विशेषतो दर्शितं द्रष्टव्यम्। अयं सूरिवर्यो द्वादशभिरेतैः कुलकैर्गणदेवश्राद्धेन वाग्जडदेशलोकं प्राबोधयदिति विवृतिकारेण प्रारम्भे प्रोक्तम्। नवाङ्गीवृत्तिकाराभयदेवसूर्यादेशाद् गुणगरिष्ठमेनं सं. ११६७ वर्षे देवभद्राचार्यः (पृ. ४७) सूरिपदे न्यस्तवान्। तदनन्तरं च षण्मासैरस्य स्वर्गमनं श्रूयत इत्येतेषां कुलकानां रचनासमयो द्वादशशताब्द्या उत्तरार्धप्रारम्भरूपोऽथवा पूर्वार्धरूपोऽवसीयते। विवरणकारस्त्वयं जिनपाल उपाध्यायो जिनपतिसूरेः शिष्यः, येन सं. १२६२ वर्षे षट्स्थानकवृत्तिः, सं. १२९३ वर्षे पञ्चलिङ्गीविवरणटिप्पनम्, सं १२९४ वर्षे उपदेशरसायन-चर्चरीविवृती, सनत्कुमारचरित्र-स्वप्नविचाराष्टस्वप्नभाष्यादि विहितम्। विवृतिकर्त्रेदं विवरणं जिनेश्वरसूरिवाक्याद् (पृ. ४०) विहितमिति स्वयमत्र समसूचि।

ले. सं. १३१०　　हितोपदेशामृतम्। परमानन्दसूरिः　　क्र. ३०१(५)

प्राकृतभाषायां पञ्चविंशत्यधिकपञ्चशतगाथाप्रमाणमेतत् पत्रसङ्ख्याया आधिक्येन सवृत्तिकं सम्भाव्यते। अयं परमानन्दसूरिः स्वमभयदेवसूरिशिष्यदेवभद्रसूरेः शिष्यत्वेन परिचाययति स्म। श्रीधरभाण्डारकरेणास्य लेखनसमयो रचनासमयत्वेन निर्दिष्टो न सम्यग्। 'हितोपदेशमालावृत्तिः सूत्रकारप्रभा(?)नन्दभ्रातृपं० परमानन्दीया १३०४ वर्षे ९५००।'—बृ० इत्युल्लेखोऽस्य वृत्तिविषयकः प्रतिभाति।

---

१ "धर्मोपदेशकुलकाङ्कितसारलेखैः श्राद्धेन बन्धुरधियो गणदेवनाम्ना।
प्राबोधयन् सकलवाग्जडदेशलोकं सूर्योऽरुणेन कमलं किरणैरिव स्वैः॥
तानि द्वादश विस्तृतानि कुलकान्यम्भोधिवद् दुर्गमा-
न्यत्यन्तं च गभीरभूरिसुपदान्युन्निद्रितार्थानि च ×× "—द्वा० कु० वि० P.
निमज्जज्जन्तुजातोद्धरणाय गुणः संवेगरससारद्वादशकुलकादिरूपा रज्जुर्येन दत्ता।'
—गणधरसार्धशतकवृत्तौ सुमतिगणिः II.

२ "एवं श्रीजिनवल्लभस्य सुगुरोश्चारित्रिचूडामणे-
र्भव्यप्राणिविबोधने रसिकतां वीक्ष्याद्भुतां शाश्वतीम्।
आदेशाद् गुणविन्नवाङ्गविवृतिप्रस्तावकस्यादरात्
प्रादात् सूरिपदं मुदञ्चितवपुः श्रीदेवभद्रप्रभुः॥—द्वा० कु० वि० P.

[बृ. सं.[1] १५१२] पुष्पमालावृत्तिः। साधुसोमः पृ. ५८

उपदेशमालेत्यपराह्वेयं मूलमात्रा मलधारिहेमचन्द्रसूरिविनिर्मिता गूर्जरानुवादसहिता मुद्रिता। क्र. ३०१(४) इत्यत्र मूलमात्रा दर्शिताऽपि पत्रसङ्ख्याया आधिक्येन सवृत्तिकाऽनुमीयते। अस्याश्च चतुर्दशसहस्रश्लोकप्रमाणा बृहद्वृत्तिः स्वयमेव मूलग्रन्थकर्त्रा सं. ११७५ वर्षे विहिताऽस्त्येव। संक्षिप्ताया अस्यास्तु वृत्तेर्विरचयिता साधुसोमः खरतरगच्छीयजिनभद्रसूरि (पृ.११) शिष्यसिद्धान्तरुचेः शिष्यः, येन सं. १५१९ वर्षे चरित्रपञ्चकवृत्तिरपि विहिता (पृ. १३)।

धर्मोपदेशः। [लक्ष्मी]वल्लभः पृ. ५६

यद्यपि दलालेनास्य कर्तुर्नाम वल्लभ इति १०७ श्लोकप्रमाणं च दर्शितम्, किन्तु खरतरगच्छीयलक्ष्मीकीर्तिशिष्यलक्ष्मीवल्लभगणिरस्य कर्ता ज्ञायते; यत्कृतोत्तराध्ययन-कल्पसूत्रवृत्तिः प्रसिद्धा। ॐकारादारभ्याक्षकारमेकादशोत्तरशतकाव्यपरिमितस्य द्वादशप्रक्रमपरिच्छिन्नस्यास्य स्वोपज्ञा पञ्चदशशतश्लोकदेशीया सं. १७४५ वर्षे[2] विरचिता वृत्तिरत्र H. वर्तते। सप्तदशशताब्द्युत्तरार्धे विद्यमानो ज्ञानविमलपाठकशिष्यो वल्लभोपाध्यायोऽस्माद् भिन्नः।

[सं. १८४७] सूक्तरत्नावलीवृत्तिः। क्षमाकल्याणः पृ. ६० [A. ९।८३]

आधुनिकोऽयं विद्वान्, अनेन सं. १८३० वर्षे खरतरगच्छपट्टावली, सं. १८३३ वर्षे आत्मप्रबोधः (संशोधनम्), सं. १८३५ वर्षे चातुर्मासिक-होलिकाव्याख्यानम्, सं. १८३८ वर्षे साधु-श्रावकविधिप्रकाशः, सं. १८३९ वर्षे यशोधरचरितम्, सं. १८५० वर्षे जीवविचारवृत्तिः, सं. १८२९-५२ वर्षे गौतमीयकाव्यव्याख्या, सं. १८५४ वर्षे तर्कसङ्ग्रहफक्किका, सं. १८६० वर्षे मेरुत्रयोदश्यक्षयतृतीया-ऽष्टाहिकाव्याख्यानम्, सं. १८६९ वर्षे श्रीपालचरित्रव्याख्या, चतुर्विंशतिजिनचैत्यवन्दन-परसमयसारविचारसङ्ग्रह-विचारशतकबीजक-समरादित्यचरित-स्वाध्यायादयश्चानेके संस्कृत-गूर्जरग्रन्था निर्मिताः।

## जैनधर्मकथा-चरितानुयोगः।

वसुदेवहिण्डी (प्रथमखण्डः)। [सङ्घदासवाचकः][3] पृ. ५३,५६.

[P. P. १।४;३।१८४,१९६]

प्राकृतभाषायामेतादृग् विस्तृतं वसुदेवचरित्रं नान्यद् विलोक्यते। कथावस्तुसंक्षेपः 'त्रि. श.पु. पर्व ८। सर्ग ३-४' इत्यादौ द्रष्टव्यः। येन महत्पञ्चकल्पभाष्यं विरचितम्, स एव सङ्घदासक्षमाश्रमणोऽस्याः कर्ता ज्ञायते। विरहाङ्कहरिभद्रसूरितोऽप्यस्य प्राचीनतत्तदीयग्रन्थदर्शनादवगम्यते।

कुवलयमाला। दाक्षिण्यचिह्नसूरिः क्र. २२९

[शकसं. ७००=वि. सं. ८३५][4] ले. सं. ११३९।

सकलकथा-खण्डकथोल्लापकथा-परिहासकथा-वरकथासञ्ज्ञकानां पञ्चानां कथानां लक्षण-

---

१ वर्षेऽर्कबाणचन्द्रे वृत्तिः श्रीक्षीमराजशालायाम्।
द्वीन्द्रियशतमितिरेषा समर्थिताऽहम्मदावादे ॥ M.

२ संवत्पांडव-पाठक-मुनि-भूमिमिते च माधवे मासि।
शुक्लायां तृतीयायां संपूर्णा वृत्तिरेषाऽभूत् ॥ H.

३ 'वसुदेवहिण्डिप्रथमखण्डं सङ्घदासवाचककृतम् ११०००'—बृ०

४ सगकाले वोलीणे वरिसाण सएहिं सत्तहिं गएहिं।
एगदिणेणूणेहिं एस समत्ता वरण्हम्मि ॥—कु० प्रान्ते
'कुवलयमाला प्रा० मु० ८३५ वर्षे उद्योतनसूरीया १३०००'—बृ०

धरा सङ्कीर्णकथाऽत्र प्रतिपादिता । यद्यप्यत्र प्राकृतभाषाया मुख्यता तथापि संस्कृतापभ्रंश-पिशाचीभाषायामपि वर्णनं क्वचित्क्वचिन्निबद्धम् । अस्याः कथायाः संक्षेपः संस्कृतभाषायां वि० चतुर्दशशताब्दीप्रारम्भे परमानन्दसूरिशिष्यरत्नप्रभसूरिणा विरचितः, स च आत्मानन्दसभाह्वया संस्थया मुद्रापितः । कथास्वरूपं तत्रैव द्रष्टव्यम्, तत्प्रस्तावनायां चास्याः प्रारम्भप्रान्तभाग उद्धृतोऽतो नात्रावतार्यते । ग्रन्थकारः स्वकीयमुद्योतन इत्यपरनाम, 'तत्त्वाचार्य' इति गुरोर्नाम च प्रादर्शयत् । ही. S. २।२८ इत्यत्र चास्याः कर्ता हरिभद्रसूरिर्निर्दिष्टो न सम्यग्[1] । वीरभद्राचार्य-हरिभद्रौ तु स्वविद्यागुरुत्वेन वर्णितावनेन ग्रन्थकर्त्रा[2] । अयं कविः पादलिप्त-शातवाहन-षट्पर्णक-वाल्मिकि(?)—बाण-विमलाङ्क-देवगुप्त-प्रभञ्जन-भवविरह( हरिभद्र ) प्रभृतिपूर्वकवीनस्मार्षीत् । सुप्रसिद्धहेमचन्द्रसूरिगुरुदेवचन्द्रसूरिः स्मरति स्मैनं ग्रन्थकारम्[3] ।

[ सं. ९२५ ] ले. सं. १२२७ महापुरिसचरियम्[4] । शीलाचार्यः क्र. ३११

अत्र चतुःपञ्चाशन्महापुरुषाणां चरितं प्राकृतभाषायां वर्ततेऽतोऽस्य 'चउप्पन्नमहापुरिसचरियं'[5] इत्यपि नाम विलोक्यते । चरितवस्तु हेमचन्द्रसूरीयत्रिषष्टिशलाकापुरुषचरिते दर्शितं तदेव । अयं

---

१ सीसेण तस्स एसा हिरिदेवीदिन्नदंसणमणेण ।
रइया कुवलयमाला विलसिरदक्खिन्नइंधेण ॥
राया खत्तियाणं वंसे जाओ वडेसरो नाम
तस्सुज्जोयणनामो तणओ अह विरइया तेण ॥
कृतिः श्रीश्वेतपटनाथमुनेर्दाक्षिण्यलाञ्छनस्योद्योतनसूरेः ।— कुवलयमाला.
दाक्षिण्यचिह्नमुनिपेन विनिर्मिता या
प्राक् प्राकृता विबुधमानसराजहंसी ।
तां संस्कृतेन वचसा रचयामि चम्पूं
सद्यः प्रसद्य सुधियः प्रविलोकयन्तु ॥—रत्नप्रभसूरिः ।

२ दिन्नजहिच्छियफलओ बहुकित्तीकुसुमरेहिराभोओ ।
आयरियवीरभद्दो अवावरो कप्परुक्खो व्व ॥
सो सिद्धंतम्मि गुरू पमाणनाएण जस्स हरिभद्दो ।
बहुगन्थसत्थवित्थरपयड[ सम्मत्तसुअ ]सच्चत्थो ॥—कुवलयमाला.

३ 'दक्खिन्नइंधसूरिं नमामि वरवण्णभासिया सगुणा ।
कुवलयमाल व्व म(सु)हाकुवलयमालाकहा जस्स ॥'
—शान्तिनाथचरितप्रारम्भे । P. P. ५।७३

४ 'महापुरुषचरित्रं प्रा० मु० शलाकापुरुषवृत्तवाच्यं ९२५ वर्षे शीलाचार्यैः कृतम्
१००००'—बृ०

५ चउप्पण्णमहापुरिसाण एत्थ चरियं समप्पए एयं ।
सुयदेवयाए पयकमलकंतिसोहाणुहावेण ॥—महा० H. P.

शीलाचार्यो [1]निर्वृतिकुलीनमानदेवसूरेः शिष्यः । आचाराङ्ग—सूत्रकृताङ्गवृत्तिकारः शीलाचार्योऽस्माद् भिन्नो ज्ञायते । जीवसमासटीकाऽस्य शीलाचार्यस्य कृतिर्वाऽपरस्येति न निश्चित्य वक्तुं शक्यते । अस्य लेखनं सं. ११२७ वर्षे कुमारपालराज्ये स्पष्टं सूचितमतः ही. S. २।२८ इत्यत्र च निर्दिष्टः सं. ११२७ रूपो लेखनसमयो भ्रान्तिभवो ज्ञायते ।

ले. सं. ११०९ पञ्चमीकहा । महेश्वरसूरिः पृ. ५२

अस्मादेवादर्शात् सं. १६५१ वर्षे लिखिते पत्तनीयपुस्तके 'सं. १००९ वर्षे' लेखनमस्य प्रादर्शि । ग्रन्थकारस्य प्राचीनताऽतः स्फुटमवगम्यते । समयनिर्णयस्तु दुःशकः । ग्रन्थकारेण स्वपरिचये केवलं [2]सज्जनोपाध्यायशिष्यत्वं समसूचि । अस्य ग्रन्थस्य पञ्चमीमाहात्म्यवर्णनपरत्वात् 'पंचमीमाहप्पं' इत्यपरं सुसम्बद्धं नाम दृश्यते । प्राकृतभाषायां सहस्रद्वयपरिमितासु गाथासु [3]दश कथानकान्यत्र वर्तन्ते । तत्रापि प्रथमा जयसेनकथा पञ्चशतगाथासु, दशमी भविष्यदत्तकथाऽपि तावन्मितासु गाथासु । शेषा अष्ट कथाः प्रत्येकं सपादशतगाथाप्रमाणत्वात् सहस्रगाथासु समांशेन विभक्ताः । साम्प्रतं प्रसिद्धा धर्कटवणिग्वंशोद्भवधनपालनिर्मिता अनया संख्यया प्रकाशिताऽपभ्रंशा भविस्सयत्तकहा (पंचमीकहा) अस्या एव प्रान्तकथायाः प्रपञ्चरूपा। पूर्वोक्ताया जयसेनकथाया अस्मत्कृतो गूर्जरानुवादो जैनधर्माभ्युदयग्रन्थमालायां मुद्रितः । P. P. १।६७ इत्यत्र 'महेन्द्रसूरिकृतं भविदत्ताख्यानं' दर्शितं तदप्येतदेव महेश्वरसूरिरचितं भविष्यदत्तकथावसानं पञ्चमीमाहात्म्यं सम्भाव्यते । लेखकस्खलनातः प्रेक्षकस्यापि स्खलना परम्परयाऽन्यत्रावतीर्णा प्रेक्ष्यते ।

ले. सं. १२२२ शालिभद्रचरित्रम् (प्रा०) क्र. २४९(३) [P. P. १।७३,८६,९५]

कर्तुर्नाम नोपलभ्यते । चरित्रवस्तुजिज्ञासा पं० धर्मकुमारकृतात् शालिभद्रचरित्रात् पूरयितुं शक्यते ।

जम्बूचरित्रम् (प्रा०) क्र. २२८

चरित्रकारस्य नाम न ज्ञायते । कर्त्रा स्वस्य प्रद्युम्नसूरिपट्टधरवीरभद्राचार्यशिष्यत्वं तु स्वयमत्र सूचितम् । 'गुणपालणेक्कनिट्ठेण साहुणा पवयणभत्तेण । सीसेण तस्स रइयं चरियमिमं जंबुनामस्स ॥' इति प्रान्ते दर्शनाद् 'गुणपाल' इति कर्तुर्नाम ही. निर्दिष्टं सम्भवेत् । चरितवस्तुज्ञानार्थं हेम. परिशिष्टपर्व जयशेखरसूरिकृतं जम्बूचरित्रं वा द्रष्टव्यम् ।

---

१ आसि जसुज्जजोण्हाधवलियनेव्वुयकुलंबराभोओ ।
तुहिणकिरणो व्व सूरी इहइं सिरिमाणदेवो त्ति ॥
सीसेण तस्स रइयं सीलायरिएण पायडफुडत्थं ।
सयलजणवोहणत्थं पाययभासाए सुपसिद्धं ॥—महा० H. P.

२ दोपक्खुज्जोयकरो दोसासंगेण वज्जिओ अमओ ।
सिरिसज्जणउज्झाओ अउव्वचंदु व्व अक्खत्थो ॥
सीसेण तस्स रइया दसवि कहाणाइ [इ]मे उ पंचमिए ।
सूरिमहेसरएणं भवियाणं बोहणट्ठाए ॥ P.

३ 'पञ्चमीकथा दशकथानकात्मिका प्रा० महेश्वरसूरीया २००४'—बृ०

सं. ११२३ विलासवईकहा। साधारणः क्र. १३१,१६७

साधारणाङ्का एकादशसन्धिमयाऽपभ्रंशभाषानिबद्धेयं कथा 'समराइच्चकहा'नाम्ना सुप्रसिद्धायाः कथाया उद्धृतेति स्वयमत्र कविना प्रोक्तम्। कथावस्तुज्ञानार्थं समरादित्यकथायाः पञ्चमभववर्णनं विलोकनीयम्। ग्रन्थकारः स्वस्य कोटिकगण-वज्रशाखाभववप्पभट्टिसूरिसन्तानीयत्वं यशोभद्रसूरिगच्छीयत्वं च समदर्शयत्। कविः 'साधारण' इति नाम्ना पूर्वं सुप्रसिद्ध आसीत्, तन्नाम्नैव चानेन विनिर्मितानि बहुविधानि स्तुतिस्तोत्राणि देशेषु पठ्यमानान्यासन्। पश्चात् तु सिद्धसेनसूरिरिति नाम प्रतिष्ठितमित्यस्याः प्रान्तोल्लेखदर्शनेन ज्ञायते।

[सं. ११३९[1]] ले. सं. १२४२ महावीरचरियम्। गुणचन्द्रगणिः

क्र. ३०५ [P. P. ३।३०५;५।३२]

अष्टप्रस्तावयुक्तं प्राकृतभाषानिबद्धं द्वादशसहस्र[2]श्लोकसङ्ख्यमेतादृग् महन्महावीरचरितं नान्येन कविना रचितं दृश्यते श्रूयते वा। चरितकारोऽयं कविः सुमतिवाचकस्य शिष्यः। नवाङ्गवृत्तिकाराभयदेवसूरिशिष्यप्रसन्नचन्द्रसूरिवचनेनास्य रचनेत्यादि विस्तृतया प्रान्तप्रशस्त्या प्रकटमवगम्यते। अनेन गुणचन्द्रगणिना संवेगरङ्गशालाप्रतिः संस्कृताऽऽसीदिति तत्प्रान्तोल्लेखाज्ज्ञायते।

[सं. ११६०[3]] ले. सं १३३९ आदिनाथचरित्रम्। वर्धमानाचार्यः

क्र. ३३४ [P. P. ५।८१]

स्तम्भनतीर्थे[4]ऽस्य रचना। एकादशसहस्रश्लोकप्रमाणं पञ्चावसरविभक्तं प्राकृतभाषानिबद्धमेतत्। एतादृग् विस्तृतं प्रथमजिनचरितं नान्यकविकृतं दृष्टं श्रुतं वा। मध्ये चात्र क्वचित् क्वचिदपभ्रंशभाषाऽपि प्रयुक्ता दृश्यते। अयं वर्धमानाचार्यो नवाङ्गीवृत्तिकाराभयदेवसूरेः शिष्यः[5], येन सं. ११४० वर्षे निर्मितमपरं प्रा० मनोरमाचरित्रं श्रूयते, सं. ११७२ वर्षे निर्मिता धर्मरत्नकरण्डवृत्तिश्च प्रसिद्धा।

---

१ नंदसिहिरुद्दसंखे वोक्कंते विक्कमाउ कालम्मि।
जेट्ठस्स सुद्धतईयातिहिम्मि सोमे समत्तमिमं॥—महा० प्र० P. P. ५।३६

२ 'वीरचरित्रं प्रा० ११३९ वर्षे गुणचन्द्रगणिकृतम् १२०००'—बृ०

३ विक्कमनिवकालाउ सएसु एक्कारसेसु सट्ठेसु।
सिरिजयसिंहनरिंदे रज्जं परिपालयंतम्मि॥
खंभाइत्थट्ठिएहिं सियपक्खे चित्तविजयदसमीए।
पुस्सेणं सुरगुरुणो समत्थियं चरियमेयं ति॥ P. P. ५।८१

४ 'श्रीआदिनाथचरित्रं प्राकृतं जयसिंहदेवराज्ये ११६० वर्षे वर्धमानसूरिरचितम् ११०००'—बृ०

५ "सत्तर्कन्यायचर्चार्चितचतुरगिरः श्रीप्रसन्नेन्दुसूरिः
सूरिः श्रीवर्धमानो यतिपतिहरिभद्रो मुनिर्देवभद्रः।
इत्याद्याः सर्वविद्यार्णवकलशभुवः संचरिष्णूरुकीर्ति-
स्तम्भायन्तेऽधुनाऽपि श्रुतचरणरमाराजिनो यस्य शिष्याः॥"
—चित्रकूटीयवीरजिनचैत्यप्रशस्तौ जिनवल्लभसूरिः।

[सं. ११६०[1]] शान्तिनाथचरित्रम् । देवचन्द्रसूरिः क्र. ९७ [P.P. ५।७२]

प्राकृतभाषायां द्वादशसहस्रश्लोकप्रमाणमेतत् । नापरं शान्तिचरितमेतादृग् बृहद् दृष्टिगोचरीक्रियते । ग्रन्थकारोऽयं पूर्णतल्लगच्छीययशोभद्रसूरि-प्रद्युम्नसूरि-गुणसेनसूरेः शिष्यः, सुप्रसिद्धहेमचन्द्राचार्यस्य च गुरुः । हेमसूरिः[2], सं. १२१४ वर्षे श्रीचन्द्रसूरिः[3], सं. १२४१ वर्षे सोमप्रभाचार्योऽन्येऽपि चैनं निजनिजग्रन्थे स्मृतवन्तः । मुनिदेवसूरिकृतं सं० शान्तिचरितमस्यैव संक्षिप्तस्वरूपम् । ग्रन्थकारस्यान्या कृतिः स्थानकवृत्तिर्वर्तते, तदतिरिक्ता नाद्यावध्युपलब्धा ।

[सं. ११६१[6]] पृथ्वीचन्द्रचरित्रम् । शान्तिसूरिः क्र. १४६ [P. P. ५।११७]

ले. सं. १२२५ । 'अस्य कर्ता नेमिचन्द्रसूरिः, रचना च सं. ११३१ वर्षे' इति ही. श्रीधरभाण्डारकरेण च S. २।२७ इत्यत्र प्रादर्शि; किन्तु भ्रान्तिरियं प्रतिभाति यतो ग्रन्थकर्ता शान्तिसूरिः, रचना च वीरनि० सं. १६३१=वि. सं. ११६१ वर्षे इति ग्रन्थप्रान्तेऽन्यत्र च

१ 'शान्तिचरितं प्रा० गद्यपद्यमयं ११६० वर्षे हेमसूरिगुरुदेवचन्द्रसूरीयम् १२१००'—बृ०

२ "कृत्वा स्थानकवृत्ति-शान्तिचरिते प्राप्तः प्रसिद्धिं परां
सूरिर्भूरितपःप्रभाववसतिः श्रीदेवचन्द्रोऽभवत् ॥
आचार्यो हेमचन्द्रोऽभूत् तत्पादाम्भोजषट्पदः ।
तत्प्रसादादधिगतज्ञानसम्पन्महोदयः ॥"—त्रि. श. पु. प्र.

३ जिणसंतिचरित्तामयपीणियनरदेवपाणिनिवहेण ।
सिरिदेवचंदगुरुणा स दुद्धसिंधू धुवं विजिओ ॥—सनत्कुमारचरिते

४ "कयसुकयकुमुयबोहा चउर-वठरप्पमोयसंजणणी ।
संतिजिणचरित्तकहा जुण्ह व्व वियंभिआ जत्तो ॥"—कु. १ प्रस्तावे

५ "वन्दे श्रीदेवचन्द्रं तं यत्कृतं प्राकृतं बृहत् ।
श्रीशान्तिवृत्तं संक्षिप्य संस्कृतं क्रियते मया ॥
अमानं महिमानं कस्तस्य स्तौतु गणेशितुः ।
शिष्यो यस्योदितो हेमचन्द्रसूरिर्जगद्गुरुः ॥"—शान्तिनाथचरिते मुनिदेवसूरिः ।

६ इगतीसाहियसोलससएहिं वासाण निव्वुए वीरे ।
कत्तियचरमतिहीए कित्तियरिक्खे परिसमत्तं ॥
जो सव्वदेवमुणिपुंगवदिक्खिएहिं साहित्त-तक्क-समएसु सुसिक्खिएहिं ।
संपाविओ वरपयं सिरिचंदसूरिपुज्जेहिं पक्खमुवगम्म गुणेसु भूरि ॥
संवेगंवुनिवा(या)णं एयं सिरिसंतिसूरिणा तेण ।
वज्जरियं वरचरियं मुणिचंदविणेयवयणाओ ॥ P. P. ५।११७

७ 'सिरिसंतिसूरिवाणी विलासिणी विविहभंगभावेहिं ।
पुहवीचंदसुरंगे रंजइ हिययाइ नचंती ॥'—सनत्कुमारचरिते श्रीचन्द्रसूरिः ।
'वादीन्द्रः कविपुङ्गवैकतिलकः साक्षात् त्रिलोकीसरः–
क्रोडक्रीडदशेषसज्जनमहो चारित्रिचूडामणिः ।
नन्द्यादद्भुतभाजनं स भगवान् श्रीशान्तिसूरिप्रभुः

स्पष्टमुपलभ्यते । सं. १५३४ वर्षे सत्यराजगणिना कृतं पृथ्वीचन्द्रचरितं गद्य-पद्य-भङ्ग-श्लेषमय-मिदमुपजीव्य विरचितमिति तत्रत्याव्यक्तोल्लेखेनानुमीयते ।

रत्नचूडकथाविषमपदविवरणटिप्पणकम् क्र. २२(२)

'सहस्रत्रयश्लोकप्रमाणा गद्यकथेयं जिनवल्लभसूरिविहिता सटिप्पना १५८ जीर्णताडपत्रेषु वर्तते' इत्यन्यत्र ( ही. ) सूचितं सन्दिग्धं प्रतिभासते ।

[ सं. ११६८ ][2] पार्श्वनाथचरित्रम् । देवभद्रसूरिः[3] क्र. २९६ [ P. P. ३।६४ ]

प्राकृतभाषायां नवसहस्रश्लोकसङ्ख्याकमेतच्चरितं नवाङ्गवृत्तिकाराभयदेवसूरिशिष्यप्रसन्नचन्द्र-सूरिसेवकेन सुमत्युपाध्यायशिष्येण देवभद्रसूरिणा भृगुकच्छे निर्मितम् । अन्याऽप्यनेन संवेग-रङ्गमालाऽऽराधनाशास्त्र-वीरचरित-कथारत्नकोशसंज्ञका ग्रन्थत्रयी विरचितेति प्रशस्तिदर्शना-द्[4]न्यैरन्यत्रोक्तत्वाच्च विज्ञायते ।

[ सं. ११७० ] ले. सं. १२४५ नेमिचरितम् । मलधारिहेमचन्द्रः क्र. १३८(१)

ग्रं.[5] ५१०२ । भवभावनावृत्त्यन्तर्गतत्वात् तन्निर्माणसमय एवास्यापि रचनासमयः । P. P. ५।२४ इत्यत्र निर्दिष्टस्यास्य च नेमिचरितस्य प्रारम्भगाथा श्लोकसङ्ख्या च समानैव दृश्यते; तथापि तत्प्रान्ते 'सव्वुत्तमरयणगुणे वल्लवो भणइ नूणं' इत्यादि दर्शनात् प्रॉ. पीटर्सनेन तत्कर्ता गुणवल्लभो दर्शितः, किन्तु भवभावनावृत्त्यन्तर्गतत्वादस्य चरितस्य तत्कर्ता (पृ. ३९) मलधारिहेमचन्द्रसूरिरस्य कर्तेति स्पष्टं प्रतिभाति ।

---

पृथ्वीचन्द्रचरित्रसत्रमकरोद् यो विश्वदत्तोत्सवः ॥'

—गुरुस्तुतौ धर्मप्रभसूरिः P. P. ५।१२५

'पृथ्वीचन्द्रचरितं प्रा० मुख्यं गाथादिमयं ११७(६)१ वर्षे शान्तिसूरिभिः कृतम् ७५००'—बृ०

१ "प्राकृतबन्धेनैतच्चरितं रचितं हि पूर्वकविवर्यैः ।
मुग्धावबोधकृतये व्यधामिहानुष्टुबादिविधिम् ॥"—पृ० सत्यराजगणिः ।

२ 'काले वसुरसरुद्दे विक्कमाउ सिद्धमिमं ।'—P. P. ३।६५

३ 'पार्श्वचरितं प्रा० ११६८ वर्षे नवाङ्गअभयदेवप्रथमशिष्य(?)देवभद्राचार्यैः कृतम् ९०००'—बृ०

४ 'पहुदेवभद्दकित्ती चउसंखपबंधविरयणविढत्ता ।
अज्ज वि अखलियपसरा अविरामं भमइ भुवणंमि ॥'

—सनत्कुमारचरिते श्रीचन्द्रसूरिः ।

'श्रीदेवभद्रसूरीणां धर्मशास्त्रचतुष्टयी ।
पुरुषार्थ-गति-ध्यान-शब्द-धर्मोपलब्धिकृत् ॥'—कुन्थुनाथचरिते पद्मप्रभसूरिः ।

"चक्रे श्रीजिनचन्द्रसूरिगुरुभिर्धुर्यः प्रसन्नाभिध-
स्तेन ग्रन्थचतुष्टयीस्फुटमतिः श्रीदेवभद्रप्रभुः ।"—मुनिसुव्रतचरित्रे पद्मप्रभसूरिः ।

"तथा देवभद्राचार्येणापि तुष्टेन......दत्तं येन महावीरचरित-पार्श्वचरितादीनि चत्वारि कथाशास्त्राणि पट्टिकायां लिखितानि ॥"—गणधरसार्धशतकवृ० सुमतिगणिः ।

५ 'नेमिचरितं प्रा० भवभावनावृत्त्यन्तर्गतमन्तरङ्गवक्तव्यतामिश्रम् ५१०२'—बृ०

ले. सं. १२४६ जिनदत्ताख्यानम् । सुमतिगणिः क्र. १३८(२)

'जिनदत्तकथा १२००' इति बृ० निर्दिष्टा कथाऽस्माच्चरितात् पृथक् प्रतिभासते। P. P. ५।६२,१०८ इत्यत्र निर्दिष्टमेतन्नामकं चरितमप्यस्माद् भिन्नं प्रतिभाति । ग्रन्थकारोऽयं पाडिच्छयगच्छीयनेमिचन्द्रसूरेः शिष्यः । अयं नेमिचन्द्रसूरिः सर्वदेवसूरिणोत्तमपदे (सूरिपदे) स्थापित आसीदिति वर्णितं वर्णनीयेन वर्णिनाऽनेन गणिना । प्रा० जिनदत्तमहर्षिचरितं नान्यत्र दृश्यते ।

सं. ११७८, ले. सं. १२१७ चन्द्रप्रभचरित्रम् । यशोदेव उपाध्यायः क्र. २५६

विजयसिंहसूरिसत्कमेतत् प्राचीनपुस्तकम् । अयं ग्रन्थकारो देवगुप्तसूरेः शिष्योऽस्य 'धनदेव' इति पूर्वनाम, उपाध्यायपदे प्राप्ते च यशोदेव इति नाम जातमासीत् । उपाध्यायपदानन्तरं चाशावल्लीपुर्यां धवलभाण्डशालिककारिते पार्श्वजिनभवने एतच्चरितं प्रारभ्याणहिल्लवाडपत्तने वीरजिनमन्दिरे सिद्धराजजयसिंहराज्ये पूर्णीकृतमित्यत्र स्वयं ग्रन्थकारेण वर्णितं विलोक्यतेऽन्यत्रापि[1] च यशोदेवकृतित्वेनेदं सूचितम्, तथापि S. २।२८ ही. इत्यत्र च सं. ११९२ वर्षे बृहत्क्षेत्रसमासवृत्तिकर्तृगुरोर्गुरुः सिद्धसूरिरस्य कर्ता सम्भावितः, रचना चास्य सं. ११३८ वर्षे सूचिता तत्तु सुसमीक्षणाभावादिति तर्कये । सिद्धसूरेस्त्वयं सतीर्थ्यो विद्यागुरुरपि[2] । अनेनोपाध्यायेन सं. ११६५ वर्षे नवपदप्रकरणबृहद्वृत्तिः, सं. ११७४ वर्षे च नवतत्त्वप्रकरणवृत्तिरपि विनिर्मिता ।

सं. ११८७ नर्मदासुन्दरीकथा । महेन्द्रसूरिः पृ. ५४ [बृ०]

सूरिणेयं प्राकृतकथा स्वशिष्याभ्यर्थनया विरचिता । प्रथमा प्रतिश्च प्रथमाचार्यस्य शिष्येण गणिशीलचन्द्रेण लिखिता । शीलमाहात्म्यमत्र वर्णितम् । कथावस्तु शीलोपदेशमालावृत्त्यादौ (शीलत० पृ. २९८-३१६) दर्शितं तदेव ।

सं. १२१६ नेमिनाथचरित्रम् । हरिभद्रसूरिः क्र. २३२

अष्टसहस्रं[3]श्लोकपरिमितं प्राकृतापभ्रंशभाषानिबद्धमेतच्चरितं कुमारपालराज्येऽणहिल्लपाटके नगरे वटगच्छीयजिनचन्द्रसूरिशिष्यश्रीचन्द्रसूरिशिष्येण हरिभद्रसूरिणा व्यरचीति स्वयमत्र समसूचि । अयं सूरिवर्योऽन्यत्र स्वस्य चतुर्विंशतिजिनचरितरचयितृत्वं[4] प्रतिपादयति स्म । तन्मध्यात् मल्लिचरितं, चन्द्रप्रभचरित्रं चोपलभ्यतेऽपि तत् तु पत्तनसूचिपत्रे सूचयिष्यते ।

[सं. १२७६] पार्श्वनाथचरित्रम् । माणिक्यचन्द्रः क्र. ३३ [P. P. ३।१५७][5]

राजगच्छीयसागरेन्दुसूरिशिष्यः प्रौढप्रतिभोऽयं सूरिरिदं भिन्नमालवंशीयश्रेष्ठिदेहडस्य प्रार्थनया प्रणिनाय ।

---

१ 'चन्द्रप्रभचरितं प्रा० याशोदेवम् ६४००'—बृ०

२ 'गुरुभ्रातृयशोदेवोपाध्यायज्ञातशास्त्रार्थः'—क्षेत्रस. बृ. सिद्धसूरिः ।

३ 'नेमिचरितं प्रा० १२१६ वर्षे हरिभद्राचार्यैः कृतम् ८०३२'—बृ०

४ "पसरियजसपडहारवनच्चावियकित्तितरुणिरयणस्स ।
असरिसगुणमणिनिहिणो पहुणो सिरिचंदसूरिस्स ॥
चउवीसइजिणपुंगवसुचरियरयणाभिरामसिंगारो ।
एसो विणयदेसो जाओ हरिभद्दसूरि त्ति ॥"—प्रा० चन्द्रप्रभचरित्रप्र०

५ 'पार्श्वचरितं सं. माणिक्यचन्द्रसूरिकृतं १२७६ वर्षे ५२७८'—बृ०
"रसर्षिरविसङ्ख्यायां समायां दीपपर्वणि ।
समर्थितमिदं वेलाकूले श्रीदेवकूपके ॥"—P. P. ३।१६३

नलायनम् (?)  माणिक्यसूरिः        पृ. ५५ [ P. P. ३।३५७ ]

नलायनमेतद् य. वि. ग्रन्थमालायां मुद्राप्यमाणं श्रूयते । कुबेरपुराणेत्यपराह्वस्य दशसु स्कन्धेषु विभक्तः शतसर्गैरुपेतस्यास्य महाकाव्यस्य प्रणेताऽयं सूरिवर्योऽत्र (५,२,३,७,९,१० स्कन्धे) स्वं वटगच्छनभोमृगाङ्कत्वेन, मुनिमनोहरयोर्विधातृत्वेन यशोधरचरितानुभवसार–सेतु-नाटक–साहित्यसारादिस्रष्टृत्वेन चोपालक्षयति स्मातो राजगच्छीयो माणिक्यसूरिरस्मात् पृथक् प्रतिभाति, येन सं. १२१(४)६ वर्षे काव्यप्रकाशसङ्केतः, सं. १२७६ वर्षे पार्श्वनाथचरितम्, शान्तिनाथचरितादिकं च रचितम् ।

सं. १२८२   अतिमुक्तचरित्रम् । पूर्णभद्रगणिः   क्र. १०(२)

स्थानाङ्ग–भगवती–ऋषिस्तवेभ्य उद्धृत्यैतच्चरित्रं जिनपतिसूरिशिष्येण पूर्णभद्रगणिना प्रह्लादनपुरे प्राणायि; येन सं. १२७५ वर्षे दशश्रावकचरित्रम्, सं. १२८५ वर्षे च धन्यशालिभद्र-चरित्र–कृतपुण्यचरित्राद्यपि विनिर्मितमत्र दृष्टिपथपान्थीभवति ।

सं. १२८५   धन्यशालिभद्रचरित्रम् । पूर्णभद्रगणिः   क्र. १०(१),२६३(१)

दलालेनास्य कृतपुण्यचरित्रं धन्यचरित्रमिति नाम निर्दिष्टक्रमाङ्कयोर्निरदेशि, किन्त्वेतदेव तद् द्वयं प्रतिभाति । उपरि परिचायितोऽयं कविवर्यः षट्परिच्छेदात्मकमेतत् सं. चरित्रं जेसलमेरुदुर्गेऽकृत, शोधनं तु स सूरप्रभवाचकश्चकार, वादियमदण्डदिगम्बरेशजेता कालस्व-रूपकुलकवृत्तिकर्ता यश्चन्द्रतिलकोपाध्यायं विद्यानन्दं पाठितवान् । चरित्रकारेणात्र स्वगुरुपरम्परा-सूचिका विस्तृता प्रशस्तिर्निबद्धा ।

[ सं. १२८५ ? ]   कृतपुण्यचरित्रम् । पूर्णभद्रगणिः   क्र. २६३(१)

चरित्रकारः पूर्वोक्त एव । दलालेन क्र. १०(१) निर्दिष्टं तु तत्प्रशस्तिनिरीक्षणेन धन्य–शालि-भद्रचरित्रमिति स्पष्टं प्रतिभाति । चरित्रवस्तु चारित्ररत्नस्य दानप्रदीपे (१२ प्र० पृ. १९०–१९४) द्रष्टव्यम् ।

कालकाचार्यकथा(प्रा०)        क्र. ७(२),२३६(२),२६६(२)

एतत् पञ्चमीतश्चतुर्थ्यां पर्युषणापर्व प्रचारयितुश्चरितम् । पर्युषणाकल्पसूत्रप्रान्ते प्रभावक-चरित्रादौ च संस्कृते निर्दिष्टा कथाऽस्या रूपान्तररूपा । अज्ञातकर्तृनामधेया P. P. १।३,१७, १८,२९,३०,५१,६९; ३।२६,२२५; ५।५३ इत्यत्र सूचितासु केयमिति स्फुटं न ज्ञायते ।

सं. १२९४   मुनिसुव्रतचरित्रम् । पद्मप्रभसूरिः क्र. ८५,२३१,२३९.
[ P. P. ३।३०२ ]

ग्रन्थकारोऽयं चान्द्रकुलीनविबुधप्रभसूरिशिष्यः, येन कुन्थुनाथचरितमपि प्रणीतम् । क्र. २३१ निर्दिष्टपुस्तकप्रान्ते सं. १३०४ वर्षे याऽस्य परिपूर्णता प्रादर्शि, सा लेखनेनेति प्रतिभाति; ग्रन्थरचना तु सं. १२९४ रूपा स्वयं ग्रन्थकारेण प्रतिपादिता । पार्श्वस्तव–भुवनदीपकादि-ग्रन्थकारोऽयमेव वाऽन्य इति न निश्चीयते ।

---

१ 'धन्यशालिभद्रचरित्रं पूर्णभद्रगणिना १२८५ वर्षे कृतं श्लोकाः १४६०'—वृ०

२ "सूरिं जिनेश्वरगुरुं जिनतीर्थयात्राऽभ्यायातसङ्घसहितं समरञ्जयद् यः ।
श्रीस्तम्भतीर्थनगरे वरजल्पकेलौ निर्जित्य वादियमदण्डदिगम्बरेशम् ॥
स श्रीसूरप्रभसमभिधो बुद्धिधामाऽभिषेको
ज्ञाता नाम स्वमिव निखिला लक्षणाद्याश्च विद्याः ।
स्फायज्ज्यायस्त्वरितकवितानिर्मितौ ब्रह्मकल्पो
विद्यानन्दं शिशुमिव भृशं हेलयाऽभाणयन्माम् ॥—अभयकुमारचरित्रप्रशस्तिः ।

[ वृ. सं. १२९५ ] गणधरसार्धशतकवृत्तिः । सुमतिगणिः क्र. ३१३,३१५
[ R. १८८२-८३ पृ. ४५ ]

गणधरस्तुतिरूपत्वात् सार्धशतकगाथाप्रमाणत्वेन च 'गणधरसार्धशतक' नाम्ना प्रतिष्ठितमेतन्मूलं प्रा० जिनदत्तसूरिणा विहितम्। अयं सूरिर्जिनवल्लभसूरेः शिष्यो जिनचन्द्रसूरि-जिनरक्षित-ब्रह्मचन्द्रगणि-स्थिरचन्द्रगण्यादीनां च गुरुः । अवस्थाकुलक-उपदेशरसायन-कालस्वरूपकुलक-गणधरसप्तति-सिग्घमवहरउ-तं जयउ-गुरुपारतन्त्र्यादिस्तव-चर्चरी-चैत्यवन्दनकुलक-सन्देहदोलावली-विंशिकाऽऽदीनां प्रणेतुरस्य सं. ११३२ वर्षे जन्म, सं. ११४१ वर्षे दीक्षा, सं. ११६९ वर्षे सूरिपदम्, सं. १२११ वर्षे च स्वर्गमनमित्याद्यत्र वृत्तौ दर्शितम् । चित्तचमत्कृतिकृच्चरितस्य खरतरगच्छे पितामहपदेनातीवपूज्यस्यास्यौपवस्त्रमद्यापि जेसलमेरूपाश्रये प्रदर्श्यते। मूले सूचितानां गणधराणामाचार्याणां चरितानि द्वादशसहस्रश्लोकप्रमाणायामेतस्यां बृहद्वृत्तौ संस्कृत-प्राकृत-भाषया रचितानि । एतामुपजीव्य सर्वराजगणिना विहिता लघुवृत्तिः प्रसिद्धा, चरितादिस्वरूपं तत एव ज्ञातव्यम् । इयं बृहद्वृत्तिः स्तम्भतीर्थे प्रारभ्य धारापुरी-नलकच्छकादिविहारक्रमेण मण्डपदुर्गे समर्थितेति जैनविदुषा जल्हणेनैतत्पुस्तकं लिखितमिति च प्रान्तदर्शनेन स्पष्टमवगम्यते । अयं वृत्तिकारो जिनपतिसूरेः शिष्यो जिनहितोपाध्यायात् काव्यालङ्कारचातुरीमधिगतवान्, कुण्डलित-काव्यानि च कृतवान् । प्रथमादर्शं तु जिनेश्वरसूरिशिष्यः कनकचन्द्रो लिखितवान् ।

लीलावतीसारमहाकाव्यम् [ जिनरत्नाचार्यः ] क्र. ३४७

वर्धमानसूरिशिष्यजिनेश्वरसूरिविरचिताया निर्वाणलीलावतीकथाया इतिवृत्तोद्धाररूपं जिनाङ्कं संस्कृतमेकविंशत्युत्साहसमुपेतं निर्वाणलीलावतीकथेत्यपरनामकमिदं महाकाव्यं जिनपतिसूरि-शिष्यजिनेश्वरसूरिशिष्येण जिनरत्नाचार्येण विरचितमिति प्रान्तावलोकनादवगम्यते । पत्तने दुर्लभ-राजसंसदि चैत्यवासिविजेत्रा वसतिमार्गप्रकाशकेन(पृ.२) सं. १०८० वर्षेऽष्टकवृत्तिकृज्जिनेश्वरसूरिणा विरचिता चैषा कथा सं. १०९५ वर्षात् प्राक् (सं. १०९२ वर्षे?) प्रादुर्भूतेति प्रा० सुरसुन्दरीकथा-यामस्या वर्णनदर्शनादवबुध्यते । सं. १२९५ वर्षे सुमतिगणिना, सं. १३१२ वर्षे चन्द्रतिलकोपा-

१ "शर-निधि-दिनकरसङ्ख्ये विक्रमवर्षे गुरौ द्वितीयायाम् ।
राधे पूर्णीभूता वृत्तिरियं नन्दतात् सुचिरम् ॥"—H.

२ "जिनेश्वरयतीश्वरस्तदनु भाग्यदुग्धोदधिर्बभूव ।
जिनरत्नमुख्यमुनिरत्नराजीनिधिः ॥"—चैत्यवन्दनकुलकवृत्तिप्र० जिनकुशलसूरिः ।

३ "जस्स य अइंवसुललियपयसंचारा पसन्नवाणी य ।
अइकोमला सिलेसे विविहालङ्कारसोहिल्ला ॥
लीलावइ त्ति नामा सुवन्नरयणोहहारिसयलंगा ।
वेस व्व कहा वियरइ जयम्मि कयजणमणाणंदा ॥"—साधुधनेश्वरः ।

४ "श्रीजिनेश्वरसूरय आशापल्ल्यां विहृतास्तत्र च व्याख्याने विचक्षणा उपविशन्ति । ततो विदग्धमनःकुमुदचन्द्रिकासहोदरी संविग्नवैराग्यवर्धनी लीलावत्यभिधाना कथा विदधे श्रीजिनेश्वरसूरिभिः ॥"—गणधरसार्धशतकबृहद्वृत्तौ ।

५ "निर्वाणाध्वरविं कथां नवरसां निर्वाणलीलावतीं
सूत्रं वृत्तियुतं कथानकमहाकोशस्य संवेगकृत् ।
तर्कन्यायविलासनैकचतुरं सन्नीतिरत्नाकरं
तर्कं यो विदधे धियां जलनिधिः संविग्नचूडामणिः ॥"—अभयकुमारचरितप्र०

ध्यायेनाप्यस्याः संस्मरणमकारि । तस्याः प्राकृतकथायास्तु दर्शनं न कुत्रचिद् भवति, तत्साररूप-काव्यदर्शनेनापि सन्तुष्यते । सारकर्ता जिनरत्नाचार्योऽप्यनीव विद्वान् प्रतिभाति, सं. १३०७ वर्षे प्राकृतद्व्याश्रयवृत्तिविनिर्माता पूर्णकलशगणिरस्य निकटेऽधीतवान् । अग्रे उपलक्ष्यमानलक्ष्मी-तिलकोपाध्यायेनाप्यस्य पार्श्वेऽधीतम्[2] । अनेन जिनरत्नाचार्यसमयस्त्रयोदशशताब्द्युत्तरार्धरूपः स्फुटमवगम्यते । एतद्ग्रन्थरचनाऽपि त्रयोदशशताब्द्यन्तरूपा विज्ञायते ।

[ सं. १३११ ]   प्रत्येकबुद्धचरित्रम् । लक्ष्मीतिलकः   क्र. २०३

करकण्डु–द्विमुख–नमि–नग्गतिनाम्नां चतुर्णां प्रत्येकबुद्धमहाराजर्षीणां चरितरूपं जिन-लक्ष्म्यङ्कं सप्तदशसर्गात्मकमेतत् महाकाव्यं वर्तते । तत्प्रान्तपत्रे 'रुद्राग्नीन्दुशरत्' इति दर्शनादस्य रचना सं. १३११ वर्षे सूच्यते । अयं कविर्जिनपतिसूरिपट्टभूषणजिनेश्वरसूरेः शिष्यः[3], पूर्णकलश-गण्यादीनां च सतीर्थ्यः । सं. १३०७ वर्षे पूर्णकलशगणिकृता प्राकृतद्व्याश्रयवृत्तिरनेन[4] संशोधिता । अभयतिलकोपाध्यायेन न्यायशास्त्राध्ययनमस्यैव[5] विदुषः पार्श्वेऽकारि । सं. १३१२ वर्षे अभयतिलकोपाध्यायकृता सं. द्व्याश्रयवृत्तिर्[6]न्यायालङ्काराख्या पञ्चप्रस्थानन्यायतर्कविषमपदव्याख्या[7]

---

१ "नासिद्धं न विपक्षगामि च न वा नैकान्तिकं साधनं
  येषां सत्प्रतिपक्षकं न विषये सोऽपि नो बाधितम् ।
जात्युद्भावन–निग्रह–च्छलपरव्याघातविश्राणकं
  दृष्ट्वा यानपरे श्रयन्ति समिता धीरा व्रताज्ञापराः ॥
दत्तो मुदा तैर्जिनरत्नसूरिक्षमाधिपैर्बोधमणिप्रदीपः ।
श्रीप्राकृतद्व्याश्रयगेहगर्भस्थितं य आदर्शयदर्थजातम् ॥"—प्रा. द्या० वृत्तिप्र०

२ "तस्य श्रीजिनरत्नसूरिचरणाम्भोजान्तिकेऽधीतिनः
  श्रीलक्ष्मीतिलकाभिषेकनृपतेर्नानार्थरत्नैर्ललत् ।"—न्यायालङ्कारटीका

३ 'सूरिजिनरत्न इह बुद्धिसागरसुधीरमरकीर्तिः कविः पूर्णकलशो बुधः ।
ज्ञो प्रबोधेन्दुगणि–लक्ष्मितिलकौ प्रमोदादिमूर्त्यादयो यद्विनेयोत्तमाः ॥'
—सं० द्व्याश्रयवृत्तिप्र०

४ "साहित्य–तर्कागम–शब्दविद्याशाणानिशातीकृतबुद्धिधारः ।
निरच्छेद् लक्ष्मीतिलको गणिर्मे सब्रह्मचारी स्खलितोक्तिवल्लीः ॥"—प्राकृतद्व्याश्रयवृत्तिप्र०

५ 'चिन्तारत्नमथाप्य लक्ष्मीतिलकोपाध्यायगीःस्वर्गवीम् ।'
'श्रीलक्ष्मीतिलको मुदेऽस्तु भगवान् श्रीन्यायतूर्याग्रिमा-
  ध्यायं भूमिगृहे स्थितानपि रहस्यार्थान् ममाद्योतयत् ।
श्रेयःस्नेहभराक्षयो न च मनाक्कम्पोऽपि दुर्वादिवाग्-
  वातैरव्ययसदृशः खलु नवो यद्गीःप्रदीपोदयः ॥—न्याया० ( पृ. ४७ )

६ "आम्नाती सर्वविद्यास्वविकलकविताकेलिकेलीनिवासः
  कीर्त्याऽब्धेः पारदृश्वा त्रिभुवनजनतोपक्रियास्वात्तदीक्षः ।
निःशेषग्रन्थसार्थे मम गुरुरिह तु द्व्याश्रयेऽतिप्रकामं
  टीकामेतां स लक्ष्मीतिलककविरविः शोधयामास सम्यक् ॥"
—द्व्याश्रयवृत्तिप्र० अभयतिलकगणिः ।

७ प्राक् संहत्य सुरासुरेण जलधिं व्यालोड्य हेमाद्रिणो-
  द्भूतं सारमुपाददे स्वयमहो एकांगमल्लस्तु यः ।

चानेन संशोधिता; सं. १३१२ वर्षे चाभयतिलकोपाध्यायेन सार्धं चन्द्रतिलकोपाध्यायस्याभयकुमारचरित्रमपि समशोधि। सं. १३१७ वर्षेऽनेन निजगुरुनिर्मितश्रावकधर्मप्रकरणस्य वृत्तिर्विरचिता। सं. १३२२ वर्षे धर्मतिलककृता जिनवल्लभीयाजितशान्तिस्तववृत्तिश्च संशोधिता। सं. १३२८ वर्षे कातन्त्रदुर्गपदप्रबोधकारः प्रबोधमूर्तिगणिः स्वग्रन्थशोधकत्वेन काव्यकृत्वेन चेमं स्मरति स्म। अस्य विद्यागुरुर्जिनरत्नसूरिरित्यन्यत्र दर्शितम्।

[ सं. १३२२ ] शान्तिनाथचरित्रम्। मुनिदेवसूरिः पृ. ४९ [ P. P. ११४ ]

देवचन्द्रसूरिकृतं बृहत्प्राकृतशान्तिनाथचरित्रं संक्षिप्येदं चरित्रं विरचितमिति स्वयमत्रानेन सूरिणा प्रोक्तमस्ति (पृ.४६)। संशोधनं तु स प्रद्युम्नसूरिवर्योऽकार्षीद् येन तदानीन्तनानामुदयप्रभ-

---

न्यायाम्भोधिममुं विगाह्य परितो बुद्ध्या कुशाग्रीयया
सामस्त्येन महार्थसारमचिराल्लात्वा व्यतारीन्मम॥
तस्य श्रीजिनरत्नसूरिचरणाम्भोजान्तिकेऽधीतिनः
श्रीलक्ष्मीतिलकाभिषेकनृपतेर्नानार्थरत्नैर्ज्वलन्।
कुर्वाणाऽत्र सुवर्णदण्डरुचिरा दुर्गार्थवृत्तेश्छला-
देतैस्या मयकोत्थितोज्ज्वलयशःश्रीवैजयन्त्युच्चकैः॥
'श्रीलक्ष्मीतिलकोपाध्यायैः संशोधितेयमतिनिपुणम्।'—न्यायालङ्कार० अभयतिलकः।

१ "वाग्मी तर्कज्ञवैयाकरणगणमणिः पीतसिद्धान्तसिन्धुः
साहित्याध्वाध्वनीनो निरुपमकवितानर्तकीरङ्गभूमिः।
व्याख्याताऽत्राश्रुतद्व्याश्रयविषममहाकाव्ययुग्मस्य नाना-
ग्रन्थस्रष्टा च लक्ष्मीतिलकगणिमुनिर्वाचनाचार्यवर्यः॥
द्व्याश्रयटीकाकारी द्विव्याकरणः सुदृष्टसाहित्यः।
सुकविरभयतिलकगणिश्चाशोधयतामिदं शास्त्रम्॥—अभयकुमारचरिते।

२ विचक्षणैर्ग्रन्थसुवर्णमुद्रिका विचित्रविच्छित्तसितो विनिर्मिताः।
यदीयनेत्रोत्तमरत्नयोगतः श्रियं लभन्ते कृतिमण्डले पराम्॥
तैः श्रीमल्लक्ष्मीतिलकोपाध्यायैः परोपकृत(ति)दक्षैः।
विद्वद्भिर्वृत्तिरियं समशोधितरां प्रयत्नेन॥
नगन-कर-शिखीन्दुमिते विक्रमवर्षे तपस्यसितषष्ठ्याम्।
वृत्तिः समर्थिताऽस्या मानं च सविंशतिस्त्रिशती॥—अजित० वृत्तौ धर्मतिलकः।

३ "पद्गतर्कागमशब्दलक्ष्मसुखसद्विद्याब्धिकुम्भोद्भवै-
र्यैः काव्यं सुखशुक्तिजं कृतधियां निर्दूषणं सद्गुणम्।
दीप्रं चापि कृतं सतामभिहृदं हारायते तैरसौ
श्रीलक्ष्मीतिलकाभिषेकतिलकैर्ग्रन्थो व्युदज्जल्प्यत(?)॥"—का. दु. प्र०

४ द्विद्विव्येकसमासु मासि सहसि श्वेतद्वितीयाबुधे।
द्वेधाऽप्यत्र यदाश्रयं श्रितवता काव्यं मयेदं कृतम्।
श्रीप्रद्युम्नमुनीश्वरः स विशदं सद्यः प्रसद्य व्यधात्
ज्ञैरन्यैरपि शोधनीयमसमं धृत्वा ममत्वं मयि॥—शां० प्र०
'शान्तिचरितं सं. १३२२ वर्षे मौनिदेवम् ४८८५।'—बृ०

देवेन्द्र–धर्मकुमार–प्रभाचन्द्र–बालचन्द्र–मानतुङ्ग–मुनिदेव–रत्नप्रभ–विनयचन्द्रादीनां कवीनां नैककाव्यानि विशदीकृतानि, सं. १३२४–३८ वर्षे समरादित्यसंक्षेप–प्रव्रज्याविधानवृत्त्यादीनि नैकग्रन्थरत्नानि च स्वयं प्रणीतानि। P. P. ११४ इत्यत्राम्य काव्यस्य कर्ता देवसूरिर्निर्दिष्टः, तमुल्लेखं दृष्ट्वा भ्रान्त्याऽन्यैरपि तथैवान्यत्र दर्शितम्, किन्तु न तत् समीचीनम्; नात्र मुनिपदं विशेषणरूपम्, एतद्ग्रन्थकृतोऽन्यकृतौ तथाऽन्यैरपि तत्समकालीनपाश्चात्यैर्विद्वद्भिरस्य 'मुनिदेव' इत्येव नाम प्रादर्शि। एतदद्भुतं काव्यं दृष्ट्वा सं. १४१० वर्षे मुनिभद्रसूरिणा नूतनं शान्तिचरितकाव्यं रचितम्। ग्रन्थकारोऽयं वादिदेवसूरिसन्तानीयमदनचन्द्रसूरिशिष्यः। अनेन धर्मोपदेशमालावृत्त्यादयो नैके ग्रन्था विरचयाञ्चक्रिरे। प्रद्युम्नसूरिकृतायाः प्रव्रज्याविधानवृत्तेः प्रथमा प्रतिरनेनालेखि।

सं. १३३४    पुण्यसारकथानकम्। विवेकसमुद्रगणी    पृ. ५६

अल्पीयान् दानविषयकोऽयं कथाग्रन्थः। कथाकारोऽयं जिनपतिसूरिपट्टधरजिनेश्वरसूरेः शिष्यः। सं. १३८३ वर्षे रचितायां चैत्यवन्दनकुलकवृत्तौ जिनकुशलसूरिरिमं स्वविद्यागुरुत्वेन वर्णयति स्म। जैनग्रन्थावल्यामस्य तपागच्छीयसोमसुन्दरसूरिशिष्यता षोडशशताब्दीप्रारम्भे च सूचिता सत्ता विचारासहा प्रतिभाति। जिनप्रबोधसूरिणेयं कथा विशोधितेत्यत्र प्रोक्तम्। सं. १३२८ वर्षे येन कातन्त्रवृत्तिदुर्गपदप्रबोधो विनिर्मितः, पूर्वं प्रबोधमूर्तिनामा स एव जिनप्रबोधसूरिरत्राभिज्ञायते। अन्यत्र ही. H. सू० सम्यक्त्वालङ्कारग्रन्थस्य कर्तृत्वेनास्य नाम निरदेशि।

त्रिषष्टिशलाकापुरुषचरित्रम् (गद्यम्)    क्र. १७४

एतत् केन कृतमिति स्पष्टं न ज्ञायते। शान्तिनाथचरित्रावधि खण्डरूपमेतत्। सुप्रसिद्धहेमसूरिकृतपद्यत्रिषष्टिचरितमनुसृत्यास्य निर्माणमित्येतत्प्रारम्भश्लोकविलोकनेन स्पष्टं व्यज्यतेऽतो ग्रन्थकर्तुरस्य समयस्तदनन्तरमिति स्फुटम्। 'कर्पूरप्रकर'नाम्ना सुप्रसिद्धायाः सूक्तावल्याः कर्ता हरिकवीश्वरः स्वग्रन्थप्रान्ते निजगुरुं वज्रसेनसूरिं त्रिषष्टिसारप्रबन्धकर्तृत्वेन स्मरति स्म। अयं वज्रसेनसूरिर्नागपुरीयतपागच्छीयश्चतुर्दशशताब्द्यामासीदिति पट्टावल्या समुपलब्धशिलालेखादिना च ज्ञायते। वज्रसेनसूरिकृतमेतदथवाऽन्यकर्तृकमिति न निश्चीयते।

---

१ "श्रीशान्तिवृत्तचैत्यस्थप्रतिर्धर्मोपदेशमालायाः।
एतां रचयति विवृतिं श्रीमान् मुनिदेवमुनिदेवः॥"—धर्मोपदेशमालावृ० मुनिदेवसूरिः।

२ "पूज्यश्रीमुनिदेवसूरिरचितश्रीशान्तितीर्थेश्वर-
प्रख्याताद्भुतकाव्यदर्शनतया काव्यं मयेदं कृतम्"—शान्ति० मुनिभद्रसूरिः।

३ "श्रीदेवानन्दशिष्यश्रीकनकप्रभशिष्यकः।
समरादित्यसंक्षेपकर्ता वृत्तिमिमां व्यधात्॥
वादीन्द्रदेवसूरेर्वंशे श्रीमदनचन्द्रगुरुशिष्यः।
प्रथमादर्शेऽदर्शयदेतां मुनिदेवमुनिदेवः॥"—प्रव्रज्याविधानवृत्तिः।

४ "सन्मौक्तिकस्तबकसेव्यपदोऽनुवेलमस्ताघसंवरधरः कुपथप्रमाथी।
विद्यागुरुर्मम विवेकसमुद्रनामोपाध्याय इद्धतररत्ननिधिर्बभूव॥"
—चैत्यवन्दनकुलकवृत्तिप्र०

५ "श्रीवज्रसेनस्य गुरोस्त्रिषष्टिसारप्रबन्धस्फुटसद्गुणस्य।
शिष्येण चक्रे हरिणेयमिष्टा सूक्तावली नेमिचरित्रकर्त्रा॥"—कर्पूरप्रकरप्र०

ले. सं. १३८० ऋषिमण्डलवृत्तिः क्र. १२६

'महरिसिकुलक' इत्यपरनामकं मूलमात्रमेतद् धर्मघोषसूरिकृतं P. P. ११९३; ३।२८ इत्यत्र दर्शितम्, तदेव। गुर्वावल्यां (पृ. १७-२१) वर्णितः सं. १३५७ वर्षे स्वर्गामी सङ्घाचारवृत्त्यादिविधाताऽयं सूरिर्न प्रतिभाति, किन्तु सिद्धराजसमकालीनोऽन्यो वा (पृ. १०) सम्भाव्यते। वृत्तयोऽस्य ग्रन्थस्य बह्व्यो वर्त्तन्ते, किन्तु तासु प्राचीनाऽञ्चलगच्छीयभुवनतुङ्गसूरिकृता, या बृहट्टिपनिकायां दर्शिता, भुवनतुङ्गसूरेर्विद्यमानता चतुर्दशशताब्द्यामासीदित्यञ्चलगच्छपट्टावल्यादितो ज्ञायतेऽत इयं वृत्तिस्तत्कृतैव सम्भाव्यते, येनातुरप्रत्याख्यान-चतुःशरणवृत्त्याद्यपि निर्मितम्। मूले दर्शितानां जैनमहर्षीणां चरित्राणि वृत्तौ प्रदर्शितानि ॥[1]

सं. १४०६ अञ्जणासुन्दरीचरियम्। गुणसमृद्धिमहत्तरा पृ. ४९

चरितस्यास्य रचना जेसलमेरपुरे। ग्रन्थकर्त्री चेयं खरतरगच्छीय जिनचन्द्रसूरिशिष्यः। सम्भ्रमात् ही. सूच्यां सं. १४७७ वर्षेऽस्या रचना सूचिता। अयं जिनचन्द्रसूरिः जिनलब्धिसूरिशिष्यः; जिनोदयसूरेः, सं. १४११ वर्षे कातन्त्रवृत्तिपञ्जिकालेखयितुः सोमकीर्तेश्च गुरुः सं. १४१५ वर्षे स्वर्गभाग् ज्ञायते। चरितवस्तुज्ञानार्थं शीलोपदेशमालावृत्तौ (पृ. २८१-२९८) द्रष्टव्यम्।

सं. १५०३ पृथ्वीचन्द्रचरित्रम्। जयसागरगणिः पृ. ५६

एकादशप्रस्तावविभूषितस्यास्य चरित्रस्य रचना प्रह्लादनपुरे समजायत। चरित्रकारस्यास्य जिनराजसूरिर्दीक्षागुरुः, जिनवर्धनसूरिर्विद्यागुरुः, जिनभद्रसूरिश्चोपाध्यायपदप्रदाताऽऽसीत् (पृ. ५७)। सत्यरुचिनाम्नः शिष्यस्याभ्यर्थनया रचितेऽस्मिंश्चरित्रे गणिरत्नचन्द्रः सहायकोऽभवत्। सत्यरुचि-रत्नचन्द्रावस्य शिष्यावास्तामिति दर्शितमेतत्कृतायां विज्ञप्तित्रिवेण्याम् (पृ. १७, २१,५५)। सं. १४७३ वर्षे जेसलमेरौ पार्श्वजिनालयप्रशस्तिरनेन गणिना शोधिता (पृ. ६४), शान्तिजिनालयस्य प्रशस्तिश्च विरचिता (पृ. ६६)। सं. १४९७ वर्षे जे० सम्भवजिनालयस्य प्रशस्तिकर्ता वा० सोमकुञ्जरोऽस्य शिष्यः (पृ. ६९); एतद्व्यतिरिक्ता मेघराज-स्थिरसंयमाद्यो नैके शिष्टशिष्या अस्याभवन्। सं. १४७८ वर्षे पर्वरत्नावलीकथा, सं. १४८४ वर्षे विज्ञप्तित्रिवेणिः, तीर्थराजीस्तवनम्, सं. १४८७ वर्षे चैत्यपरिपाटिः, उपसर्गहरस्तोत्रवृत्तिः, जिनदत्तसूरीयगुरुपारतन्त्र्यादिस्तववृत्तिः, भावारिवारणवृत्तिः, सं. १४९५ वर्षे सन्देहदोलावलीलघुवृत्तिः इत्यादिकाऽस्य विदुषः कृतिः समुपलभ्यतेऽनेनास्य पञ्चदशशताब्द्युत्तरार्धे षोडशशताब्दीप्रारम्भे च विद्यमानता परिस्फुरती प्रौढविद्वत्ता च सम्यग् ज्ञायते। आशापल्लीकोशार्थं सं. १४९५-९७ वर्षेऽनेन लेखितं व्यवहारचूर्ण्यादिपुस्तकमुपलभ्यते। जिनभद्रसूरेर्ग्रन्थसङ्ग्रहालये चानेनापि ग्रन्थलेखनादिना सुसहायताऽकारि।[2][3]

सं. १६२४ परमहंससम्बोधचरितम्। नयरङ्गः पृ. ५७ [A. S. ८।११२]

अष्टप्रस्तावोपेतस्यास्य चरितस्य विरचयिता नयरङ्गो खरतरगच्छीयजिनभद्रसूरिसन्तानीयवा० गुणशेखरस्य शिष्यः। रचनास्थलं बालपताकापुरीति निर्दिष्टमेवात्र। कथावस्तु त्वत्र जयशेखरसूरिरचितस्य प्रबोधचिन्तामणिग्रन्थस्य प्रतिभाति।

---

१ "भत्तिब्भर इति ऋषिमण्डलसूत्रम् २०८। अस्य वृत्तिराञ्चलिकभुवनतुङ्गीया।"—बृ०

२ एतस्य पठनार्थं सं. १५०१ वर्षे जयसागरोपाध्यायलिखितः क्रियारत्नसमुच्चयः अस्योपदेशेन च सं. १५२१ वर्षे लेखितः सिद्धहैमलक्षणबृहद्वृत्तिकक्षापटग्रन्थः पत्तनभाण्डागारे विद्यते।

३ एतत्कृतानि जिनभद्रसूरिस्तुतिपराणि नैकानि चित्रकाव्यानि विज्ञप्तित्रिवेण्यां (पृ. ६१-६३) दर्शितानि। सं. १४९५ वर्षेऽनेन स्वगुरुकृतायाः सन्देहदोलावलीवृत्तेः प्रथमा प्रतिर्लिखिताऽऽसीत् ॥

सं. [१६?]६२ शीलवतीकथा। आज्ञासुन्दरः पृ. ५५

एतत्कथाकर्ता रुद्रपल्लीयगच्छीयः सप्तदशशताब्द्यां सम्भाव्यते। कथावस्तु शीलतरङ्गिण्यां (पृ. ४१३-४३४) विलोकनीयम्।

[सं. १८६९] श्रीपालचरित्रव्याख्या। क्षमाकल्याणः पृ. ५६ [A. ९।८४]

अस्या मूलं सवृत्तिकक्षेत्रसमास-गुणस्थानक्रमारोह-गुरुगुणषट्त्रिंशत् षट्त्रिंशिकादिविधात्रा बृहद्गच्छीयवज्रसेनसूरिपट्टधरहेमतिलकसूरिशिष्येण रत्नशेखरसूरिणा सङ्कलितम्, सं. १४२८ वर्षे तच्छिष्यहेमचन्द्रसाधुना च लिखितमासीत्। उनविंशतिशताब्द्यां विद्यमानोऽयं व्याख्याकार इति सूचितमस्यान्यग्रन्थ—सूक्तरत्नावलीपरिचये।

## जैनेतरकथा।

ले. सं. १२६५ लीलावतीकथा (प्रा०)। भूषणभट्टतनयः[1] क्र. २३७

कर्तुर्नाम नोपलभ्यते। कथाकारस्य पितामहो बहुलादित्यः। एतत्कथारत्नं विद्वद्भिरज्ञातपूर्वमेव ज्ञास्यते। एकं जेसलमेरुनगरेऽपरं च पत्तने एवमस्य प्राचीनमादर्शद्वयमेव भारतवर्षे विद्यते इति प्रतिभात्यस्माकम्। कविना कथावस्तु त्वतिमनोहरया वाण्या दुःखिनामुद्धारकत्वेन कवीनामाश्रयदातृत्वेन, गाथासप्तशतीप्रणेतृत्वेन च सुप्रसिद्धस्य प्रतिष्ठानपुरविभूषणस्य सालाहण(सातवाहन)नृपस्य सिंहलद्वीपराजपुत्रीलीलावतीसंयोगमनुसृत्य निबद्धम्[2]। लघीयस्यपि सुललितेयं प्राकृता कथा बाणभट्टस्य कादम्बर्यै स्पर्द्धते। हैमकाव्यानुशासने 'धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा' इत्येतत्सूत्रव्याख्यायां 'काचित् पद्यमयी यथा लीलावती' इत्युदाहरणेनेयं स्मर्यते वा जिनेश्वरसूरिरचिताऽन्या लीलावती कथा इति स्पष्टं नावबुध्यते तथाप्यस्या निर्माणं द्वादशशताब्द्यामथवा ततोऽपि पूर्वं सम्भावयितुं शक्यते।

शृङ्गारमञ्जरी। भोजः क्र. ३२५(१)

कथासङ्ग्रहमयीयं सुरसा कथा संस्कृतभाषायां संस्कृतभाषाजीवातुना सरस्वतीकण्ठाभरणादिप्रणेत्रा महाराजभोजदेवेन विरचितेति तदन्तर्गतैकपत्रे उल्लेखदर्शनादवगम्यते[3]।

## व्याकरणग्रन्थाः।

सं १०८० पञ्चग्रन्थी (बुद्धिसागरव्याकरणम्)। बुद्धिसागराचार्यः क्र. १७६

अस्य रचना जावालिपुरे इत्याद्येतत्प्रान्ते दर्शितमेव। एतद्व्याकरणनिर्माणस्य समसमयस्थानयोः (सं. १०८० वर्षे, जावालिपुरे) अष्टकवृत्त्यादिविरचयित्राऽस्य सहोदरेण जिनेश्वरसूरिणा दुर्जनवाक्यान्येतद्व्याकरणनिर्माणे हेतुभूतानि दर्शितानि[4]। पञ्चग्रन्थी इत्यस्यापरा संज्ञा ज्ञायते।

---

१ 'लीलावतीकथा भूषणभट्टसुतकृताऽऽद्यरसमिश्रिता च परसमयगता गाथाः १४३९'—बृ०

२ "हियए च्चिय विलीयंति सुइरपरिचिन्तिया वि सुकईण।
जेण विणा दुहियाण व मणोरहा कव्वविणिवेसा॥"—लीलावती।

३ इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारमञ्जरीकथायां देवदत्ताकथानिका पञ्चमी। अन्यच्च पुत्रि! महासत्त्वं महासाहसिकत्वं च सम्यगुपलभ्य आत्मत्यागेनाप्यर्थं साधयतां न दुरापाः स्वार्थसिद्धय इति यत्पूर्वमुक्तं तदपि ते कथयामि। अस्त्यत्र भुज(भू)तलप्रसिद्धमतिविभववणिग्व्यवहकवच्च(?)प्रभृतिभिर्महा[ज]नैरधिष्ठितमहिच्छत्रं नाम नगरम्।—एकत्र पत्रे।

४ "तैरवधीरिते यत्तु प्रवृत्तिरावयोरिह। तत्र दुर्जनवाक्यानि प्रवृत्तेः सन्निबन्धनम्॥
कीदृशानि दुर्जनवाक्यानीत्याह—
शब्दलक्ष्म प्रमालक्ष्म यदेतेषां न विद्यते। नादिमन्तस्ततो ह्येते परलक्ष्मोपजीविनः॥
तथा च किं जातमित्याह—
श्रीबुद्धिसागराचार्यैर्वृत्तैर्व्याकरणं कृतम्। अस्माभिस्तु प्रमालक्ष्म वृद्धिमायातु साम्प्रतम्॥

सं. १०९५ वर्षे [1]धनेश्वरसाधुः पञ्चग्रन्थीनामधेयामेतां कृतिं प्राशंसत् । श्रीधरभाण्डारकरेण शब्दलक्ष्मलक्षणनाम्नैतत् समसूचि । 'शब्दलक्ष्म' 'पञ्चग्रन्थी' 'बुद्धिसागर' इति त्रीण्यपि नामानि ग्रन्थकर्त्रा ध्वनितानि । सं. ११२०-२४ वर्षे[2]ऽभयदेवसूरिः, सं. ११२५ वर्षे [3]जिनचन्द्रसूरिः, सं. ११३९ वर्षे [4]गुणचन्द्रगणिः, [5]जिनदत्तसूरिः, सं. १२९४ वर्षे विद्यमानः [6]पद्मप्रभसूरिः, सं. १२९५ वर्षे [7]सुमतिगणिः, सं. १३३४ वर्षे [8]प्रभाचन्द्रसूरिरित्यादयो ग्रन्थकर्तारो निजनिजग्रन्थेषु व्याकरणादिग्रन्थकृत्त्वेनैनं वर्णयामासुः । अयं व्याकरणकारो वर्धमानसूरेः शिष्यः, सुरसुन्दरीकथाकृद्धनेश्वरसाधु-संवेगरङ्गशालाकारजिनचन्द्रसूरि-नवाङ्गीवृत्तिकाराभयदेवसूरीणां गुरोरष्टकवृत्ति-कथाकोश-पञ्चलिङ्गीप्रकरण-प्रमालक्ष्म-षट्स्थानकप्रकरणादिग्रन्थकर्तुश्चैत्यवासिविजेतुर्जिनेश्वरसूरेश्च सहोदरः सतीर्थ्यश्च । [8]प्रभाचन्द्रसूरिणाऽस्य व्याकरणस्य सहस्राष्टकमानं दर्शितं तन्न सम्यग्, यतः स्वयमेव कर्त्राऽस्य सप्तसहस्रकल्पत्वं समसूचि । ही. श्रीधरभाण्डारकरेण च प्रमालक्ष्मग्रन्थोऽस्य कृतित्वेन निर्दिष्टो न चैवम्, स तु जिनेश्वरसूरिविरचित इति तत्प्रान्तादवगम्यतेऽन्यत्र चैतद् विचारितम् ।

बलाबलसूत्रवृत्तिः पृ. ४५

बृहद्वृत्तेः संक्षिप्येयं निर्मितेति प्रान्ते दर्शितम् । इयं D. सूचिपत्रे हेमचन्द्रकृतित्वेन सूचिताऽन्यत्र ( B. पृ. १४८, I. पृ. २०४ ) परिभाषावृत्तिनाम्ना दुर्गसिंहकृतित्वेन निर्दिष्टा । प्रारम्भश्लोकस्तु प्रायः सर्वत्र समानः, किं तथ्यं तत्तु तत्पुस्तकपर्यालोचनसाध्यम् ।

---

व्या० श्रीबुद्धिसागराचार्यैः पाणिनि-चन्द्र-जैनेन्द्र-विश्रान्त-दुर्गटीकामवलोक्य वृत्तबन्धैः(!) धातुसूत्रगणोणादिवृत्तबन्धैः कृतं व्याकरणं संस्कृतशब्द-प्राकृतशब्दसिद्धये ॥"—प्रमालक्ष्मप्रान्ते ।

१ "जस्स य मुहकुहराओ विणिग्गया अत्थवारिसोहिल्ला ।
बुहचक्कवायकलिया रंगंतगुफक्कियतरंगा ॥
तडरुहअवसद्दमहीरुहोहउम्मूलणम्मि सुसमत्था ।
अज्जायपवरतित्था पंचग्गंथीनई पवरा ॥"—सुरसुन्दरीकथाप्रशस्तिः ।
'पञ्चग्रन्थी पञ्चाङ्गं व्याकरणम्'-प्रा. टिप्पणी

२ 'व्याकरणादिशास्त्रकर्तुः श्रीबुद्धिसागराचार्यस्य ।'—स्थानाङ्गवृत्तिः ।
"अन्योऽपि वित्तो भुवि बुद्धिसागरः पाण्डित्यचारित्रगुणैरना(नु)पमैः ।
शब्दादिलक्ष्मप्रतिपादकानघग्रन्थप्रणेता प्रवरः क्षमावताम् ॥"—पञ्चाशकवृत्तिः ।

३ "बीओ पुण विरइयनिउणपवरवागरणपमुहबहुसत्थो ।
नामेण बुद्धिसागरसूरि त्ति अहेसि जयपयडो ॥"—संवेगरङ्गशालाप्रशस्तिः ।

४ "अन्नो य पुन्निमाचंदसुंदरो बुद्धिसागरो सूरी ।
निम्मवियए(प)वरवागरण-छंदसत्थो पसत्थमई ॥"—महावीरचरियप्रशस्तिः ।

५ "तिजयगयजीवबंधू जं बंधू बुद्धिसागरो सूरी ।
कयवायरणो वि न जो विवायरणकारओ जाओ ॥"—गणधरसार्धशतकम् ।

६ "श्रीबुद्धिसागरो बुद्धिविभवं वितनोतु मे ।
पद्यैः पद्येव शब्दाब्धेर्येन व्याकरणं कृतम् ॥"—कुन्थुनाथचरितम् ।

७ "अथ च स्वनामानुरूपकृतव्याकरणोऽपि ।"—गणधरसार्धशतकबृहद्वृत्तिः ।

८ "श्रीबुद्धिसागरः सूरिश्चक्रे व्याकरणं नवम् ।
सहस्राष्टकमानं तत् श्रीबुद्धिसागराभिधम् ॥"—प्रभावकचरितम् ।

ले. सं. १२०६ विभक्तिविचारः क्र. २२२(२)

ही. सूचिपत्रेऽयं ग्रन्थो जिनपतिसूरिविरचितो दर्शितः, किन्तु तत्समयविचारणायां नैतत् सम्भवति; यतः सं. १२१० वर्षे तस्य जन्मेत्यादि पूर्वं (पृ. २८) सूचितम्।

ले. सं. १२०७ स्याद्यन्तप्रक्रिया। सर्वधर उपाध्यायः क्र. २६(१)

दुर्गसिंहवृत्तिटीकारूपा 'वाङ्मयप्रदीप' इत्यपराह्वाऽस्य विदुषस्त्याद्यन्तप्रक्रिया P. P. ६।२० इत्यत्र प्रदर्शिता; तथैवेयमपि काण्डचतुष्टयविभक्ता षड्लिङ्गप्रकरणप्रक्रिया कातन्त्रवृत्तिटीकारूपा सम्भाव्यते। B. पृ. १४८ इत्यत्रोल्लिखिता परादिव्याख्यावृत्तिरस्य कृतिर्ज्ञायते। ग्रन्थकारोऽयं बौद्धो भाति। धातुरत्नाकरकार—भरतसेन-भानुजी—रायमुकुटादिभिरयं स्मर्यतेस्म।

कातन्त्रोत्तरम् (विद्यानन्दम्)। विजयानन्दः क्र. २१५ (१), ३१६

P. P. ४।१६ इत्यादावस्य 'सिद्धानन्द' इति नाम सूचितं तन्न सम्यग्, यतः सं. १३१२ वर्षेऽभयकुमारचरितस्य कर्ता चन्द्रतिलकोपाध्यायोऽस्य 'विद्यानन्द' इति नाम दर्शितवान् (पृ. ४९) यश्चादोऽध्यैष्ट। अन्यत्राप्येतदेव नाम समुपलभ्यते। जैनग्रन्थावल्यामेतन्नाम वृ० स्खलनोद्भवं सूचितं तन्न सुष्ठु। क्रियाकलापादिकर्ताऽयं चैक एव प्रतिभाति।

कातन्त्रवृत्तिपञ्जिका। त्रिलोचनदासः क्र. ३४,७१,१०४,२६१; पृ. ५३

दुर्गसिंहवृत्तिविषमपदव्याख्यारूपा सुलभेयमन्यत्रापि (B. पृ. १४८, A. २।३३६) सूचिता। पञ्जिकाकारोऽयं बौद्धो ज्ञायतेऽनेन कातन्त्रोत्तरपरिशिष्ट-धातुपारायणाद्यपि कृतं श्रूयते।

ले. सं. १२७१ व्याकरणचतुष्कावचूरिः(र्णिः) क्र. २९३(१)

अस्याः प्रारम्भश्लोकः कनकप्रभकृतस्य हैमन्यासस्य प्रारम्भश्लोकेन (पृ. ५३) सह संवदति। स एव हैमन्यासोऽयमथवा काऽप्यन्याऽवचूरिरिति प्रतिदर्शनं विना निर्णयोऽशक्यः। इयं पुस्तिका नरचन्द्रसूरीणामादेशेन पं. गुणवल्लभेन समर्थितेति वाक्येन संस्कृत्य लिखितेति प्रतिभाति।

दु. सं. १३२८ कातन्त्रवृत्तिदुर्गपदप्रबोधः। प्रबोधमूर्तिः क्र. १५१

अस्य ग्रन्थकर्तुर्जन्म सं. १२८५ वर्षे, दीक्षा सं. १२९६ वर्षे, सूरिपदं सं. १३३१ (३३) वर्षे, स्वर्गमनं च सं. १३४१ वर्षे इति ख० पट्टावल्यादितो ज्ञायते। अयं खरतरगच्छीयजिनेश्वरसूरेः शिष्यो जिनचन्द्रसूरेश्च गुरुरासीत्। अस्य सूरिपदात् पूर्वं प्रबोधमूर्त्तिरिति, सूरिपदानन्तरं च जिनप्रबोधसूरिरिति नामाभवत। पत्तनीयप्रतिप्रान्ते तत् स्फुटमुल्लिखितं दृश्यते। एतद्ग्रन्थरचनावसरे प्रबोधमूर्तिरिति नामासीत्। सं. १३३३ वर्षीये गिरिनारगिरिशिलालेखे जिनप्रबोधसूरिरिति नाम निर्दिष्टम्। सं. १३३४ वर्षे विवेकसमुद्रगणिना विरचिता पुण्यसारकथाऽनेन संमशोधीति तत्रापि पाश्चात्यमेव नाम दर्शितम्। सं. १३५१ वर्षे प्रह्लादनपुरे जिनचन्द्रसूरिणा प्रतिष्ठिताऽस्य सूरेर्मूर्तिः स्तम्भतीर्थे विद्यते।

---

१ "कातन्त्रोत्तरं विद्यानन्दापरनामकं समासप्रकरणं यावत् विद्यानन्दसू० कृ० व्या०।"—वृ०

२ 'कातन्त्रचतुष्काख्यातकृत्पञ्जिका त्रिलोचनदासकृता दौर्गसिंहवृत्तिविषमपदव्याख्यारूपा।'-वृ०

३ "सामान्यावस्थायां प्रबोधमूर्तिगणिनामधेयैः श्रीजिनेश्वरसूरिपट्टालङ्कारैः श्रीजिनप्रबोधसूरिभिर्विरचितो दुर्गपदप्रबोधः सम्पूर्णः॥"—का० दु० प्र० P.

४ "षट्तर्कसिद्धान्तपयोधिकुम्भजन्मादिभसिंहैः सुलब्धिवार्धिभिः।
कथाऽसकौ श्रीमुनिराजनायकैर्जिनप्रबोधप्रभुभिर्विशोधिता॥"—पुण्यसारकथा।

सं. १३३६ बालशिक्षा । सङ्ग्रामसिंहः पृ. ४५

इयं सार्ववर्मिकात् कातन्त्रात् संक्षिप्य रचिता । ग्रन्थकारश्च श्रीमालवंशीयठक्कुरकूरसिंहपुत्र इत्यादि सूचितमेवात्र । गूर्जरभाषाऽत्र प्रयुक्ता दृश्यते ।

टी. सं. १३५२ कातन्त्रविभ्रमटीका । जिनप्रभसूरिः पृ. ४८

अस्या मूलं 'कस्य धातोस्तिवादीनाम्' इत्यादि हैमविभ्रमे मुद्रितं तदेव । टीकारचना योगिनीपुरि (दिल्ल्यां) कायस्थखेतलस्याभ्यर्थनया जातेत्यादि त्वत्र प्रोक्तमेव । टीकाकारोऽयं जिनप्रभसूरिरसाधारणप्रतिभावान् प्रभूतग्रन्थप्रणेता लघुखरतरगच्छप्रवर्तकस्य जिनसिंहसूरेः शिष्यः । प्रतिदिनं नवस्तवनिर्माणपुरःसरं निरवद्याहारग्रहणाभिग्रहवता चानेन यमक-श्लेष-चित्र-छन्दोविशेषादिनवनवभङ्गीसुभगा निजनामाङ्किताः सप्तशतीमिताः स्तवास्तपागच्छीयसोमतिलकसूरये उपदीकृताः श्रूयन्ते ( काव्यमाला गु. ७ पृ. ८६ ) । तेषु गोतमस्तोत्र-चतुर्विंशतिजिनस्तुति-स्तव-जिनराजस्तव (प्रा०)-द्व्यक्षरनेमिस्तव-पञ्चपरमेष्ठिस्तव-पार्श्वस्तव-वीरस्तव-शारदास्तोत्र-सर्वज्ञभक्तिस्तव-सिद्धान्तस्तवादयश्च समुपलभ्यन्तेऽपि । ज्ञानप्रकाश-धर्माधर्मविचार-परमसुखद्वात्रिंशिकादीनि प्राकृतापभ्रंश-संस्कृतकुलकान्यपि दृश्यन्ते । सं. १३२७-१३८९ वर्षेषु विविधतीर्थकल्पः, अनेकप्रबन्ध-अनुयोगचतुष्कोपेतगाथा-आवश्यकसूत्रावचूरि( षडावश्यकटीका )-चतुर्विधभावनाकुलक-चैत्यपरिपाटि-तपोटमतकुट्टन-नर्मदासुन्दरीसन्धि-नेमिनाथ-मुनिसुव्रतजन्माभिषेक-षट्पञ्चाशद्दिक्कुमारिकाभिषेक-नेमिनाथरास-प्रायश्चित्तविधान-युगादिजिनचरित्रकुलक-स्थूलभद्रफाग(?)-सूरिमन्त्रप्रदेशविवरणादयोऽनेके ग्रन्थाः, सं. १३५६ वर्षे द्व्याश्रयमहाकाव्यम् (श्रेणिकचरितम्), सं. १३६३ वर्षे विधिप्रपा ( सामाचारी ), सं.१३६४ वर्षे सन्देहविषौषधिः ( कल्पसूत्रवृत्तिः ), साधुप्रतिक्रमणसूत्रवृत्तिः, सं. १३६५ वर्षेऽयोध्यायाम् अजितशान्तिस्तववृत्ति-उपसर्गहरस्तोत्रवृत्ति-भयहरस्तोत्रादि(समवसरण?)वृत्तय इत्यादीन्यनल्पानि ग्रन्थरत्नान्यस्य प्रौढपाण्डित्यपटहरूपाणि दृष्टिगोचरीभवन्ति । सं. १३४९ वर्षे रचितायां स्याद्वादमञ्जर्यां मल्लिषेणसूरिरस्य साहाय्यं स्वीचक्रे । सं १४०५ वर्षे प्रबन्धकोषादिप्रणेता राजशेखरसूरिर्न्यायकन्दलीपञ्जिकायाम्, रुद्रपल्लीयसङ्घतिलकसूरिश्च सं. १४२२ वर्षे विरचितायां सम्यक्त्वसप्ततिवृत्तौ दिल्ल्यां साहिमहम्मदप्रतिबोधकमेनं विद्यागुरुत्वेन वर्णयतः स्म । P. P. ४ इत्यत्र पृथग् दर्शितो जिनप्रभसूरिर्नास्माद् भिन्नः ।

सम्बन्धोद्योतः । रभसनन्दिः पृ. ४६ [ B. पृ. १५१, I. २०८,९ ]

अयं ग्रन्थोऽन्यत्र पटकारकसंज्ञया वल्लभानन्द-वहसनन्द्यादिविरचितश्च दर्शितः, किन्त्वत्र दर्शितमेव कर्तुर्नाम सम्यक् प्रतिभाति । सवृत्तिकोऽयं ग्रन्थः सं. १९४९ वर्षे नोअखालि ( Noakhali ) इत्यत्र मुद्रितः श्रूयते न च दृष्टः । P. P. ३।४०७ इत्यत्र सं. १५०१ वर्षे लिखिताऽस्य प्रतिः सूचितेति तत्पूर्वमस्य रचना स्फुटैव ।

## काव्यग्रन्थाः ।

चन्द्रदूतकाव्यम् [ जम्बूकविः ] क्र. ३४५(१)

यमकमयमेतल्लघुकाव्यं केन निर्मितमिति यद्यपि नात्र दर्शितम्, तथापि P. P. ३।२९२ इत्यत्र जम्बूकविकृतं सूचितं तदेवैतत् प्रतिभाति । अयं च जम्बूकविः स एव ज्ञायते, यद्विहितजिनशतकस्य सं. १०२५ वर्षे शाम्बसाधुना वृत्तिर्विरचिता । अस्मिंश्च सूचीपत्रे निर्दिष्टो मुनिपतिचरित्रकारो जम्बूनागो नास्माद् भिन्नः सम्भाव्यते । दलालेन यद्यपि मूलमात्रमेव दर्शितमेतत् काव्यम्, किन्तु काव्यप्रमाणापेक्षया पत्रसङ्ख्याया आधिक्येन वृत्तिसहितं सम्भवेत् । H. प्रतौ शान्तिसूरिविरचिता वृत्तिर्विलोक्यते, सैव वृत्तिरत्रापि भविष्यतीति सम्भावये ।

वृन्दावनयमकम् [ सवृत्ति ] क्र. ३४५(३)

मूलमात्रं त्वेतन्मुद्रितम्, किञ्चैतदपि पूर्ववत् शान्तिसूरिविरचितया वृत्त्या समेतं सम्भाव्यते । अस्य वृत्तिप्रारम्भे वृत्तिकर्त्रा शान्तिसूरिणैतेन साकं पञ्चानां यमकमयकाव्यानां वृत्तिं कर्तुं

प्रतिज्ञातम् । अयं च शान्तिसूरिः पूर्णतल्लगच्छीयवर्धमानाचार्यस्य मुख्यशिष्यः । धनपालकविकृतायास्तिलकमञ्जर्याः टिप्पनं जैनतर्कवार्तिकवृत्तिश्चैतत्कृते विलोक्येते । एकादश-द्वादशशताब्दीमध्यकालीनोऽयं वृत्तिकारः सम्भाव्यते ।

मेघाभ्युदयकाव्यवृत्तिः । शान्तिसूरिः क्र. ३४५(२)

मूलमात्रमेतन्मानाङ्कविनिर्मितं P. P. ३।२९१ इत्यत्र प्रदर्शितं तदेव । वृत्तिकारः शान्तिसूरिः पूर्वसूचितः स एव ।

राक्षसकाव्यटीका क्र. ३४५(४)

कालिदासकृतित्वेन प्रसिद्धमेतन्मूलमात्रं तु मुद्रितम् । टीकाकर्तुर्नाम नोपलभ्यते । शान्तिसूरिणा वृन्दावनकाव्य-घटखर्परकाव्य-मेघाभ्युदयकाव्य-शिवभद्रकाव्य-चन्द्रदूतकाव्यसंज्ञकानां पञ्चानां यमकमयकाव्यानां वृत्तयो विनिर्मितास्तेनैवेयमपि टीका विहिता वाऽन्येन केनचिदिति स्पष्टं न विज्ञायते । एतत्पुस्तकविलेखनं सं. १२१५ वर्षे जिनदत्तसूरिशिष्यजिनचन्द्रसूरेः शिष्यो जिनमत(? पति)यतिर्व्यधादिति प्रान्तप्रशस्तितोऽवगम्यते । लेखकोऽपि व्याख्याता सम्भाव्यते ।

घटखर्परटीका क्र. ३४५(५)

मूलमात्रमेतन्मुद्रितम् । टीकाकर्तुर्नाम नात्र दर्शितम्, तथापि शान्तिसूरिकृतेयमिति सम्भाव्यते; यस्मान्या वृत्तयोऽत्रैव पुस्तके प्रदर्शिताः ।

ले. सं. १३४३ मधुवर्णनम् । केलिकविः क्र. १९८(३)

ले. सं. १३४३ विरहिणीप्रलापम् । केलिकविः क्र. १९८(४) [S. २।२८]

एतद् द्वयमपि यमकमयं लघुकाव्यं कवेः प्रौढकवित्वं प्रतिपादयति । कविवर्यस्यास्य सत्तासमयो न विज्ञातः ।

चक्रपाणिविजयम् । [ लक्ष्मीधरः ] क्र. २८१(१) [ S. २।७६ ]

अयं कविराजो भोजदेवसमकालीन इति प्रान्तप्रशस्तितोऽवगम्यते ।

भट्टिकाव्यलघुटीका । अनिरुद्धः क्र. ८३

इयमपूर्णा प्राचीना टीका न क्वाप्यन्यत्रोपलभ्यते । टीकाकारोऽयमनिरुद्धपण्डितः कदाऽऽसीदिति न विज्ञायते । साङ्ख्यसूत्रवृत्ति-भाष्यवार्तिकटीकाविवरणपञ्जिकाकारश्चानिरुद्धोऽस्माद्भिन्नोऽनुमीयते ।

किरातार्जुनीयटीका । प्रकाशवर्षः पृ. ५५ [ M. L. पृ. ७७०३ ]

इयं प्राचीना लघुटीका कदा प्रादुर्भावमाप्तेति न निश्चयेन ज्ञायते । टीकाकारेण स्वस्य काश्मीरकत्वं हर्षतनयत्वं च समसूचि । भट्टनरसिंहसूनुर्गौडकविः टीकाकारस्य विद्यागुरुर्ज्ञायते ।

---

१ वृन्दावनादिकाव्यानां यमकैरतिदुर्विदाम् । वक्ष्ये मन्दप्रबोधाय पञ्चानां वृत्तिमुत्तमाम् ॥—H.

२ चरणकरणदक्षः क्षीणदोषो जिताक्षः क्षपितविविधविपक्षः क्षान्तिमान् बद्धकक्षः ।
यतिपतिजिनदत्ताचार्यदत्तोपदेशास्खलितमहिमयोगात् कान्तकीर्तिर्मुनीन्द्रः ॥ १ ॥
समजनि जिनचन्द्रश्चन्द्रवच्चारुरोचिर्गणधरपदलाभाल्लब्धलोकप्रतिष्ठः ।
जिनमत(?)यतिरेतत्तद्विनेयः सुशान्तो व्यलिखदमलबुद्धिः कृत्स्नकर्मक्षयाय ॥ २ ॥
शरचन्द्रसूर्यसङ्ख्ये संवद्विक्रमभूपतेः । अतियाति नभोमासे पञ्चदश्यां तिथौ रवौ ॥ ३ ॥
यावज्जिनप्रवचनं प्रवरप्रतापं यावज्जिनागमविदो यतिनोऽपपापाः ।
यावत्सुदर्शनभृतः स्थिरधीरचित्तास्तावत् सुपुस्तकमदः सुधियः पठन्तु ॥ ४ ॥—H.

नैषधटीका ( साहित्यविद्याधरी ) । विद्याधरः क्र. १०७,१४२

इयं द्वादश्यां वा त्रयोदश्यां शताब्द्यां विनिर्मिता सम्भाव्यते, यतोऽस्याः स्मरणं सं. १३५३ वर्षे विरचितायां नैषधदीपिकायां पं० चाण्डूभट्टः कृतवान्[1] ।

[वृ. सं. १३१२[2] ] द्व्याश्रयवृत्तिः । अभयतिलकगणिः क्र. १९४,१९६

विंशतिसर्गविभूषितमेतन्महाकाव्यं सुप्रसिद्धहेमचन्द्राचार्येण ( पृ. २६ ) विरचितम् । अस्य वृत्तिः प्रह्लादनपुरे पूर्णभावं प्राप । इयं दशसर्गपर्यन्तं मुद्रिता प्रसिद्धा । मूलकाव्यस्य गूर्जरानुवादोऽसमीचीनोऽपि प्रसिद्धः । अनेन वृत्तिकारेण वृत्तिविरचनाकाल एव ( सं. १३१२ वर्षे ) चन्द्रतिलकोपाध्यायरचितमभयकुमारचरितं समशोधि । अस्यैव विदुषः पञ्चप्रस्थन्यायतर्कव्याख्या चास्मिन् पुस्तके दर्शिता । त्रयोदशशताब्दीप्रान्तरूपश्चतुर्दशशताब्दीप्रारम्भरूपोऽस्य सत्तासमयः स्फुटमवगम्यते । वृत्तिकारोऽयं चान्द्रकुलीन( खरतरगच्छीय )जिनेश्वरसूरिशिष्य इत्याद्यस्यान्यग्रन्थपरिचये ( पृ. ३१ ) परिचायितम् ।

[ टी. सं. १६९५ ] रघुवंशटीका । समयसुन्दरः पृ. ४५

इयं टीका सं.१६९५ वर्षे विनिर्मितेत्यन्यत्र (II.) प्रदर्शितम् । टीकाकारोऽयं समयसुन्दरगणिः बृहत्खरतरगच्छीयसकलचन्द्रगणिशिष्यः सप्तदशशताब्द्युत्तरार्धे विद्यमान आसीत् । टीकाकर्तुश्चास्य संस्कृतगूर्जरभाषाभिरामाऽनल्पा कृतिसंहतिरेव प्रौढविद्वत्तां प्रघोषयति । अद्यावधि ज्ञाता च सेयं ज्ञाप्यते—

| | | | |
|---|---|---|---|
| सं. १६४१ | भावशतकम् | सं. १६७४ | विचारशतकम् |
| सं. १६४६ | अष्टलक्षार्थी ( अर्थरत्नावली ) | सं. १६८१ | वल्कलचीरीचोपाई ( गू. ) |
| सं. १६५९ | सांबप्रद्युम्नचोपाई ( गू. ) | सं. १६८२ | वस्तुपालतेजपालरास ( गू. ) |
| सं. १६६२ | करकंडुचोपाई ( गू. ) | ,, | शत्रुञ्जयरास ( गू. ) |
| ,, | दान-शील-तप-भावनासंवाद(गू.) | सं. १६८५ | बारव्रतरास ( गू. ) |
| सं. १६६३ | रूपकमालावचूर्णिः | ,, | विशेषसङ्ग्रहः |
| ,, | गाथा-लक्षणम् (प्रा.) | ,, | विसंवादशतकम् |
| सं. १६६५ | चारप्रत्येकबुद्धरास ( गू. ) | सं. १६८६ | गौतमपृच्छारास ( गू. ) |
| ,, | चातुर्मासिकव्याख्यानम् | ,, | गाथासहस्री ( प्रा. सं. ) |
| सं. १६६६ | कालिकाचार्यकथा | सं. १६८७ | जयतिहुयणवृत्तिः |
| सं. १६६७ | श्रावकाराधनाविधिः | सं. १६८८ | नवतत्त्ववृत्तिः |
| सं. १६६८ | मृगावतीचोपाई ( गू. ) | सं. १६९१ | दशवैकालिकवृत्तिः |
| सं. १६६९ | शीलछत्रीसी ( गू. ) | ,, | थावच्चाचोपाई ( गू. ) |
| ,, | संतोषछत्रीसी ( गू. ) | सं. १६९३ | व्यवहारशुद्धिचोपाई (गू.) |
| सं. १६७२ | प्रियमेलकरास ( गू. ) | सं. १६९४ | वृत्तरत्नाकरवृत्तिः |
| ,, | सामाचारीशतकम् | सं. १६९५ | चंपकचोपाई ( गू. ) |
| सं. १६७२(३) | विशेषशतकम् | सं. १७०० | द्रूपदीसतीसंबंध ( गू. ) |
| सं. १६७३ | नल-दमयन्तीचोपाई ( गू. ) | | |
| ,, | पुण्यसारचरित्र (गू.) | | |

---

१ "बुद्ध्वा श्रीमुनिदेवसंज्ञविबुधात् काव्यं नवं नैषधम् । ······
टीकां यद्यपि सोपपत्तिरचनां विद्याधरो निर्ममे ॥······"—नैषधदीपिका ।

२ "अग्रे द्वादशभिस्त्रयोदशशते श्रीविक्रमाब्दे त्वियम् ।
श्रीप्रह्लादनपत्तने शुभदिने दीपोत्सवेऽपूर्यत ॥"—द्व्याश्रयवृत्तिप्र० C.

'श्रीद्व्याश्रयमहाकाव्यं श्रीहेमसूरीयं २० सर्ग संस्कृतं २८२८-३०२८ । द्व्याश्रयकाव्यपाद २८ वृत्तिः १३१२वर्षे खरतर-अभयतिलकीया १७५७४ ।'—बृ०

अज्ञातरचनासमया चेयम्—कल्पसूत्रकल्पलतावृत्तिः, खरतरपट्टावली (?), दुरियरयसमीर वीरचरित्रस्तववृत्तिः, भक्तामरचतुर्थपादसमस्यास्तवाद्या संस्कृते; जंबूरास, धनदत्तचोपाई, नेमि-राजिमतीरास, प्रश्नोत्तरचोपाई, श्रीपालरास सीतारामचोपाई, हंसराज-वच्छराज चोपाई (?) प्रश्नोत्तरसारसङ्ग्रह, कर्मछत्रीशी, क्षमाछत्रीशी, पुण्यछत्रीशी, अनाथीऋषिसज्झाय, निद्रा-सज्झाय, निन्दावारकसज्झाय, पद्मावतीसज्झाय, शालिभद्रसज्झाय अन्तरिक्ष-गोडीपार्श्वछन्द, अल्पबहुत्वगर्भितमहावीरस्तवन, उपधानस्तवन, तीर्थमालास्तवन, पञ्चमीस्तवन शीतलनाथस्त-वन, सीमंधरस्तवन इत्याद्या गूर्जरभाषानिबद्धा च कृतिरवलोक्यते। सं. १६७३ वर्षे मध्याह्न-व्याख्यानपद्धतिकारो हर्षनन्दनगणिरस्यैव शिष्यः।

## छन्दोग्रन्थाः।

ले. सं. ११९० जयदेवच्छन्दःशास्त्रम्। जयदेवः क्र. २३८(१)

अष्टाध्यायविभूषितं सूत्ररूपमेतद् द्वादशशताब्दीप्रारम्भे जातो जिनवल्लभसूरिरध्यैष्टेति सं. १२९५ वर्षे विरचितायां गणधरसार्धशतकवृत्तौ सुमतिगणिना तच्चरित्रप्रस्तावे वर्णितम्। अग्रतो निर्दिश्यमाने सं. ११९२ वर्षे लिखिते छन्दोऽनुशासने च जयकीर्तिनाऽस्य नामकीर्तन-मकारीत्यतोऽस्य प्राचीनता प्रस्फुरत्येव।

ले. सं. ११९० जयदेवच्छन्दोविवृतिः। हर्षटः क्र. २३८(२)

पूर्वोक्तच्छन्दःशास्त्रसूत्राणामिदं विवरणम्। विवरणकारोऽयं हर्षटः स्वस्य भट्टमुकुलकात्मज-त्वमदर्शयत्। अभिधावृत्तिमातृकाकारोऽयं मुकुलभट्टः सम्भाव्यते।

ले. सं. ११९० कइसिट्ठम्। विरहाङ्कः क्र. २३८(३)

प्राकृतभाषायां मात्रावृत्त-वर्णवृत्तप्रतिपादकः षण्नियमविभक्तः कइसिट्ठ-कविसिट्ठ-कृतसिद्ध-छन्दोविचिति-वृत्तजातिसमुच्चयेत्यादिविविधसंज्ञया व्यवहृतोऽयं छन्दोग्रन्थः कदा प्रादुरभूदिति निश्चित्य वक्तुं न शक्यते। अयं कविः सद्भावलाञ्छनं गन्धहस्तिनमवलेपचिह्नं पिङ्गलं च प्रणमति स्म। दण्डिकविना काव्यादर्शे स्मृता[1] छन्दोविचितिरितो भिन्नाऽभिन्ना वेति न निर्णयः।

ले. सं. ११९० कइसिट्ठवृत्तिः। गोपालः क्र. २३८(४)

पूर्वसूचितस्य प्राकृतच्छन्दोविचितिग्रन्थस्येयं वृत्तिः। वृत्तिकारोऽयं गोपालो भट्टचक्रपालस्य सूनुरिति प्रान्तांशनिरीक्षणादवबुध्यते। श्रीधरभाण्डारकरेण तु (S. २१२५) कइसिट्ठस्थाने कहसिद्ध इति चक्रपालस्थाने चन्द्रपाल इति च निरदेशि। वृत्तिकर्त्रा कात्यायन-भरत-कम्बला-श्वतरादीनां स्मरणमकारि।

ले. सं. ११९२ छन्दोऽनुशासनम्। जयकीर्तिः क्र. २३८(६)

वर्धमाननमस्कारमङ्गलकरणेनायं कविर्जैनः प्रतिभाति। माण्डव्य-पिङ्गल-जनाश्रय-सेतव-पूज्यपाद-जयदेवबुधादीनां छन्दांसि वीक्ष्यैतच्छन्दोऽनुशासनं विहितमिति प्रान्ते दर्शितम्।

---

१ "पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा।
छन्दोविचित्यां सकलस्तत्प्रपञ्चो निदर्शितः॥"—काव्यादर्श

सं. ११९२ वर्षे योगसारलेखयिताऽमलकीर्तिरस्य शिष्यो ज्ञायते[1]। प्रा० शिलोपदेशमालायाः प्रणेता जयकीर्तिः स्वं जयसिंहसूरिशिष्यत्वेन परिचाययति स्म, स त्वस्माद् भिन्नो विज्ञायते।

## अलङ्कारग्रन्थाः।

ले. सं. ११६१ अलङ्कारदर्पणम् क्र. २११(१)

लघुकमपि प्राचीनमेतत् प्राकृतभाषयाऽलङ्कृतमलङ्कारपुस्तकं कदा केन निर्मितमिति नावगम्यते; तथापि श्रुतदेवीमङ्गलकरणात् कर्ता जैनः सम्भाव्यते। सं. ११६१ वर्षीयताडपत्रसङ्ग्रहे सङ्गृहीतत्वाच्च ततः पूर्वमस्य रचनेति स्पष्टम्। बर्लीनस्थपुस्तकसङ्ग्रहेऽप्येतत् श्रूयते।

वक्रोक्तिजीवितम्। कुन्तकः क्र. २२१

अस्य रचनासमयो नावगतः। अलङ्कारसर्वस्व–साहित्यदर्पण–सारसमुच्चय( काव्यप्रकाशटीका ) प्रभृतिष्वस्य नामोपात्तम्। व्यक्तिविवेककर्त्रा च महिमभट्टेनास्य स्वग्रन्थे[2] खण्डनमकारीत्यस्य ततः प्राचीनतेति सिद्धम्। मुद्रिते च सवृत्तिके व्यक्तिविवेकग्रन्थेऽस्य 'कुन्तक' इति नाम दर्शिम्, तत्तु न शोभनं प्रतिभाति।

ले. सं. १२१६ कविरहस्यवृत्तिः क्र. २७(२)

सुप्रसिद्धस्य हलायुधकृतस्य मूलस्यास्य वृत्तिकारो रविधर्म इति प्रसिद्धिः।

[ काव्यादर्शव्याख्या( हृदयङ्गमा ) ] क्र. २२२(३) [ M. L. पृ. ८६३२ ]

अपूर्णेयं मुद्रिताऽत्रापि न परिपूर्णा, केवलं तृतीयपरिच्छेदसत्का। व्याख्यातुर्नाम नोपलभ्यते। सं. १२०६ वर्षीयता. सङ्ग्रहे वर्ततेऽतस्तत्पूर्वमस्या रचनेति स्पष्टम्।

ले. सं. १२७१ काव्यप्रकाशसङ्केतः क्र. २९३(२)

अयं माणिक्यचन्द्रकृतोऽथवा भट्टसोमेश्वरविरचित इति न निर्णीयते।[3]सं. १२१(४)६ वर्षे माणिक्यचन्द्रेण कृतस्त्वन्यत्र साम्प्रतं मुद्रितः। भट्टसोमेश्वरकृतोऽपि तद्वत् प्राचीनः।

ले. सं. १२८३ काव्यप्रकाशसङ्केतः ( काव्यादर्शः )। भट्टसोमेश्वरः

क्र. ९९,३४६ [ P. P. ५।५२ ]

सङ्केतकारोऽयं[4] भरद्वाजकुलीनभट्टदेवकपुत्रः कदाऽऽसीदिति न निर्णीतम्।

---

१ "श्रीजयकीर्तिसूरीणां शिष्येणामलकीर्तिना।
लेखितं योगसाराख्यं विद्यार्थिवामकीर्तिना॥"—P. P. ५।१४७

२ 'काव्यकाञ्चनकषाश्ममानिना कुन्तकेन निजकाव्यलक्ष्मणि।
यस्य सर्वनिरवद्यतोदिता श्लोक एष स निदर्शितो मया॥'—व्यक्तिविवेके

३ "रस–वक्त्र–ग्रहाधीशवत्सरे मासि माधवे।
काव्ये काव्यप्रकाशस्य सङ्केतोऽयं समर्थितः॥"—P. P. ३।३२०
'काव्यप्रकाशसङ्केतः १२१६ वर्षे माणिक्यचन्द्रीयः ३२४४।'—बृ०

४ 'भरद्वाजकुलोत्तंसभट्टदेवकसूनुना। सोमेश्वरेण रचितः काव्यादर्शः सुमेधसा॥'—प्रान्ते

काव्यप्रकाशटीका । भवदेवः पृ. ५६ [M. L. ८६२५, S. २।२८ ]

अस्याश्च टीकाया लीलेति संज्ञाऽन्यत्र दर्शिता । महामहोपाध्यायपदभाक् कृष्णदेवपुत्रो भवदेवठकुरस्य च शिष्यः टीकाकारोऽयं कदाऽऽसीदिति नावगतम् ।

काव्यप्रकाशावचूरिः[1] क्र. २६२(२)

मुद्रिते काव्यप्रकाशे तत्प्रस्तावनायां प्रस्तावकेन वामनाचार्येण २७ तमे प्रघट्टकेऽवचूरिकर्ता राघव इति सूचितम् ।

ले. सं. १२०५(?) काव्यकल्पलताविवेकः क्र. १८८,३१० [S. २।२५,७७]

सं. १६६५ काव्यकल्पलतावृत्तिमकरन्दः । शुभविजयः पृ. ५७ [P. P. ६।२५]

सुप्रसिद्धाया वायटगच्छीयामरचन्द्रसूरिकृताया अस्या वृत्तेर्मकरन्दकारोऽयं पण्डितोऽकब्बरप्रतिबोधकहीरविजयसूरेः शिष्यः यस्य स्याद्वादभाषा ( सवृत्तिः ), प्रश्नोत्तरसङ्ग्रहः ( रत्नाकरः ), सं. १६६३ वर्षे तर्कभाषावार्तिकमित्यादिका रचना दृश्यते । अस्य रचना तु विजयसेनसूरिपट्टालङ्कारविजयदेवसूरिनिर्देशात् सलेमसाहिराज्ये राजनगरे जाता । संशोधनं तु कल्याणविजयवाचकशिष्यधर्मविजयवाचकेन पं० मेरुविजयशिष्यपं० लावण्यविजयेन चाकारीत्येतत्प्रान्तेऽवलोक्यते ।

## कोशग्रन्थाः ।

शब्दरत्नप्रदीपः । पृ. ५८

कर्तुर्नाम नावगतम् । सुमतिगणिना सं. १२९५ वर्षे विहितायां गणधरसार्धशतकवृत्तावयं नैकवारं प्रमाणत्वेनोद्धृतः । कल्याणमल्लकृतः शब्दरत्नदीपोऽयं चैक एव विभाव्यते ।

लिङ्गानुशासनविवरणम् । हेमाचार्यः क्र. १८९(१) [ P. P. १।७६ ]

मूलं सावचूरिकं मुद्रितम् । स्वोपज्ञविवरणसहितमिदमन्यत्र मुद्राप्यत इति श्रुतम् । अयं ग्रन्थकारः सुप्रसिद्ध एव कुमारपालभूपालप्रतिबोधकत्वेन सार्धत्रिकोटिश्लोकपरिमितग्रन्थगणगुम्फयितृत्वेन च । कलिकालसर्वज्ञेति बिरुदमाबिभ्राणस्यास्य सूरिवर्यस्य सत्ताऽऽदिकं पूर्वं (पृ. २६) सूचितम् ।

ले. सं. १२८२ अनेकार्थकैरवकौमुदी क्र. ७७,१२५,१७९,१९५ [ P. P. १।८९,१२२ ]

सुप्रसिद्धस्य हैमानेकार्थसङ्ग्रहस्येयं वृत्तिर्हेमचन्द्रसूरिशिष्येण महेन्द्रसूरिणा[2] स्वगुरुनाम्ना प्रतिष्ठिता । अनेन महेन्द्रसूरिणा सं. १२४१ वर्षे सोमप्रभाचार्यविरचितः कुमारपालप्रतिबोधः[3]

---

१ 'काव्यप्रकाशावचूर्णिः १२५०'—बृ०

२ "श्रीहेमसूरिशिष्येण श्रीमन्महेन्द्रसूरिणा ।
भक्तिनिष्ठेन टीकेयं तन्नाम्नैव प्रतिष्ठिता ॥"—टीकाप्रान्ते
"हैमानेकार्थनाममाला[ वृत्तिः ] स्वरकाण्डषट्का । आदौ स्वरव्यञ्जनक्रमेण बद्धनामाऽन्तव्यञ्जनक्रमबद्धा श्रीमहेन्द्रसूरिकृता ।"—बृ०

३ "हेमसूरिपदपङ्कजहंसैः श्रीमहेन्द्रमुनिपैः श्रुतमेतत् ।
वर्धमान-गुणचन्द्रगणिभ्यां साकमाकलितशास्त्ररहस्यैः ॥"—कु० प्र०

श्रुत इत्यस्या रचना त्रयोदशशताब्दीपूर्वार्धेऽनुमीयते । अंशोद्धाररूपेयं वृत्तिः 'वायना' (Vienna) इत्यत्र मुद्रिता श्रूयते न तु दृष्टा ।

अपवर्गनाममाला । जिनभद्रः प्र. ४५

जैनग्रन्थावल्यां, H. प्रतिप्रान्ते, ही. सूचिपत्रे चास्याः 'पञ्चवर्गपरिहारनाममाला' इति नाम दृश्यते, दलालेनापि तथैव दर्शितमासीत्; तथाप्यस्याः प्रारम्भप्रान्ते विलोकितेऽपवर्गनाममालेत्येव नाम सम्यक् प्रतिभाति । कोशकारोऽयं जिनभद्रसूरिरात्मानं जिनवल्लभसूरि-जिनदत्तसूरिसेवकत्वेन न्यदर्शयत, जिनप्रिय(वल्लभ)स्य विनेयत्वेन च स्वं पर्यचाययदतो द्वादशशताब्द्यामस्या रचनाऽनुमीयते ।

नामकोशः । सहजकीर्तिः प्र. ५८

षट्काण्डान्वितः सलिङ्गनिर्णयोऽयं कोशः सप्तदशशताब्द्याश्चतुर्थे चरणे रचितो विज्ञायते, यतः सं. १६८३ वर्षेऽनेन ग्रन्थकर्त्रा शतदलकमलालङ्कृता लोद्रपुरीयपार्श्वजिनस्तुतिः कृताऽत्र (परि० ६) दर्शिता । सं. १६८५ वर्षे चानेन सर्तार्थ्यश्रीसारेण साकं स्वगुरुगुरुनाम्ना कल्पमञ्जरीमंज्ञिका कल्पसूत्रवृत्तिर्विनिर्ममे । सं. १६८६ वर्षे महावीरस्तुतिवृत्तिः, सं. १६८८ वर्षे प्रीतिषट्त्रिंशिका (गू.), अनेकशास्त्रसारसमुच्चयः, ऋजुप्राज्ञव्याकरणम्, एकादिशतपर्यन्तशब्दसाधनिका, सारस्वतवृत्तिः, सिद्ध(?)शब्दार्णव इत्यादिकाऽस्य कृतिरप्येतत्पाण्डित्यं परिचाययति । अयं ग्रन्थकारो खरतरगच्छीयवाचकरत्नसारस्य शिष्यः ।

सं. १६८६ व्युत्पत्तिरत्नाकरः । देवसागरः प्र. ६१ [P. P. १।१३०]

अयं ग्रन्थः सुप्रसिद्धाया हैमीनाममालाया व्याख्यारूपः । ग्रन्थकारोऽयं विधिपक्षगच्छीयविनयचन्द्रवाचकस्य शिष्यः । सं. १६७६ वर्षे, सं. १६८३ वर्षे च शत्रुञ्जयगिरौ कल्याणसागरसूरिप्रतिष्ठितस्य श्रेयांस-चन्द्रप्रभजिनयोः प्रासादद्वयस्य प्रशस्तिरनेन विहिता (प्रा. जै. ले., एपिग्राफिआ इंडिका २।६४,६६,६८,७१) इत्यस्य विद्वत्ता सप्तदशशताब्द्युत्तरार्धे विद्यमानता च स्फुटमवसीयते ।

एकाक्षरनाममालिका । विश्वशम्भुः प्र. ५७ [A. ८।१०१, P. P. ६।१४]

नाटके ।

चन्द्रलेखाविजयप्रकरणम् । देवचन्द्रः क्र. २४

पञ्चाङ्कमेतन्नाटकं कुमारपालनृपसत्तायां त्रयोदशशताब्दीप्रारम्भे विरचितं विज्ञायते, यत एतत्प्रारम्भे सूत्रधारमुखेन 'कुमारविहारे मूलनायकपार्श्वजिनवामपार्श्वावस्थितश्रीमदजितनाथदेवस्य वसन्तोत्सवे कुमारपालपरिषच्चेतःपरितोषायास्य प्रणयनम्' इति समसूचि । अर्णोराजमन्थनरूपा कुमारपालवीरत्वसूचिका स्तुतिश्चात्र दृश्यते । अयं च देवचन्द्रो मुनिः सुप्रसिद्धस्य हेमचन्द्राचार्यस्य शिष्यः, न त्वयं गुरुर्देवचन्द्रसूरिः । जैनग्रन्थावल्यादावस्य हेमचन्द्रगुरुत्वं दर्शितम्, तत्तु समाननामभ्रान्त्यैवेति व्यक्तं भवति प्रारम्भप्रान्तदर्शनात् । अस्य कवेः सान्निध्यकर्ता शेषभट्टारकः क इति न विज्ञायते ।

---

१ विद्याम्भोनिधिमन्थमन्दरगिरिः श्रीहेमचन्द्रो गुरुः
सान्निध्यैकरतिर्विशेषविधये श्रीशेषभट्टारकः ।
यस्य स्तः कविपुङ्गवस्य जयिनः श्रीदेवचन्द्रस्य सा
कीर्तिस्तस्य जगत्रये विजयतात् साद्व(?)लीलायिते ॥—चन्द्रलेखाविजयप्रान्ते P.

मुरारिटिप्पनम् । नरचन्द्रसूरिः क्र. २२०

मुरारिकृतस्यानर्घराघवस्यैतट्टिप्पनं[1] त्रयोदशशताब्धुत्तरार्धे जातं सम्भाव्यते; यतोऽयं सूरिर्वस्तुपालसमकालीन आसीद् इत्याद्यस्य न्यायकन्दलीटिप्पनपरिचये (पृ. ३२) प्रादर्शि । अत्र टिप्पने विमलसूरिणा[2] साहाय्यं कृतं व्यज्यते ।

प्रकीर्णग्रन्थाः ।

ले. सं. १११५(?) पट्टावल्यादि ४३ ग्रन्थाः क्र. १५०(१)

अत्र सूचितास्त्रिचत्वारिंशद् ग्रन्थाः प्रायः प्राकृतभाषानिबद्धा ही. सूच्यां ७२२-७६२ क्रमाङ्केषु यथा दर्शितास्तथा संस्कृत्य प्रदर्श्यन्ते—

| | पत्रसङ्ख्या | श्लोकसङ्ख्या |
|---|---|---|
| पोरसीकुलकम् । जिनेश्वरसूरिः | ८ | १२५ |
| पञ्चलिङ्गीप्रकरणम् । ,, | ७ | १२५ |
| आगमोद्धारगाथा | ५ | १०० |
| धूमावलिका । जयभूषणसूरिः | ८ | २०० |
| अर्हदभिषेकविधिः । वादिवेताल-शान्तिसूरिः | ५ | १०० |
| उपदेशमाला । धर्मदासगणिः | ७ | १२५ |
| जिनस्नात्रविधिः । वादिवेताल-शान्तिसूरिः | ३ | ६० |
| स्थविरावलिः | ७ | १५० |
| दर्शनसप्ततिका । हरिभद्रसूरिः | ७ | १५० |
| नाणाचित्तयपगरणं | ५ | १०० |
| नवकारफलम् | २ | ४० |
| कथानककोषः । जिनेश्वरसूरिः | ३ | ५० |
| शीलोपदेशमाला | २ | ४० |
| सम्यक्त्वकलिका | २ | ३० |
| आराधनाप्रकरणम् | ३ | ५० |
| ज्ञानपञ्चाशिका | ४ | ७५ |
| पण्डितमृत्युप्रकरणम् | ४ | ५० |
| स्नात्रपञ्चाशिका | ८ | २०० |
| ऋषभस्तोत्रम् । जिनवल्लभसूरिः | ३ | ३० |
| पार्श्वस्तोत्रम् । ,, | १ | १५ |
| नेमिस्तोत्रम् । ,, | १ | १५ |
| शान्तिनाथस्तोत्रम् । ,, | २ | ३५ |
| महावीरस्तोत्रम् । ,, | १ | १५ |
| अजितशान्तिस्तवः । ,, | १ | १७ |
| जिनविज्ञप्तिः । ,, | २ | ३० |
| लघुशान्तिः (सं.) । मानदेवसूरिः | २ | २० |
| उत्साहवृत्तम् | २ | २५ |
| प्रव्रज्याभि(वि)धानम् | २ | ३० |
| चउसरणपयन्ना | २ | ३० |
| चतु[र्विंशति]जिनकल्याणकस्तोत्रम् | १ | १५ |
| स्तम्भनपार्श्वनाथस्तोत्रम् । अभयदेवसूरिः | २ | ४० |
| सुगुरुगुणस्तवसित्तरी । सोमचन्द्र(?जिनदत्त)सूरिः | ७ | १०० |
| चतुस्त्रिंशदतिशयस्तोत्रम् | २ | २० |
| उपदेशकुलकम् । जिनदत्तसूरिः | ३ | ४० |

१ "तदीयसिंहासनसार्वभौमः सूरीश्वरः श्रीनरचन्द्रनामा ।
सरस्वतीलब्धवरप्रसादस्त्रैविद्यमुष्टिन्धयधीर्बभूव ॥
टिप्पनमनर्घराघवशास्त्रे किल टिप्पनं च कन्दल्याम् ।
सारं ज्योतिषमदभद् यः प्राकृतदीपिकामपि च ॥"
—राजशेखरसूरिः । P. P. ३।२७५
'मुरारिटिप्पनकं मल० नरचन्द्रसूरीयं २३५०'—वृ०

२ "शब्द-प्रमाण-साहित्यत्रिवेणीसङ्गमश्रियाम् ।
श्रीमद्विमलसूरीणामिदमुद्यमवैभवम् ॥"—मु० प्रान्ते

| | प० | श्लो० |
|---|---|---|
| श्रुतस्तवः । जिनदत्तसूरिः | २ | ३० |
| ले. सं. ११९२ प्रतिक्रमणसूत्रम् | २१ | ४०० |
| सप्त स्मरणानि | १० | २५० |
| चतुर्विंशतिजिनस्तुतिः । जिनवल्लभगणिः | ६ | १२५ |
| ले. सं. ११७१ पट्टावली । जिनदत्तसूरिः(?पाल्हकविः) | ४ | ४० |
| अजितशान्तिस्तवः । नन्दिषेणसूरिः | ६ | ५० |
| ले. सं. ११९५(?) अध्यात्मगीता । जिनदत्तसूरिः | ३३ | ७०० |

---

क्र. १५०(२) दर्शिता खरतरपट्टावली प्राचीनगूर्जरकाव्यसङ्ग्रहे सङ्गृहीता सैव सम्भाव्यतेऽत्र ही. स्खलनया ४० गाथा दर्शिताः, किन्तु दशैव दृश्यन्ते । कर्तुर्नाम जिनचन्द्र इति सूचितं तन्न सम्भवति, यतो जिनदत्तसूरिपर्यन्तसूरिवर्णनपरा सं. ११७१ वर्षे लिखितेयं खरतरपट्टावली, जिनदत्तसूरिशिष्यस्य जिनचन्द्रसूरेस्तु दीक्षाऽऽप्यपि तदनन्तरं क्षमाकल्याणकृतख० पट्टावल्या देरवबुध्यत इति चिन्त्यमेतत् ।

| | | |
|---|---|---|
| | तपयोगाष्टकम् (?) | क्र. १०५ |
| ले. सं. १२२२ | तपश्चरणभेदस्वरूपम् | क्र. २४९(५) |
| ले. सं. १२२२ | त्रयोदशनवकारस्वरूपफलकुलकम् | क्र. २४९(६) |
| | पुलाकोद्देशसङ्ग्रहणी | क्र. ३०९(२) |

---

## कल्प-मन्त्र-ज्योतिः-शकुनादिग्रन्थाः ।

ले. सं. १२१५ वीनति (?) जिनवल्लभसूरिः क्र. २४८(२)

एतत्प्रान्ते दर्शिता गाथा जिनवल्लभसूरिविरचिते स्वप्नाष्टकविचारे दृश्यतेऽतोऽत्रत्यः प्रान्तग्रन्थः स्वप्नाष्टकविचारनामा, पूर्वग्रन्थश्चान्यो जिनविज्ञप्तिसंज्ञ एवं ग्रन्थद्वयं सम्भाव्यते ।

ले. सं. १४९९ वर्धमानविद्याकल्पः । [ सिंहतिलकसूरिः ] पृ. ५८

अस्य कर्ता सिंहतिलकसूरिः P. P. ५।१२९ इत्यत्र दर्शितः । यत्कृतं मन्त्रराजरहस्यमग्रे दर्शितं स एव सिंहतिलकसूरिरयं ज्ञायते ।

सं. १३२२(७) मन्त्रराजरहस्यम् । सिंहतिलकसूरिः पृ. ५८

अयं सूरिर्यशोदेवसूरिशिष्यविबुधचन्द्रसूरेः शिष्यः । सं. १३२६ वर्षेऽनेन भुवनदीपकवृत्तिर्विरचितेति चतुर्दशशताब्दीप्रारम्भेऽस्य विद्यमानता स्फुटैव । गणिततिलकवृत्तिरप्येतत्कृता श्रूयते । अस्य देवता प्रसन्नाऽऽसीदित्येतत्कृतग्रन्थप्रान्ताद् ध्वन्यते ।

सुधानिधिः । यादवसूरिः पृ. ४८

योगविवरणं यावदयं दृश्यते । P. P. ४।३५ इत्यत्र 'ताजिकयोगसुधानिधिः' इति नाम्नाऽयं सूचितः । कर्तृविषये न किमपि ज्ञातम्; नवरं ताजिककौस्तुभोऽनेन निर्मितः श्रूयते ।

शाकुनशास्त्रम् । लावण्यशर्मा पृ. ५०

भरद्वाजद्विजसुतोऽयं ग्रन्थकारः कदाऽऽसीदिति नावगतम् ।

---

१ "किंचि उदाहरणाइं बहुजणमिहिगिव्व पू(पु)व्वसूरीहिं ।
एत्थं निदिं(दं)सियाइं एआइं इमंमि कालंमि ॥"—P.

End:—सुगुरूणं सिरिजिणवल्लहाण सूरिण सूरिपवराणं ।
उज्झियनियकज्जाणं परोवगारेक्करसियाणं ॥ २ ॥
जेण कयं वत्थुवियारसारनामं ति पगरणं पउरं ।
अप्पग्गंथमहत्थं तस्सेव णु विवरणं विहियं ॥
तस्सिस्सलवेणं रामदेवगणिणा उ मंदमइणावि ।
पाइयवयणेहि फुडं भव्वहियट्ठेणं समासेण ॥
संवत् १२४६ माघवदि १० सोमे यशश्चंद्रगणेः ।

**6. जम्बूद्वीपप्रज्ञप्तिवृत्ति** [ by **पुण्यसागर** ]. 287 leaves. **ग्रं. 13275.**
ms. date 1652 ( सं. )

Col:—इति श्रीबृहत्खरतरगच्छावतंसश्रीजिनहंससूरिशिष्यश्रीपुण्यसागरमहामहोपाध्याय विरचिता जंबुद्दीवपन्नत्तिवृत्तिः संपूर्णा ।

A pras'asti of 25 verses.
श्रीमज्जेसलमेरुदुर्गनगरे श्रीभीमभूमीपतौ
राज्ये शासति बाणवारिधिरसक्षोणीमिते वत्सरे ।
पुष्यार्के मधुमासि शुक्लदशमीसद्वासरे भासुरे
टीकेयं विहिता सदैव जयतादाचन्द्रसूर्यं भुवि ॥ २५ ॥

**7. सम्बन्धोद्योत** by **रभसनन्दी.** 8 leaves.

Beg:—भग्नं मारवलं येन निर्जितं भवपंजरं ।
निर्वाणपदमारूढं तं बुद्धं प्रणमाम्यहं ॥ १ ॥
षट्कारकाणि संबंध उक्तानुक्ततया द्विधा ।
विभक्तिश्रेणि(ंति) निश्रे(श्रे)यमवश्यं योगमिच्छता ॥ २ ॥
यो यत्र प्रत्ययो जातः समासो यत्र वा भवेत् ।
स एनं वक्ति युंजानस्तस्य लिंगेन संख्यया ॥ ३ ॥
लिंगसंख्याभियोगश्च प्रायो भवति दर्शितः ।
वेदाः प्रमाणमित्यादिप्रयोगो येन सम्मतः ॥ ४ ॥

End:—इमां विंशतिसंयुक्तामधिगम्य चतुःशतीं ।
आस्तां सरभसो लोकः संबंधोद्योतसिद्धितः ॥
इति रभसनंदिविरचितः संबंधोद्योतः समाप्तः ॥

**8. उक्तीयक (वाक्यविस्तर)** by **राम.** 24 leaves.

Beg:—प्रणम्य भारतीं देवीं गणनाथं तथैव च ।
नियोगिप्रतिबोधाय सुखं संक्षेपतोऽधुना ॥ १ ॥
उक्तीयकमहं वक्ष्ये सारमुद्धृत्य सूत्रतः ।
अल्पायासं बहुबलं शिष्यानंदप्रदं शुभं ॥ २ ॥
सविस्तरं व्याकरणं सदभ्यस्तमपि क्षणात् ।
विस्मृतिं याति लोकानां नैव लोके कदाचन ॥
निद्र(र्द्र)व्यो वा सद्रव्यो वा जडो वा प्रज्ञयान्वितः ।
षण्मासैर्मम शिष्यस्तु सिद्धसारस्वतो भवेत् ॥

End:—कौशिकान्वयसंभूतः सर्वदेवात्मजो भुवि ।
रामाख्यया प्रसिद्धो हि नागरो विप्रसेवकः ॥ १ ॥
जडानां सुखबोधार्थं कृतवान् वाक्यविस्तरं ।
हास्यपूर्वं हि धीराणां ग्राह्यश्चेद्दोषवर्जितः ॥ २ ॥
verses 7 in all.

इति शब्दकारकसमासतद्धितक्रियाकृतप्रयोगाणां लौकिकभाषया विहितं(तो) वाक्यविस्तरं(रः) समाप्तं(प्तः) । ग्रं. १४८६.

संवत् १७८७ वर्षे चैत्रसुदि ७ शनौ विदुषा जोडी(गी)दासेनालेखि श्रीसत्यपुरवरे ।

9. **जहांगीरसाहियशश्चंद्रचंद्रिका** by **केशव.** 15 leaves.

End:—सोरहसे उनहत्तरा माधवमास विचारु ।
जहांगीरजसचंद्रकी करी चंद्रिका चारु ॥

इति श्रीमत्सकलभूमंडलाखंडलेश्वरसकलसाहिशिरोमणिश्रीजहांगीरसाहियशश्चंद्रचंद्रिका मिश्रकेशवविरचिता समाप्ता । संवत् १७१६ वर्षे मृगसिरमासे कृष्णपक्षे ९ शनौ लि. धरमचंद्रेण......

10. **न्यायालङ्कारटिप्पन ( पञ्चप्रस्थन्यायतर्कव्याख्या )** [ by **अभयतिलक** ]. 616–821 leaves.

Beg:—दिनेश्वरश्वेतकरौ गवां सारैः स्मितप्रकाशप्रविभासनै भृ(र्भृ)शं ।
संध्याकेलीसचिवौ नु राजतो(तां) लोकेऽप्यलोके विभु तन्महः स्तुमः ॥

कांत्याश्लिष्टजटाच्छटाकपटतः संसारकूलंकषा—
कूलोल्लेखनकृत्यतोधिशिरसं संलग्नवल्यद्भुतः ।
आद्दकुर्वन् मधुरैयशोध्वनिभरैर्न्याय्ये भमोद्यच्छतो
मार्गे सिद्धिकृते समस्तु वृषभेशः संमुखीनः शुभः ॥ २ ॥
स मम भवतु प्रेयः श्रेयःश्रिये परमेश्वरः
सकलजगतीदीपः पार्श्वप्रभुः प्रणतामरः ।
यदुपरि फणाचक्रं भव्यजनाय शिवश्रिया
किल विनिहितं माहानीलं सुपात्रमराजत ॥ ३ ॥
आज्ञाकल्पलतां जिनेश्वरगुरोस्तज्जिनदत्तं मह-
श्चिंतारत्नमथाप्य लक्ष्मीतिलकोपाध्यायगोःस्वर्गवीं ।
श्रीन्यायाभिधतर्कशक्रमपि पुंमात्रेण श्रीदुष्प्रता-
भाजोद्वाहयितुं सुदुर्गमपदव्याख्यांगजारभ्यते ॥ ४ ॥
श्रीश्रीकंठेनाहितादुर्गमार्थव्याख्यास्मान्निर्याकलीक्षांबभूव ।
पंचप्रस्थन्यायतर्कस्य तस्यास्तावत्या सान्या विधेयेति बोध्यं ॥ ५ ॥

उदयने । तत्त्वाध्यवसायसंरक्षणक्षमेति ।

End:—श्रीलक्ष्मीतिलको गुरुस्तु भगवान् श्रीन्यायतूर्याग्रिमा-
ध्याये भूमिगृहे स्थितानपि रहस्यार्थान् ममाद्योतयत् ।
श्रेयःस्नेहभराक्षयो न च मनाक्कंपोपि दुर्वादिवाग्-
वातैरव्ययसदृशः खलु नवो यद्वीःप्रदीपोदयः ॥ १ ॥

प्राक् संहत्य सुरासुरेण जलधिं व्यालोड्य हेमाद्रिणो-
ऽद्भूतं सारमुपाददे स्वयमहो एकांगमल्लस्तु यः ।
न्यायांभोधिममुं विगाह्य परितो बुद्ध्या कुशाग्रीयया
सामस्त्येन महार्थसारमचिराज्ज्ञात्वा व्यतारीन्मम ॥ २ ॥

तस्य श्रीजिनरत्नसूरिचरणांभोजांतिकेधीतिनः
श्रीलक्ष्मीतिलकाभिषेकनृपतेर्नानार्थरत्नैर्ज्वलत्—
कुर्वाणात्र सुवर्णदंडरुचिरा दुर्गार्थवृत्तेश्छला-
देतस्या मयकोच्छि(स्थि)तोज्वलयशःश्रीवैजयन्त्युच्चकैः ॥ ३ ॥

इति युगप्रधानश्रीजिनेश्वरसूरिशिष्यलेशश्रीअभयतिलकोपाध्यायनिर्मितायां पंचप्रस्थानन्याय-महातर्कविषमपदव्याख्यायां न्यायालंकाराख्यायां पंचमोध्यायः समर्थितः ।

चांद्रे कुलेजनि जिनेश्वरसूरिरिंदु—
र्हत्वा तमो वसतिमार्गविकासकारी ।
भ्रेजे ततोभयगुरुश्च नवांगटीका–
पीयूषकुंडनवकोद्धरणः श्रुताब्धेः ॥ १ ॥
जज्ञे तदीयपदवीनलिनीमरालः
स्वभ्यश्चरित्ररमया जिनवल्लभाख्यः ।
आसीत्पदेस्य जिनदत्तगुरुर्भटेन
येनादधे विधिपथः सुवहः खिलोपि ॥ २ ॥
आभात्पदेस्य जिनचंद्रगुरुश्च पंच--
विंशो जिनो य इह सर्वजनेन गीतः ।
तस्मादुदैज्जिनपतिर्यतिराट् जयश्री–
गाढोपगूढपरिमाद्यदमन्दमोदः ॥ ३ ॥
शिष्यास्तस्य जिनेश्वराः सुकृतसा(ता)भाजो जयंत्यंजसा
सुव्यक्तैव सरस्वती परिवहोच्चैर्न्यायघंटाध्वना ।
उत्सर्पोत्सवसंहतिर्जिनगृहेषु स्वर्णकुंभस्थलात्
पृथ्वी हेमफलैः फलति भुवनं यत्को(स्यो)दये मोदते ॥ ४ ॥
विद्यालब्धिक्रियाभिस्त्रिजगदभिभुवां सुप्रसत्त्यैव तेषां
टीका प्रोद्ग्राहितासावपि हि नयमहातर्कशक्रेण सार्कं ।
पुंमात्रेणांगजास्तावत वत मयका निर्धनेनापि बुद्ध्या
तस्याभिप्रायवृत्तिर्भवतु सहचरी यावदिंद्वर्कयोर्भा ॥ ५ ॥
श्रीलक्ष्मीतिलकोपाध्यायैः संशोधितेयमि(म)तिनिपुणं ।
अन्यदपि यच्च शोध्यं तदत्र शोध्यं महाकुशलैः ॥ ६ ॥

**11. श्रीकंठन्यायटिप्पनक** a टीका on उदयन's **न्यायतात्पर्यपरिशुद्धि.** 49 leaves.

**12. सुधानिधि** (योगविवरण) by **यादव.** 10 leaves.

End:—इति यादवसूरिकृते सुधानिधौ योगविवरणं संपूर्णं.

**13. कातन्त्रविभ्रमटीका** by **जिनप्रभसूरि. सं. १३५२.** 10 leaves.

End:—तदियमवगम्य सम्यक् तदनुसारि चेतो विधेयः ( यं )।

अभ्यर्थनां प्रथितमाथुरवंश[ चंचन् ]माणिक्यठक्कुरकुले कुलदीपकस्य ।
कायस्थकैरवनिकायनिशाकरस्य स्वीकृत्य मंगलविधामिव खेतलस्य ॥
पक्षेपुशक्तिशशि( श )भृन्मितविक्रमाब्दे धान्यंकिते हरतिथौ पुरि योगिनीनां ।
कातन्त्रविभ्रम इह व्यतनिष्ट टीकामप्रौढधीरपि जिनप्रभसूरिरेतां ।
प्रत्यक्षरं निरूप्यास्या ग्रंथमानं विनिश्चितं ।
एकषष्ठ्या समधिकं शतद्वयमनुष्टुभाम् ॥

अंकतोपि ग्रंथप्रमाणं २६१ श्रीसंवत् १४७८ वर्षे श्रावणसुदिअष्टमीदिने श्रीखरतरगच्छे आचार्यश्रीकीर्तिसागरसूरिशिष्येन(ण) धर्मशेपरेण मुनिनात्मपठनार्थं विलेषितः कातन्त्रविभ्रमः । पंडितगुणीयपुत्रेण पुरुषाकेन लिखितः ॥

**14. शांतिनाथचरित्र** by **मुनिदेवसूरि.** Dated सं. 1439.

**15. द्रव्यसंग्रहवृत्ति** original by **नेमिचंद्र.** 4–110 leaves. **(मु.)**

Col:—संवत् १४८५ वर्षे श्रावणशुदि १३ शनौ दिने मंडावस्थाने राइश्रीचांदराय-राज्यप्रवर्तमाने श्रीकाष्ठासंघे माथुरान्वये पुष्करगणे आचार्यश्रीसहस्रकीर्तिदेवास्तत्पट्टे भट्टारकश्रीगुण-कीर्तिदेवास्तच्छिष्यश्रीभट्टारकश्रीयशःकीर्तिदेवा हरिभूषणदेवा ज्ञानचंद्रदेवास्तेषामाम्नाये अग्रांतकान्वये गर्गगोत्रीयपरमश्रावकसाधुधीतु तद्भार्यासाध्वीथिरो पुत्राश्चत्वारः साधु हीगा महणा सहणपाल पाल्हा सा० हीगाभार्या साध्वी सर्वगुणशालिनी दानपूजापरायणा साध्वी पाल्हे तयोः पुत्रा गेल्हा(?)द्वितीयनाम मकुटवर्धन एतेषां मध्ये नसीरवादीया सा० वच्छराजपुत्री हीगाभार्या साध्वी पाल्हे तया निजज्ञानावरणी[य]कर्मक्षयार्थं केवलज्ञानोत्पत्तये इदं द्रव्यसंग्रहब्रह्मदेववृत्तिशास्त्रं लिखापितं । [लि०] धनाकायस्थेन ।

ज्ञानवान् ज्ञानदानेन निर्भयोभयदानतः । अन्नदानात्सुखी नित्यं निर्व्याधिर्भेषजाद् भवेत् ॥

**16. मुनिपतिचरित्र** by **जम्बू [नाग].** 107 leaves.

End:—एतन्मणि(मुनि)पते राज्ञश्चरितं चारुचेतसः ।
दृष्टान्तैरष्टसिर्गंयः पर्यंस्तावद्भिरेव च ॥
जंबूनामा(गा)भिधानेन रचितं श्वेतभिक्षुणा । ......

इद च श्रीमदाघाटाधिष्ठानश्रीदेसीपुरालंकारभूतश्रीमच्चंद्रजलतिलकसदृशश्रीदेवगुप्ताचार्या-(र्यी)यदेवगृहमध्यवर्तिश्रीमदादितीर्थकरबिम्बमुखारविंदमवलोकयता गवाक्षविन्यस्तहस्तेनो ...... नात्र प्रथमादर्शिते तेनैव स्वयं येन विरच...

**17. अंजनासुंदरीचरिय** by **गुणसमृद्धिमहत्तरा. (त्रुटित)** ग्रं. ५०४.

End:—सिरिजेसलमेरपुरे विक्कमचउदहसतुत्तरे वरिसे ।
वीरजिणजम्मदिवसे कियमंजणिसुंदरीचरियं ॥ ५०३ ॥

इति श्रीअंजणासुंदरीमहासतीकथानकं । कृतिरियं श्रीजिनचंद्रसूरिशिष्यणीश्रीगुणसमृद्धि-महत्तरायाः ।

**18. शाकुनशास्त्र** by **लावण्यशर्मा.** 5 leaves.

Beg:—चातुर्विद्यमहानिधिपिशुनं कंठैकनालजं धातुः ।
वक्त्रांभोजचतुष्टयमुद्दामरजोगुणं जयति ॥ १ ॥
अपदद्विपदचतुष्पदषट्पदाष्टापदामितपदस्य ।
शकुनमनुभूतसारं वक्ष्यामो जंतुजातस्य ॥ ५ ॥
यच्छकुनशास्त्रसारं स्वयमनुभूतं प्रभूतवारं यत् ।
यच्छिष्टैरुपदिष्टं विषयविभागेन तद् ब्रूमः ॥ ६ ॥

End:—इति भरद्वाजद्विजवरसुतश्रीलावण्यशर्मविरचिते शाकुनप्रदीपे क्षेत्रिकप्रकरणं द्वितीयं समाप्तं ॥

इति श्रीलावण्यशर्मविरचिते शाकुनशास्त्रे आकस्मिकप्रकरणं समाप्तं । ग्रं. ३८८.

# List of palm-leaf Mss. in Tapagachha Bhandar.

---

1. **हरिविक्रमचरित्र** by **जयतिलक** 300 leaves. 17½ × 2. **(मु.)**
   Col:—संवत् १४१५ वर्षे अद्येह स्तंभतीर्थे प्रतिलिखिता ।

2. **महानिशीथ.** 215 leaves. 18 × 2. Some pages torn and a few last re-written.

3. **उपदेशमालाविवरण** by **सिद्धर्षि.** 235 leaves. ग्रं. ४०६१. **(मु.)**
   16½ × 2½.

4. **पंचाशक** ( upto **तवोविहाण** ) 77 leaves. 15 × 2. **(मु.)**
   संवत् ११९५ वर्षे लिखिता ।

5. ( 1 ) **युगादिदेवचरित्र** by **हेमचंद्र.** 204 leaves. 18×2. **(मु.)**
   End:—वर्षे त्रयोदशांत्र(शत्रि)शे मार्गे श्वेतेह्नि पञ्चमे ।
   वृषभस्य कृतं वृत्तं श्रीजयसिंहसूरिभिः ॥
   धत्ते कुन्तलसन्ततिर्जिनपतेर्यस्मात्सदेश(दंस)स्थितिः
   व(र्ति)क्त्रांभोरुहसौरभाकुलमिलद्भृंगावलीविभ्रमम् ।
   स श्रेयःश्रियमातनोतु जगतीनेता व(वि)नीतावनी-
   पावित्र्यप्रथमावतारचतुरः श्रीनाभिसूनुर्जिनः ॥ १ ॥
   श्रीमालान्वयसंभवः शुभमतिः श्रेष्ठी पुरा जेसल-
   स्तत्पुत्रो विजयाभिधो गुणनिधिः सिंहावतारः पुरः ।
   तत्पत्न्यस्तित्रपलासप(?)सुता तत्कुक्षिसंभूतया
   लक्ष्मा(क्ष्म्या)लेख(खि) युगादिदेवचरितं श्रेयोर्थमत्रात्मनः ॥ २ ॥
   य(ज)ज्ञे यस्या आंबडो बंधुराद्यः सोभाकाह्वः सालिगो भीमसिंहः ।
   तस्मादेवं माहणः पद्मसिंहः सामंताख्यो माणिकस्तु स्वसैका ॥ ३ ॥
   अयं हि पुस्तक(कः) स्वस्तिहेतावस्तु निरंतरम् ।
   सूरिभिर्वाच्यमानस्तु श्रीमदादिजिनेशितुः ॥ ४ ॥
   यतः कल्पद्रुमनिर्भाश्चिन्तितार्थप्रदायकः ।
   स एव भविनामस्तु सर्वदा सर्वसिद्धिदः ॥ ५ ॥
   त्रिंशत्रयोदशे वर्षे विक्रमाद् भक्तितस्तथा ।
   श्रीजयसिंहसूरीणां पुस्तकोयं समर्पितः ॥ ६ ॥
   स्वःशैलस्वर्णदण्डोपरि रपित(?)ककुभशालभंजीसशोभम् ।
   तारामुक्तावचूलं जलनिधिविलसज्झल्लरीसुन्दरान्तं ।
   यावद् व्योमातपत्रं तपनतपमथो बद्धगंगादुकूलं ।
   तावद् व्याख्यायमानो जगति विजयतां सूरिभिः पुस्तकोयम् ॥ ७ ॥
   शुभमस्तु सर्वजगतः परहित etc.

   ( 2 ) **महावीरचरित्र ( त्रिषष्टि ).** 206-407 leaves. 18 × 2. **(मु.)**

**6. पंचमीकहा** by **महेश्वर.** 126 leaves. 15 × 2.
सं. ११०९ वर्षे लिखितं ।

**7. धर्मरत्नलघुवृत्ति** [ by **शान्तिसूरि** ]. 198 leaves. 16 × 2. **(मु.)**
End:—इति श्रीसिद्धांतसंग्रहभूषा भव्यजनहितानां धर्मरत्नवृत्तिः समाप्ता ।
चंद्रकुलांबरविधुभिः परोपकारैकरसिकचेतोभिः ।
श्रीशांतिसूरिभिरियं बुधप्रिया विरचिता वृत्तिः ॥
संवत् १३०९ वर्षे ज्येष्ठसुदि १ बुधे अद्येह धवलक्कके श्रे०सीधासुतसहजलेन धर्मरत्नप्रकरणपुस्तिका लिखापिता ।

**8. ( 1 ) ( द्रव्य ? ) प्रकाश** by **रामचंद्र** about 283 leaves. 12 × 2. **त्रुटित.**
( 2 ) ......... more than 211 leaves. 12 × 2.
Beg:—गुणसंपत्तये लोका यमन्वहमुपासते ।
प्रपद्ये तमहं नित्यविशेषगुणमीश्वरम् ॥ १ ॥
गुणसाधर्म्यवैधर्म्यद्वारा द्रव्यनिरूपणम् ।
तद्वारेणैव वर्त्यन्ते गुणा रूपादयोधुना ॥ २ ॥
End:—यथाबोधं पृथिव्यादिद्रव्याणामुदितं मया ।
नवानामपि वैधर्म्यमभ्यूह्यमपरं बुधैः ॥
इति श्रीरामचन्द्रेण कृतेमुष्मिन् समाप्तोयं पदार्थो द्रव्यप्रच्छकः ।

**9. मृगावतीचरित्र** by **मलधारिदेवप्रभ.** 56 leaves. **(मु.)**
End:—मलधारिश्रीदेवप्रभाचार्यविरचिते धर्मसारे मृगावतीचरित्रे पंचमो विश्रामः समाप्तः ग्रं. ६७०.

# Tapagachha Upashraya Bhandar
# Paper Manuscripts.

---

1. **धर्मोपदेशमालावृत्ति** by **जयसिंहाचार्य.** 143 leaves. **ग्रं. ५७७८.** संवत् 1677.

2. **वसुदेवहिंडी (प्रथमखंड).** ग्रं. १०४८९.

3. **पंचलिंगीविवरण** by **जिनपति.** **(मु.)**

4. **विशेषावश्यकभाष्यवृत्ति.** **(मु.)**

5. **हैमन्यास ( दुर्गपदव्याख्या )** by **कनकप्रभ.** 230 leaves. (damaged and eaten by rats). **(मु.)**

Beg:—प्रणम्य केवलालोकावलोकितजगत्रयम् ।
जिनेशं श्रीसिद्धहेमचंद्रशब्दानुशासनम् ( ने ) ॥
शब्दविद्याविदां वन्योदयचंद्रोपदेशतः ।
न्यासतः कतिचिद्दुर्गपदव्याख्याभिधीयते ॥

Col:—संवत् १६४९ वर्षे द्वितीयआषाढवदि १२ भौमे लषितं चे० श्रीपालकालूपुरमध्ये ।

आनंदविमलसूरीश्वरशिष्यपंडितवानरगणिशिष्यपंडितआनंदविजयगणिभिर्जेसलमेरुभांडागारे चित्कोशे मुक्ता सं. १६५९.

6. **दुर्गसिंहवृत्तिपंजिका** by **त्रिलोचनदास.**

7. **सारंगसारवृत्ति** [ by **हंसप्रमोद** ]. 43 leaves. ग्रं. १९५५.

Beg:—नमस्कृत्य कृतानंदं कन्द(न्दं) सौभाग्यशाखिनः ।
वीरं वह्वर्थवृत्तस्य वृत्तिं कुर्वे यथामति ॥ १ ॥

तचेदं वृत्तं—सारंगसारकमलादरसोमकांत-
देवागमामृतविभाजयधीरभूते ।
वामोपकारभरतांघ्रिपराजमान-
वर्णाप्रवन्धुरशियाब्जहरेक्षभाव ॥

End:—युगप्रधानसश्रीकजिनचंद्रगणाधिपाः ।
राजन्तेकवरोर्वीशप्रतिबोधविधायकाः ॥ १ ॥
सुराचार्य इवाचार्यश्रीजिनसिंहसूरिराट् ।
विभाति विबुधश्रेणिसमाश्रितपदांबुजः ॥ २ ॥
सुरतरुसमशोभाधर आसीज्जिनकुशलसूरिगुरुराजः ।
तच्छाखायां जज्ञे वाचकवरमोदराजगणिः ॥
वाचकवृषभा आसन् तच्छिष्या भावमंदिरास्तदनु ।
श्रीपाठकनंदिजया लब्धजयाः प्राज्ञपर्षत्सु ॥ ४ ॥

जीवितव्यमभूद् येषां शरदा षोडशं शतं ।
तत्सतीर्थ्या बभूवुस्ते साधुवर्धनवाचकाः ॥ ५ ॥
तेषां शिष्याः(ष्या) गुणैर्मुख्या विख्यातागमपारगाः ।
महिममेरुगणयो जज्ञिरे वदतां वराः ॥ ६ ॥
वाचनाचार्यधुर्यार्याः तत्सतीर्थ्याः शुभंयवः ।
तेजःसारगणिः(णि)श्रेष्ठी(ष्ठा) उत्कृष्टयतिमार्गगाः ॥ ७ ॥
हर्षचन्द्रमुनिर्हर्षसमुत्कर्षप्रदायकः ।
चिरं जीव्याज्जगज्जन्तुप्राणत्राणपरायणः ॥ ८ ॥
तच्छिष्येण सदभ्यस्तं कुर्वता मन्दमेधसाम् ।
हंसप्रमोदगणिना ग्रंथ एष समर्थितः ॥
यदत्र वितथं किञ्चित् तत्संशोध्यं विचक्षणैः ।
चेतसीति समाधाय को भ्रांतः कोविदं विना ॥
दोर्गुहास्यगुहास्यैकमिते वर्षे कृता अमी ॥
अर्थाः सहादिसप्तम्यां पार्श्वनाथप्रसादतः ।

**8. सुमित्रचरित्र** by **हर्षकुंजरोपाध्याय. ग्रं. ६५२ (मु.)**

**9. नर्मदासुंदरीकथा [** by **महेन्द्रसूरि ].** 35 leaves. **ग्रं. १७५०**

Beg:—जयइ भुवणपईवो सव्वन्नू जस्स नाणजुन्हाए ।
लक्खिज्जइ भवभवणे कालत्तयसंभवं वच्छं(त्थू) ॥ १ ॥

End:—एसा कहा कहिया महिंदसूरिहिं नियसीसेहिं ।
अब्भत्थिएहि नउणं(ण) प(पं)डिव्व(च)पयडणनिमित्तं ॥
जो लिहइ जो लिहावइ वाएइ कहेइ सुणइ वा सम्मं ।
तेसिं य वयणदेवी करेउ रक्खं पयत्तेण ॥ ७ ॥
संती करेउ संती ति[त्थ]यरो सयलजीवलोयस्स ।
तह बंभसंतिजक्खो कयरक्खो समणसंघस्स ॥ ८ ॥
निम्माया एस कहा विक्कमसंवच्छरे वइक्कंते ।
एक्कारसहिं सएहिं सत्तासीएहिं वरिसाणं ॥ ९ ॥
आसोयासियएगारसीए वारम्मि दिवसनाहस्स ।
लिहिया पढमायरियस्स मुणिणा गणिसीलचंदेण ॥ १० ॥

**10. संघाचारटीका** ( upto चैत्यवंदनाधिकार ). 206 leaves. **ग्रं. ७८००.**

Beg:—**देवेन्द्रवृंदस्तुतपादपद्मः स्वर्भूभु(भु)वः श्रीवरकेलिसद्म ।**
संदेहसंदोहरजःसमीरः स वः शिवायास्तु जिनेंद्रवीरः ॥
चैत्यमुनिवंदनप्रभृतिभाष्यविवृतेर्यथाश्रुतं किंचित् ।
संघस्याचारविधिं वक्ष्ये स्वपरोपकाराय ॥

End:—**इति श्री...** विरचितायां सं॰ टीकायां चैत्यवंदनाधिकारः **प्रथमः समाप्तः ।**

**11. नियमसारटीका** by **पद्मप्रभ. (मु.)**

Beg:—**त्वयि सति परमात्मन् मादृशान् मोहमुग्धान् ।**
**कथमतनुवशत्वान् बुद्धकेशान्यजेहम् ॥**

सुगतमगधरं वा वागधीशं शिवं वा ।
जितभवमभिवन्दे भास्वरं श्रीजिनं वा ॥
वाचं वाचंयमीन्द्राणां वक्त्रवारिजवाहनाम् ।
वन्दे नयद्वयायत्तवाच्यसर्वस्वपद्धति[म् ] ॥
सिद्धांतोद्यश्रीधवं सिद्धसेनं तर्काब्जार्क(र्कं) भट्टपूर्वाकलंकं ।
शब्दाब्धीन्दुं पूज्यपादं च वन्दे तद्विद्याढ्यं वीरणंदिव्रतीन्द्रं ।
अपवर्गाय भव्यानां शुद्धये स्वात्मनः पुनः ।
वक्ष्ये नियमसारस्य वृत्तिं तात्पर्यसंज्ञिताम् ॥ ४ ॥

End:—सुकविजनपयोजानंदमित्रेण शस्तं
ललितपदनिकायैः नि(र्येनि)र्मितं शास्त्रमेतत् ।
निजमनसि विधत्ते यो विशुद्धात्मकांक्षी
स भवति परमश्रीकामिनीकामरूपः ॥
पद्मप्रभाभिधानोद्य ? सिंधुनाथसमुद्भवा ।
उपन्यासोर्मिमालेयं स्थेयाच्चेतसि शा(सा) सताम् ॥ etc.

इति सुकविजनपयोजमित्रपंचेन्द्रियप्रसरवर्जितगात्रमात्रपरिग्रहश्रीपद्मप्रभमलधारिदेवविरचितायां नियमसारस्य व्याख्यायां तात्पर्यवृत्तौ शुद्धोपयोगाधिकारो द्वादशः श्रुतस्कन्धः । संवत् १७७५ वर्षे कार्तिक वदि १० शुक्रे लिखिता प्रतिरियं राजरंगे ।

12. **नलायन** ? 132 leaves; same as that of **माणिक्यसूरि.** Author's name is not given nor the author's **प्रशस्ति.** This Ms. was put in the Bhandar by **आनंदविजय** in सं. 1659.

13. ( 1 ) **नरबोध.** ( 2 ) **नारीबोध.** 2 to 12 leaves. Each contains 4 प्रबंध s. Old Gujerati.

14. **शत्रुञ्जयोद्धार** by **ऋषभदास** son of महिराज, composed at Cambay in सं. १६६७.

15. **वासवदत्ता.** 41 leaves. **(मु.)**
Beg:—करबदरसदृश etc.
End:—इति महाकविसुबंधुविरचिता वासवदत्ताभिधाना आख्यायिका **समाप्ता** । संवत् १४६८ समये मार्गसिरवदि ४ बुधवासरे लिखितं **कायस्थयशोधरेण** ।

16. **सम्यक्त्वप्रकरणवृत्ति** commenced by **चक्रेश्वर** and finished by तत्प्रशिष्य **तिलकाचार्य.**

17. **किराතटीका** by **प्रकाशवर्ष ( काश्मीरक )** son of **हर्ष.**

18. **शीलवतीकथा** by **आज्ञासुंदर** of रुद्रपल्लीयगच्छ.
संवत् द्राषष्टिवर्षेषु ? रचिता ।

19. **शनीश्वरविक्रमरास** by **धर्मसी.** 8 leaves.
Copied at Radhanpur in सं. १६८६.

---

# Paper Manuscripts of Dungarji Yati.

1. **शोभनस्तुतिवृत्ति** by **जयविजय** pupil of देवविजय. ग्रं. २३५०.
2. **धर्मोपदेश** (जैन) by **वल्लभ.** श्लो० १०७.
3. **संबोधसप्ततिकावृत्ति** by **गुणविनय.** (मु.)
   जिनचंद्रसूरि got the above three copied in सं. १६६१.
4. **पुण्यसारकथानक** by **विवेकसमुद्रगणी.** 10 leaves.
   Beg:—दानमुख्यचतुष्पादा पुण्यदुग्धा दयानना ।
   श्रीपार्श्वनाथगीःकामधेनुर्दद्यान्मनोमतम् ॥ १ ॥
   End:—वर्षे त्रयोदशशते चतुरुत्तरे च
   त्रिंशत्तमे प्रथमकार्तिकपूर्णिमायां ।
   श्रीवाचनागणिविवेकसमुद्र एतां
   चित्रां कथां व्यधित जेसलमेरुदुर्गे ॥ ४० ॥
   षट्तर्कसिद्धांतपयोधिकुंभजै-
   र्वादीभसिंहैः सुलब्धिवार्धिभिः ।
   कथासकौ श्रीमुनिराजनायकै-
   र्जिनप्रवोधप्रभुभिर्विशोधिता ॥ ३४१ ॥

इति श्रीजिनेश्वरसूरिशिष्यवाचनाचार्यविवेकसमुद्रगणिविरचितं श्रीसाधर्मिकवात्सल्यफल-लेशाविर्भावकं श्रेष्ठिपुत्रपुण्यसारकथानकं समाप्तं ॥ ग्रं. ३४८.

5. ( 1 ) **वसुदेवहिंडी (प्रथमखंड).**
   ( 2 ) **पंचसायक** by **कविशेष(ख)र ज्योतिरीश्वर.**
6. **श्रीपालचरित्रव्याख्या** by **क्षमाकल्याण.** ग्रं. ३०३२.
   The text is in प्राकृत.
7. **काव्यप्रकाशटीका** by **भवदेव.**
8. **पांडित्यदर्पण** [ by **उदयचन्द्र** ]. 61 leaves.
   Beg:—यस्य ज्ञानदयासिंधोः प्रसत्तेः पशुपूरुषाः ।
   भवंति विबुधा भूमौ तं वंदे परमं गुरुं ॥
   End:—इति सूर्यवंशावतंससदसल्लयोवि(वि)वेचनराजहंसमहारा[ज]श्रीमदनूपसिंहदेवे-नाज्ञप्तेन श्वेतांबरोदयचंद्रेण संदर्शिते पांडित्यदर्पणे प्रज्ञामुकुटमंडनादर्शो नाम नवमः प्रकाशः ।
9. **पृथ्वीचंद्रचरित्र** by **जयसागर.** 66 leaves.
   Beg:—श्रीवीरचरणांभोजं नमामि श्रीनिकेतनं ।
   प्राप्यते यदुपासीनैरास(सी)नैरपि निवृ(र्वृ)तिः ॥ १ ॥
   End:—इति श्रीखरतरगच्छे श्रीजिनराजसूरिशिष्योपाध्यायश्रीजयसागरविरचिते श्रीपृथ्वीचंद्रचरित्रे एकविंशतिभववर्णनो नाम एकादश[:] प्रस्तावः ॥
   श्रीवीरशासनांभोधिसमुल्लासनशीतगोः ।
   सूरेरभयदेवस्य नवांगीवृत्तिवेधसः ॥

पट्टालंकारसारश्रीः सूरिश्रीजिनवल्लभः ।
संताने तस्य शस्यात्मा श्रीजिनोदयसूरिराट् ॥ २ ॥
तत्पट्टशार्ङ्गभृद्वक्षःस्थलकौस्तुभसंनिभः ।
श्रीजिनराजसूरीन्द्रो योभूद्दीक्षागुरुर्मम ॥ ३ ॥
तदनु श्रीजिनवर्धनसूरिः श्रीमानुदेदुदारमनाः ।
लक्षणसाहित्यादिग्रंथेषु गुरुर्मम प्रथितः ॥ ४ ॥
श्रीजिनभद्रमुनीन्द्राः खरतरगणगगनपूर्णचंद्रमसः ।
ते चोपाध्यायपदप्रदानतो मे परमपूज्याः ॥ ५ ॥
श्रीजयसागरगणिना तेन मया वाचकेन शुचि वाच्यम् ।
पृथ्वीचन्द्रचरित्रं विरचितमुचितप्रविस्तारम् ॥ ६ ॥
श्रीप्रह्लादनपुरनगरे त्रिबिंदुतिथिवत्सरे १५०३ कृतो ग्रंथः ।
माल्हूश्रावकवसतौ समाधिसंतोषयोगेन ॥ ७ ॥
अभ्यर्थना सत्यरुचेव(बं)भूव साहाय्यकारी गणिरत्नचंद्रः ।
उपक्रमोयं फलवान् ममाभूत्क्रिया हि साहाय्यकसव्यपेक्षा ॥ ८ ॥
यद्गदितमल्पमतिना न्यूनाधिकमर्थजातमिह किंचित् ।
विद्वद्भिरमलधीभिः प्रसादमाधाय तच्छोध्यं ॥ ९ ॥
अनुष्टुभां सहस्रे द्वे संपूर्णानि शतानि षट् ।
चतुःपंचाशदन्या च ग्रंथमानमुदाहृतं ॥ अंकतोपि ग्रं. २६५४.

10. **काव्यकल्पलतावृत्तिमकरंद** by **शुभविजय.**
Composed in 1665 (सं.) at Ahmedabad.

11. **आत्मप्रकाश** by **आत्माराम** pupil of दोलतराम. A work on Medicine in Gujerati.

12. **कथारत्नाकर** by **हेमविजय.** (मु.)

13. **एकाक्षरनाममालिका** by **विश्वशंभु.**

14. **परमहंस[संबोध]चरित्र** [ by **नयरंग** ]. 27 leaves.

End:—इति श्रीमत्खरतरगच्छे वाचनाचार्यश्रीगुणशेषरगणिशिष्यनयरंगविरचिते परमहंससंबोधचरिते पुनः परमहंससाम्राज्यप्राप्तिवर्णनो नामाष्टमः प्रस्तावः ।

श्रीमत्खरतरे गच्छे सुसाम्राज्यं प्रशासति ।
श्रीजिनचंद्रसूरीन्द्रे सभद्रे जयशालिनि ॥ १ ॥
बालपताकामहापुर्यां सुमत्यर्हत्प्रसादतः ।
वेदाक्षिरसशीतांशुमिते संवत्सरे सिते ॥ २ ॥
विजयदशमीघस्रे(स्रे) महामं(मां)गल्यदायके ।
श्रीजिनभद्रसूरीणां शिष्यः श्रीसमयध्वजः ॥ ३ ॥
तच्छिष्यो वाचनाचार्यो ज्ञानमंदिरसंज्ञकः ।
विद्यमानस्तु तच्छिष्यो वाचको गुणशेषरः ॥ ४ ॥
तदंतेवासिलेशेन नयरंगेण नामतः ।
संपूर्णं चरितं चक्रे श्रोतृसुखदमेतकं ॥ ५ ॥

यः कश्चिदपशब्दोत्र मंदत्वादागतो भवेत् ।
स सोढव्यः कृपां कृत्वा विज्ञैः शोधनवत्सलैः ॥ ६ ॥
आनंदकृत्प्रबंधोयं त्रिजगद्दीपकोपमः ।
वाच्यमानश्चिरं नंद्यात्(द्) यावच्चंद्रदिवाकरौ ॥ ७ ॥
इति श्रीपरमहंससंबोधचरितं संपूर्णं समाप्तमिति ॥

**15. वर्धमानविद्याकल्प.** 43 leaves.

Col:—संवत् १४९९ वर्षे कार्तिकसुदि ९ शनौ श्रीसरस्वतीपत्तने श्रीकृष्णर्षीयगच्छे वा० श्रीजयवल्लभशिष्यो(ष्य) वा० श्रीदेवसुंदरमिश्रैः श्रीवर्धमानविद्याकल्पो लेखितः । लिखितः पं० नाथूकेन ॥

**16. नामकोश [ by सहजकीर्ति ].**

Beg:—स्मृत्वा सर्वज्ञमात्मार्थं सिद्धशब्दार्णवां जि(वाज्ञि)नान् ।
सलिंगनिर्णयं नामकोशं सिद्धं स्मृति नये ॥ १ ॥

End:—कृतशब्दार्णवैः सांगः श्रीसहजादिकीर्तिभिः ।
सामान्यकांडोयं षष्ठः स्मृतिमार्गमनीयत ॥

**17. शब्दरत्नप्रदीप.** कोश in 5 Kandas. 8 leaves.

Beg:—सरस्वत्याः प्रसादेन कविर्बध्नाति यत्पदम् ।
तत्प्रसिद्धमप्रसिद्धं वा तत्प्रमाणंत्र साधवः ॥

**18. रघु[वंश]टीका ( अर्थलापनिका ) by समयसुंदर.**

**19. शकुनसारोद्धार by माणिक्यसूरि. (मु.)**

**20. पुष्पमालावृत्ति by साधुसोम** pupil of सिद्धांतरुचि pupil of जिनभद्रसूरि.

**21. मंत्रराजरहस्य [ by सिंहतिलकसूरि ].** 22 leaves. ग्रं. ८००.

End:—श्रीविबुधचंद्रगणभृच्छिष्यः श्रीसिंहतिलकसूरिरिदं ।
लीलावत्या वृत्त्या सहितं विदधते श्रियं दिशताम् ॥ ६१ ॥
संवत् गुणत्रयोदश १३२२ वर्षे दीपालिपर्वसद्दिवसे ।
साह्लाददेवतोज्व(ज्ज्व)लमनसा पूर्ति(र्ति) मयेदमानीतम् ॥ ६३ ॥
श्रीयशोदेवसूरिशिष्यविबुधचन्द्रसूरिशिष्यश्रीसिंहतिलकसूरिभिमं(र्म)त्रराजरहस्यं विरचितं ।

**22. तपामत(उत्सूत्रोद्घटन)खंडन by गुणविनय.** 42 leaves. ग्रं. १२५०.

Beg:—प्रणम्य रम्यशर्म्माणां कारकं विघ्नवारकम् ।
श्रीवामादारकं पार्श्वं भुवनैश्वर्यधारकम् ॥ १ ॥
प्रौढप्रभावसद्भावाविर्भावकमनुत्तरम् ।
योगिनीनां चतुःषष्टेः साधकं निर्विबाधकम् ॥ २ ॥
हृदि स्मृत्वा गुणान् धृत्वा स्फुटं विबुधभावितान् ।
तस्यैव विविधान् श्रीमज्जिनदत्तगुरुं वरं ॥ ३ ॥

तद्दूषकं वचोयुक्त्या विदूषकमिवोत्कटं ।
दूषयामस्सतां दोषं( षान्) प्रणयन्तं मुधा मदात् ॥ ४ ॥

End:—विक्रमतः शररसरसशशिवर्षे लब्धसंपदुत्कर्षे ।
विजयिनि यामममहीभुजि नीतिपथानीतपुष्टदुष्टजने ॥ १ ॥

प्रवरे श्रीनवनगरे श्रीजिनकुशलप्रभावलक्ष्मिभरे ।
श्रीमत्खरतरगच्छे विष्णुपदीसलिलवत्स्वच्छे ॥ २ ॥

श्रीमत्साहिनरेन्द्रचन्द्ररचितश्रीपादपद्माहणा-
संभारे विजयिन्युदारचरिते मुग्धैर्विदग्धैर्नरैः ।
स्वाख्याते च युगप्रधानपदवीं बिभ्रत्युदारैर्गुणैः
श्रीमच्छ्रीजिनचंद्रसूरिसवितर्युद्यत्प्रतापाद्भुते(पोद्धुरे) ॥ ३ ॥

[ श्रीजिनसिंहगुरूणामादेशमवाप्य काप्यनिंद्यफला ।
उत्सूत्रकालकूटे धर्म्मोद्यसरस्वदुद्भूते ॥ ४ ॥ ]

आगमविषापहारिप्रवरमहामंत्रसंस्मृतेः प्रसभं ।
...निर्वाय(?)ता वितेने यथा नमो हस्ततो भवति ॥ ५ ॥

श्रीजयसोमगुरूणां कल्पतरूणां जयोरुफलदानात् ।
चारुविचारप्रसवप्रसवाच्च विचार्य किल शिष्यैः ॥ ६ ॥

पाठकवरगुणविनयैर्विशोध्यमथ मथितसंशयैरेतत् ।
खंडनमथवा तेषामेषा विज्ञप्तिरिह मौढ्यात् ॥

केन मंदाकिनी मंदं पावनायोपदिश्यते ।
अंधकारच्छिदे भानुः केन वा प्रार्थ्यतेन्वहं ॥

स्वत एव तथा वृत्तिरुपकारधिया यथा ।
तथैव शोधने तेषां प्रवृत्तिर्न नियोगजा ॥

कदाग्रहगृहीतानां वितथोक्तौ गिरां गतिः ।
अपा(वा)रिता महादोषपोषायाग्पित्तद(व)द्भवेत् ।
नाना शास्त्राणि सुगुरोर्ज्ञाननेत्रप्रदायिनः ।
वीक्ष्यास्माभिः समारब्धा हेलया युक्तिकेलयः ॥

श्रीजिनदत्तगुरूणां श्रीमज्जिनकुशलसूरिराजानां ।
प्रसरत्प्रसादवशतोभवत्तदयं संपदुत्कर्षः ॥

इति तपाधर्मसागरोपाध्यायविहितोत्सूत्रोद्घटनकुलकखंडनं विरचयांचक्रे श्रीमज्जिन-सिंहसूरिवरोपदेशाच्छ्रीजयसोममहोपाध्यायशिष्यपाठकश्रीगुणविनयैः श्रीनव्यनगरे ।

# Paper mss. in Thirusaha Bhandar.

---

1. **वादस्थल** [ by **प्रद्युम्नसूरि** ]. 16 leaves.

Beg:—स्याद्वादामृतसंसिक्ताः कदाग्रहविषापहाः ।
वंदे जैनेश्वरीवा(वा)चः परास्तसुमनःशुचः ॥ १ ॥

Refutes the contest that प्रतिमाs, installed by **श्वेतांबर यति**s in उदयनविहार at आशापल्ली are not to be worshipped.

End:—औष्ट्रिकमतकालकूटकुंभो भुवनांतकनिमित(त्त)मत्र योभूत् ।
उपपत्तिपरंपराप्रहारैः सोयमभांजि सभासदां समक्षं ।
आसीच्चर्वितवादिगर्वगरिमा श्रीदेवसूरिप्रभु-
स्तत्पादाब्जमधुव्रतः समजनि श्रीमन्महेन्द्रः प्रभुः ।
शिष्यस्तस्य पितुः प्रबोधविधये सिद्धांतसिंधोः सुधा-
मुद्धृत्या सवकि(स्खलि)तं विचारमचिरात् प्रद्युम्नसूरिर्व्यधात् ॥

2. **प्रबोधोदयवादस्थल** [by **जिनपति**]. Subject seems as above.

Beg:—यस्यांतःसभमायतांसलभुजास्तन्वश्चतस्रः समं
भांति स्म द्युततांतिकांतिलहरीलोमत्रिलोकश्रियः ।
शंके वल्गदुदग्रविग्रहभवोपग्राहिकर्मद्विषा-
मास्यूताविति भी( जिगी )षया भगवता पायात् स वीरो जिनः ॥ १ ॥

Subject:—आशापल्ली उदयनविहारमूर्त्तिनां वंदनानर्हत्वं केचिद्वदंति यतिप्रतिष्ठितत्वात् इति मतनिरासः ।

End:—उद्धृत्य श्रुतवारिधेर्निरवधेः प्राक् सूरिवृन्दारकै-
न्य(र्न्य)स्ताशस्यरहस्यसंहतिसुधासद्ग्रंथकुंडेश्वि(ष्वि)यं ।
तामेतां प्रसमान उद्धततमोरूपो निरूप्यैषको
निष्कण्ठः कठिनेतराद्भुतनि( गि )रा चक्रेण चक्रि( क्रे ) बुधाः ॥
पूज्यश्रीजिनवल्लभप्रभुपदाभ्यारोहरोहद्यशः—
सूरिश्रीजिनदत्तदत्तपदवीराजीविनीभास्वता( तः) ।
शिष्यः श्रीजिनचन्द्रसूरिसुगुरोः वि(र्वि)द्यासरस्वानिति
व्यध्वध्वंसविधेर्व्यधाज्जिनपतिः सूरिः प्रबोधोदयम् ॥

3. **सूक्तरत्नावलीवृत्ति** मूल & टीका both by **क्षमाकल्याण.**

Composed in मगसिराबाद.

**4. व्युत्पत्तिरत्नाकर** by **देवसागर.**

आसीद्वीरविभो वि(विं)भोद्धर(?)भृतः स्थाने च दानस्थिरः
स्थाने लब्ध्युपलब्धिमान् गणधरः स्वामी सुधर्मोदयी ।
तद्वंशे वशिनोऽम्यमौक्तिकसमा मान्या मुनिश्रेयसां(?)
जाताः सूरय आर्यरक्षित इति ख्याता (ताः) क्षितावक्षताः ॥ १ ॥
ये क्षेत्रेत्र कलौ निरस्तकुहना स्वात्मार्थिनो नाग्रहाः
सिद्धांतादवबुद्धशुद्धपरमार्थं ख्यापयंतोक्षरम् ।
कुर्वंतश्च तपो वपुष्यपि निरापेक्षा विपक्षक्षय-
क्षेपिष्ठा विधिपक्षमुख्यविरुदं प्रापुः प्रतापोत्कटाः ॥ २ ॥
तत्पट्टानुक्रमेऽभूत् सुविहितमहितः शासनौन्नत्यकारी
विद्यासिद्धः प्रसिद्धोवनिधवनिवहैर्वंदिताङ्घ्रिर्महौजाः ।
तत्तचंचच्चरित्रैर्धवलितभुवनो वर्ण्यलावण्यपूर्णः
सूरिः श्रीमेरुतुंगः प्रवरपरिकरोद्भासिताभ्यागदेवाः ॥ ३ ॥
तदन्ववनिविश्रुताः श्रुतसरस्वदंतःस्पृशः
प्रशांतमनसः सदा सदवधानधन्यर्द्धयः ।
सुशिष्टजनसेविताः प्रकटदैवताधिष्ठिताः(ता)
बभूवुरतिविंदयो गुणनिधानसूरींदवः ॥ ४ ॥
प्रेष्ठव्युत्पन्नपर्षत्(द्)भृतभृतिर्दढिमा दानशौंडः प्रकांडः
..........................................................
व्योद्यव्युद्गाहिमेधामुपि मुखरमुखम्लानिकृत् साधुसंघो
व्याप्तोक्तिव्यक्तिभक्तिः समजनि शमवान् सूरिराट् धर्ममूर्त्तिः ॥ ५ ॥
तैः स्वस्थानाभिषिक्ताः क्षितितलतिलका ग्रंथगूढार्थसार्थो-
द्घातारस्तारवाचा प्रसरकरधुतध्वांतधाराप्रचाराः ।
प्राज्यप्रौढप्रतिष्ठाप्रभृतिसुकृतसाक्षिणः क्षांतिभंतः
श्रीकल्याणाब्धिसूरीश्वरवरगुरवो ज्योकृयुगाग्र्या जय(यं)ति ॥ ६ ॥
इतश्च । शिष्याः श्रीगुणसेवधेर्गणपतेः (ते)र्ये गच्छधूर्धारणे
दध्रुः सर्वधुरीणतां धुरि सतां स्तुत्याः स्थितिस्थापकाः ।
सवक्तु(?)र्गणनायका अपि वचो येषां सतीर्थ्यत्वतो
भास्वंतो भुवि वाचकाः समभवन् श्रीपूर्णचंद्राह्वयाः ॥ ७ ॥
तच्छिष्याः क्षम(?)वाचकाग्रिमतमा माणिक्यचंद्रास्ततो
गीतार्थाः(र्था) गणिसंमता यतितंतेस्तथ्यक्रियाकारकाः ।
धीधीराः स्वध्वनिवाचकाः(का) विनयतः चंद्राभिधाः संतिवत्(?)
तच्छिष्यो रविचंद्रपंडितवरो जज्ञे गुणग्रामणीः ॥ ८ ॥
तद्दीक्षितो वाचकदेवसागरोहं लब्धवान् ज्ञानलवं गुरोस्ततः ।
श्रीनाममालां प्रभुहेमनिर्मितां प्रतीय तालीं समवाङ्मयौकसः ॥ ९ ॥
वर्षे षट्वसुतर्कदिक्पतिमिते हाल्लारदेशे नृपे
लाषाख्ये सति भव्यनव्यनगरे चैत्यावलीशालिनि ।
लक्ष्मीचंद्रबुधस्य मद्गुरुगुरुभ्रातुर्जयाब्धेर्मुनेः
शिष्यस्योत्तमचंद्रशिष्यसहजस्यात्यंतनिबं(बं)धतः ॥ १० ॥

सूत्रैः पाणिनिसूत्रितैः ब(तैर्ब)हुविधग्रंथांश्च संख्यावतः
साक्षीकृत्य यथामति वि(व्य)रचयं व्युत्पत्तिरत्नाकरं ।
छाद्मस्थान्लि(स्थ्याल्लि)खितं यदत्र वितथं स्यात् सूरिभिस्सूरतैः
संशोध्यं करुणां विधाय मयि तन्मात्सर्यमुत्सार्य च ॥ ११ ॥
असौ सूर्येद्रक्षो भगणखरसादीन् परिणयन्
दिशा सार्धं कालो स्मरकत्त(?)ष्टापदपदे ।
न यावत् प्रक्रीडन्नुपरमति तावद् बुधजनै-
रधीयाना वृति(त्ति)र्जगति तददोषा विजयताम् ॥ १२ ॥

# परिशिष्टम् ।

## जेसलमेरुमन्दिरस्थशिलालेखाः ।

### ( १ )

### पार्श्वजिनालयस्य प्रशस्तिः ।

ऐं नमः श्रीपार्श्वनाथाय सर्वकल्याणकारिणे ।
अर्हते जितरागाय सर्वज्ञाय महात्मने ॥ १
विज्ञानदूतेन निवेदिताया मुक्त्यंगनाया विरहादिवात्र ।
रात्रिंदिवं यो विगतप्रमीलो विघ्नापनोदं स तनोतु पार्श्वः ॥ २
समस्ति शर्म्म परमर्द्धिपात्रं परं पुरं जेसलमेरुनाम ।
यदाह सर्वस्वमिव क्षमायाः कुलांगनाया इव सौवकांतं ॥ ३
तत्राभूवन्नखंडा यदुकुलकमलोल्लासमार्त्तंडचंडा
दोर्द्दंडाक्रांतचंडाहितनरपतयः पुष्कला भूमिपालाः ।
येषामद्यापि लोकैः श्रुतिततिपुटकैः पीयते श्लोकयूष-
स्तत्पूर्ण्णं विश्वभांडं कुतुकमिह यतो जायते नैव रिक्तं ॥ ४
तत्र क्रमादभवदुग्रसमग्रतेजाः श्रीजैत्रसिंहनरराज इति प्रतीतः ।
चिच्छेद शात्रवनृपानसिनांजसा यो वज्रेण शैलनिवहानिव वज्रपाणिः ॥ ५
तस्य प्रशस्यौ तनयावभूतां श्रीमूलदेवोथ च रत्नसिंहः ।
न्यायेन भुंक्तः स्म तथा भुवं यौ यथा पुरा लक्ष्मणरामदेवौ ॥ ६
श्रीरत्नसिंहस्य महीधवस्य बभूव पुत्रो घटसिंहनामा ।
यः सिंहवन् म्लेच्छगजान् विदार्य बलादलाद्वप्रदरीमरिभ्यः ॥ ७
सुनंदनत्वाद्विबुधैर्नुतत्वाद् गोरक्षणाच् श्रीदसमाश्रितत्वात् ।
श्रीमूलराजक्षितिपालसूनुर्यथार्थनामाजनि देवराजः ॥ ८
तदंगजो निर्भयचित्तवृत्तिः परैरधृष्यप्रगुणानुवृत्तिः ।
पराक्रमक्रांतपरद्विपेंद्रः श्रीकेहरिः केशरिणा समोभूत् ॥ ९
तस्यास्ति सूनुः स्वगुणैरनूनः श्रीलक्ष्मणाख्यः क्षितिपालमुख्यः ।
राज्ञोपि यस्यातिविसारितेजश्चित्रं न्यकार्षीद्रविबिंबलक्ष्मीं ॥ १०
शत्रुघ्नबंधुरिह सन्नपि लक्ष्मणोपि रामाभिधानजिनभक्तिपरायणोपि ।
एतत् कुतूहलमहो मनसाप्यसौ यन्नापीडयन्निविडपुण्यजनान् कदाचित् ॥ ११
तथा सुमित्रामितनंददायी न दी(?)नबंधे निरतोवतीर्णः ।
पुनः प्रजां पालयितुं किलायं श्रीलक्ष्मणो लक्ष्मणदेव एव ॥ १२
यद्गुणैर्गुंफिता भाति नवीनेयं यशःपटी ।
व्याप्नोत्येकापि यद्विश्वं न मालिन्यं कदाप्यधात् ॥ १३
गांभीर्यवत्त्वात्परमोदकत्वाद्दधार यः सागरचंद्रलक्ष्मीं ।
युक्तं स भेजे तदिदं कृतज्ञः सूरीश्वरान् सागरचंद्रपादान् ॥ १४

प्रासाददेवालयधर्म्मशालामठाद्यमेवं सुकृतास्पदं तु ।
सार्द्धं कुलेनोद्धृतमार्यलोकैर्यत्रावनिं शासति भूमिपाले ॥ १५

इतश्च । चांद्रे कुले यतींद्रः श्रीमज्जिनदत्तसूरिराराध्यः ।
तस्यान्वयशृंगारः समजनि जिनकुशलगुरुसूरिः ॥ १६

जिनपद्मसूरिजिनलब्धिसूरिजिनचंद्रसूरयो जाताः ।
समुदैयरुरिह गच्छे जिनोदया मोदयासुर्नः (?) ॥ १७

तदासनांभोरुहराजहंसः श्रीसाधुलोकस्य शिरोवतंसः ।
...धामनिरासहंसो बभूव सूरिर्जिनराजराजः ॥ १८

क्रूरग्रहैरनाक्रांतः सदा सर्वकलान्वितः ।
नवीन...नो यो नालीकस्य प्रकाशकः ॥ १९

तस्य श्रीजिनराजसूरिसुगुरोरादेशतः सर्वतो
राज्ये लक्ष्मणभूपतेर्विजयिनि प्राप्तप्रतिष्ठोदये ।
अर्हद्धर्म्मधुरंधरः खरतरः श्रीसंघभट्टारकः
प्रासादं जिनपुंगवस्य विशदं प्रारब्धवान् श्रीपदं ॥ २०

नवेषुवार्द्धींदुमितेथ वर्षे निदेशतः श्रीजिनराजसूरेः ।
अस्थापयन् गर्भगृहेत्र बिंबं मुनीश्वराः सागरचंद्रसाराः ॥ २१

ये चक्रुर्मुनिपा विहारममलं श्रीपूर्वदेशे पुरा
ये गच्छं च समुन्नतं खरतरं संप्रापयन् सर्वतः ।
मिथ्यावादबलोन्मदद्विपकुले यैः सिंहलीलायितं
येषां चंद्रकलाकलान् गुणगणान् स्तोतुं क्षमः कोथवा ॥ २२

तेषां श्रीजिनवर्द्धनाभिधगणाधीशां समादेशतः
श्रीसंघो गुरुभक्तियुक्तिनलिनीलीलन्मरालोपमः ।
संपूर्णीकृतवानमुं खरतरप्रासादचूडामणिं
त्रिद्वीपांबुधियामिनीपतिमिते संवत्सरे विक्रमात् ॥ २३

अंकतोपि संवत् १४७३ ।

वर्ण्यं तन्नगरं जिनेशभवनं यत्रेदमालोक्यते
स श्लाघ्यः कृतिनां महीपतिरिदं राज्ये यदीयेजनि ।
येनेदं निरमायि सौवविभवैर्धन्यः स संघः क्षितौ
तेभ्यो धन्यतरास्तु ते सुकृतिनः पश्यंति येदः सदा ॥ २४

श्रीलक्ष्मणविहारोयमिति ख्यातो जिनालयः ।
श्रीनंदीवर्द्धमानश्च वास्तुविद्यानुसारतः ॥ २५

यावद् गगनशृंगारौ सूर्यचंद्रौ विराजतः ।
तावदापूज्यमानोयं प्रासादो नंदताच्चिरं ॥ २६

प्रशस्तिर्विहिता चेयं कीर्त्तिराजेन साधुना ।
धन्नाकेन समुत्कीर्ण्णा सूत्रधारेण सा मुदा ॥ २७

शोधिता वा० जयसागरगणिना श्रीः ।

# ( २ )

## शान्तिजिनालयस्य प्रशस्तिः ।

॥ जगदभिमतफलवितरणविधिना निरवधिगुणेन यशसा च ।
यः पूरितविश्वाशः स कोपि भगवान् जिनो जयति ॥ १

मनोभीष्टार्थसिद्ध्यर्थं कृतनम्यनमस्कृतिः ।
प्रशस्तिमथ वक्ष्येहं प्रतिष्ठादिमहःकृतां ॥ २

ऊकेशवंशे विशदप्रशंसे रंकान्वये श्रेष्ठिकुलप्रदीपौ ।
श्रीजाषदेवः पुनरासदेवस्तज्जाषदेवोद्भववन्नांबटोभूत् ॥ ३

विश्वत्रयीविश्रुतनामधेयस्तदंगजो धांधलनामधेयः ।
ततोपि च द्वौ तनयावभूतां गजूस्तथान्यः किल भीमसिंहः ॥ ४
सुतौ गजूजौ गणदेवमोषदेवौ च तत्र प्रथमस्य जाताः ।
मेघस्तथा जेसलमोहणौ च वेडूरितीमे तनया नयाढ्याः ॥ ५
तन्मध्ये जेशलस्यासन् विशिष्टाः सूनवस्त्रयः ।
आंबः प्राच्योपरो जींदो मूलराजस्तृतीयकः ॥ ६

तत्र श्रीजिनोदयसूरिप्रवरादेशसलिलेशकेशवः संवत् १४२५ वर्षे श्रीदेवराजपुरकृतसविस्तर-तीर्थयात्रोत्सवस्तथा संवत् १४२७ वर्षे श्रीजिनोदयसूरिसंसूत्रितप्रतिष्ठोत्सवांभोदोदकपल्लवितकमनीय-कीर्तिवल्लीवलयः सं. १४३६ वर्षे श्रीजिनराजसूरिसदुपदेशमकरंदमापीय संजातसंघपतिपदवीको राजहंस इव सं. आंबाकः श्रीशत्रुंजयोज्जयंताचलादितीर्थमानसरो यात्रां चक्रवान् । तथा

मोहणस्य पुनः पुत्राः कीहटः पासदत्तकः ।
देल्हो धन्नश्च चत्वारश्चतुर्वर्गा इवांगिनः ॥ १
शिवराजो महीराजो जातावाद्यसुतावुभौ ।
मूलराजभवश्चास्ति सहस्रराजनामकः ॥ २

तथा तत्र श्रीजिनराजसूरिसदाज्ञासरसीहंसेन संवत् १४४९ वर्षे श्रीशत्रुंजयगिरिनारतीर्थयात्रा निरमापि सं० कीहटेनेति ।

धामा कान्हा जगन्मल्ला इत्येते कीहटांगजाः ।
वीरदत्तश्च विमलदत्तकर्मणहेमकाः ॥ १
ठाकुरसिंह इत्येते पासदत्तसुता मताः ॥ २
देल्हजौ साधुजीवंदकुंपौ धन्नांगजाः पुनः ।
जगपालस्तथा नाथूरमरश्चेति विश्रुताः ॥ ३
तथा ॥ भीमसिंहस्य पुत्रोभूल्लाषणस्तस्य मम्मणः ।
जयसिंहो नरसिंहो माम्मणी श्रेष्ठिनावुभौ ॥ ४
तत्र स्तो जयसिंहस्य रूपाधिल्हाभिधौ सुतौ ।
नारसिंही पुनर्भोजो हरिराजश्च राजतः ॥ ५
इत्थं पुरुषरत्नौघाकुलं श्रेष्ठिकुलं कलौ ।
जयत्यधर्मविच्छेदि निःकलंकमदः कलं ॥ ६

इतश्च । श्रीवीरतीर्थे श्रीसुधर्मस्वामिवंशे युगप्रधानश्रीजिनदत्तसूर्यन्वये । श्रीजिनकुशलसूरिश्रीजिनपद्मसूरिश्रीजिनलब्धिसूरिश्रीजिनचंद्रसूरिश्रीजिनोदयसूरयो जाताः । तत्पट्टे श्रीजिनराजसूरय उदैषुः । अथ तत्पट्टे श्रीखरतरगणशृंगारसाराः कृतश्रीपूर्वदेशविहाराः श्रीजिनवर्द्धनसूरयो जयंति । अथ श्रीजेशलमेरौ श्रीलक्ष्मणराजराज्ये विजयिनि सं० १४७३ वर्षे चैत्रसुदि १५ दिने तैः श्रीजिनवर्धनसूरिभिः प्रागुक्तान्वयास्ते श्रेष्ठिधनाजयासिंहनरसिंहधामाः समुदायकारितप्रासादप्रतिष्ठया सह जिनबिंबप्रतिष्ठां कारितवंत इति । वा० जयसागरगणिविरचिता प्रशस्तिरियमुत्कीर्णा सूत्रधारहापाकेनेति नंदतात् ॥

## (३)

## सम्भवजिनालयस्य प्रशस्तिः ।

॥ अर्हं ॥ स्वस्ति श्रीस्तंभनपार्श्वनाथपादकल्पद्रुमेभ्यः ॥

प्रत्यक्षः कल्पवृक्षस्त्रिजगदधिपतिः पार्श्वनाथो जिनेंद्रः
श्रीसंघस्येप्सितानि प्रथयतु स सदा शक्रचक्राभिवंद्यः ।
प्रोत्सर्पंति प्रकामातिशयकिशलया मंगलश्रीफलाढ्याः
स्फूर्जद्धर्म्मार्थवल्ल्यो यदनुपमतमध्यानशीर्षं श्रयंत्यः ॥ १

श्रीशांतितीर्थंकरवासरेश्वरः सुप्रातमाविष्कुरुतां स्फुरद्द्युतिः ।
यस्य प्रतापादशिवक्षपाक्षये पुण्यप्रकाशः प्रससार सर्वतः ॥ २

कल्याणकल्पद्रुममेरुभूमिः संपल्लतोल्लासनवारिवाहः ।
प्रभावरत्नावलिरोहणाद्रिः श्रीसंभवेशः शिवतातिरस्तु ॥ ३

प्रासादत्रितये नत्वा मूलनाथत्रयं मुदा ।
रत्नत्रयमिवाध्यक्षं प्रशस्तिं रचयाम्यहं ॥ ४

यत्प्राकारवरं विलोक्य बलिनो म्लेच्छावनीपा अपि
प्रोद्यत्सैन्यसहस्रदुर्ग्रहमिदं गेहं हि गोस्वामिनः ।
भग्नोपायबला वदंत इति ते मुंचंति मानं निजं
तच् श्रीजेसलमेरुनाम नगरं जीयाज्जनत्रायकं ॥ ५

वंशो यद्यदुनायकैर्नरवरैः श्रीनेमिकृष्णादिभि-
र्जन्मेव प्रवरावदातनिकरैरत्यद्भुतैराल्यतः ।
तेनासौ लभते गुणं त्रिभुवनं सन्नादतो रंजयेत्
को वा ह्युत्तममानितो न भवति श्लाघापदं सर्वतः ॥ ६

श्रीनेमिनारायणरौहिणेया दुःखत्रयात् त्रातुमिव त्रिलोकं ।
यत्रोदिताः श्रीपुरुषोत्तमास्ते स वर्ण्णनीयो यदुराजवंशः ॥ ७

तस्मिन् श्रीयादववंशे । राउलश्रीजइतसिंहमूलराजरत्नसिंहराउलश्रीदूदाराउलश्रीघटसिंहमूलराजपुत्रदेवराजनामानो राजानोभूवन् ।

ततोभूत्केसरी राजा केसरीव पराक्रमी ।
वैरिवारणसंहारं यश्चकारासिदंष्ट्रया ॥ १

श्रीमत्केसरिराजसूनुरभवच् श्रीलक्ष्मणो भूपति-
र्विद्वल्लक्ष्मणलक्षतोक्षणशरच् श्रीलक्ष्मणस्तेजसा ।

दानाशाय करग्रहाच्च सकलं लोकं व्यधाल्लक्ष्मणं
यो बिंबे मृगलक्ष्मणोपि यशसा सौवाभिधानं व्यधात् ॥ २
तदीयसिंहासनपूर्वशैलप्राप्तोदयो ह्युग्रतरप्रतापः ।
श्रीवैरसिंहक्षितिपालभानुर्विभासते वैरितमो निरस्यन् ॥ ३

इतश्च ॥ चंद्रकुले श्रीखरतरविधिपक्षे ॥

श्रीवर्धमानाभिधसूरिराजो जाताः क्रमादर्बुदपर्वताग्रे ।
मंत्रीश्वरश्रीविमलाभिधानः प्राचीकरयद्वचनेन चैत्यं ॥ १
अणहिल्लपाटकपुरे यैर्दुर्लभराजपर्षदि विवादे ।
प्राप्तं खरतरबिरुदं जिनेश्वरास्सूरयो जज्ञुः ॥ २

ततः क्रमेण श्रीजिनचंद्रसूरिनवांगीवृत्तिकारश्रीस्तंभनपार्श्वनाथप्रकटीकारश्रीअभयदेवसूरिश्रीपिंडविशुद्ध्यादिप्रकरणकारश्रीजिनवल्लभसूरिश्रीअंबिकादेवताप्रकाशितयुगप्रधानपदश्रीजिनदत्तसूरिश्रीजिनचंद्रसूरिश्रीजिनपतिसूरिश्रीजिनेश्वरसूरिश्रीजिनप्रबोधसूरिश्रीजिनचंद्रसूरिश्रीजिनकुशलसूरिश्रीजिनपद्मसूरिश्रीजिनलब्धिसूरिश्रीजिनचंद्रसूरयः श्रीजिनशासनं प्रभासितवंतः ॥ ततः ।

श्रीगच्छलक्ष्मीधरणे जिनोदयाः प्रकाशितप्राज्ञसभाजिनोदयाः ।
कल्याणवार्द्धोदशवाजिनोदयाः पाथोजहंसा अभवन् जिनोदयाः ॥ १
जिनराजसूरिराजः कलहंसा इव बभुर्जिनमताब्जे ।
सन्मानसहितगतयः सदामरालीश्रिता विमलाः ॥ २

तत्पट्टे ॥ ये सिद्धांतविचारसारचतुरा यानाश्रयन् पंडिताः
सत्यं शीलगुणेन यैरनुकृतः श्रीस्थूलभद्रो मुनिः ।
येभ्यः शं वितनोति शासनसुरी श्रीसंघदीप्तिर्यतो
येषां सार्वजनीनमाप्तवचनं येष्वद्भुतं सौभगं ॥ १
श्रीउज्जयंताचलचित्रकूटमांडव्यपूर्जाउरमुख्यकेषु ।
स्थानेषु येषामुपदेशवाक्यान्निर्मापिताः श्राद्धवरैर्विहाराः ॥ २
अणहिल्लपाटकपुरप्रमुखस्थानेषु यैरकार्यत ।
श्रीज्ञानरत्नकोशा विधिपक्षश्राद्धसंघेन ॥ ३
मंडपदुर्गप्रल्हादनपुरतलपाटकादिनगरेषु ।
यैर्जिनवरबिंबानां विधिप्रतिष्ठाः क्रियंते स्म ॥ ४
यैर्निजबुद्ध्यानेकांतजयपताकादिका महाग्रंथाः ।
पाठ्यंते च विशेषावश्यकमुख्या अपि मुनीनां ॥ ५
कर्मप्रकृतिप्रमुखग्रंथार्थविचारसारकथनेन ।
परपक्षमुनीनामपि यैश्चित्तचमत्कृतिः क्रियते ॥ ६
छत्रधरवैरिसिंहत्र्यंबकदासक्षितींद्रमहिपालैः ।
येषां चरणद्वंद्वं प्रणम्यते भक्तिपूरेण ॥ ७
शमदमसंयमनिधयः सिद्धांतसमुद्रपारदृश्वानः ।
श्रीजिनभद्रयतींद्रा विजयंते ते गणाधीशाः ॥ ८

इति श्रीगुरुवर्ण्णनाष्टकं ॥

इतश्च ॥

श्रीमानूकेशवंशोयं वर्धतां सरलाशयः ।
नरमुक्ताफलं यत्र जायते जनमंडनं ॥ १

तस्मिन् श्रीऊकेशवंशे चोपडागोत्रे । सा० हेमराजः तदंगजः सा० पूनाकस्तदात्मजः सा० दीताख्यस्तत्पुत्राः सा० सोहड कर्मण गणदेव महिपा सा० पांचा सा० ठाकुरसिंहनामानः षट् । तत्र सा० पांचाभार्या रूपादे तत्पुत्रा इमे यथा ॥

शिवराजमहीराजलोलालाषणनामकाः ।
चत्वारः श्रीचतुर्वर्गसाधकाः संति पांचयः ॥ १

एतेषां भगिनी श्राविका गेली । तत्र सा०शिवाभार्या सूहवदे तयोः पुत्रः थिराख्यः पुत्री हीराई । महिराभार्या महघलदे तयोरंगजाः सादा सहसा साजणाख्याः सुते नारंगदेबल्हीनाम्न्यौ । लोलाभार्या लीलादे पुत्रौ सहजपालमेलाकौ पुत्री लाषाई । लाषणभार्या लषमादे तदात्मजाः शिखरा समरा मालाख्याः ॥

इत्यादिपरिवारेण संयुताः श्रावका इमे ।
कुर्वंति धर्मकार्याणि शासनोन्नतिहेतवे ॥ १
विक्रमवर्षचतुर्दशसप्ताशीतौ विनिर्ममे यात्रा ।
शत्रुंजयरैवतगिरितीर्थे संघान्वितैरेभिः ॥ २
पंचम्युद्यापनं चक्रे वत्सरे नवतौ पुनः ।
चतुर्भिर्बांधवैरेभिश्चतुर्धा धर्मकारकैः ॥ ३

अथ संवत् १४९४ वर्षे श्रीवैरिसिंहराउलराज्ये श्रीजिनभद्रसूरीणामुपदेशेन नवीनः प्रासादः कारितः । ततः संवत् १४९७ वर्षे कुंकुमपत्रिकाभिः सर्वदेशवास्तव्यपरःसहस्रश्रावकानामंत्र्य प्रतिष्ठामहोत्सवः सा० शिवाद्यैः कारितः । तत्र च महसि श्रीजिनभद्रसूरिभिः श्रीसंभवनाथप्रमुखबिंबानि ३०० प्रतिष्ठितानि प्रासादश्च ध्वजशेखरः प्रतिष्ठितः । तत्र श्रीसंभवनाथो मूलनायकत्वेन स्थापितः । तत्र चावसरे सा० शिवामहिरालोलालाषणश्राद्धैः दिन ७ साधर्मिकवात्सल्यं कृतं राउलश्रीवैरसिंहेन साकं श्रीसंघो विविधवस्त्रैः परिधापितः । राउलश्रीवैरसिंहेनापि चत्वारस्ते बांधवाः स्वबांधववद्वस्त्रालंकारादिदानेन सम्मानिता इति ॥

॥ अथ जिनपतिपार्श्वे राजतां यत्प्रसादात्
सकलसुकृतकार्यं सिध्यति ध्यायकानां ।
जिनकुशलमुनींद्रास्ते जयंतु त्रिलोक्यां
खरतरविधिपक्षे तन्वते ये सुखानि ॥ १
सरस्यामिव रोदस्यां पुष्पदंतौ विराजतः ।
हंसवन्नंदतात्तावत् प्रासादः संभवेशितुः ॥ २
प्रासादकारकाणां प्रासादविधिप्रतिष्ठितिकराणां ।
सूरीणां श्राद्धानां दिने दिने वर्द्धतां संपत् ॥ ३
सेवायै त्रिजगज्जनाञ जिनपतेर्यच्छृंगमूले स्थिता
दंडव्याजभृतस्त्रयः सुपुरुषा आमंत्रयंति ध्रुवं ।

प्रेंखोलद्ध्वजपाणिभी रणरणद्धंटानिनादेन तत्
  प्रासादत्रितयं त्रिलोकतिलकं वंदे मुदाहं त्रिधा ॥ ४
प्रासादत्रितयं नंद्यात् त्रिलोकीतलमंडनं ।
त्रिविधेन त्रिधा शुद्ध्या वंदितं त्रिजगज्जनैः ॥ ५
सौभाग्यभाग्यनिधयो मम विद्यादायकाः कविगजेंद्राः ।
श्रीजयसागरगुरवो विजयंते वाचकगरिष्ठाः ॥ ६
तच्छिष्यो वाचनाचार्यो वर्त्तते सोमकुंजरः ।
प्रशस्तिर्विहिता तेन वाचनीया विचक्षणैः ॥ ७ ॥ श्रीः ॥ श्रीः ॥ श्रीः ॥

लिखिता च पं० भानुप्रभगणिना ॥ सर्वसंख्यायां कवित्वानि ३३ ॥ शुभं भवतु संघस्य ॥ ८ ॥

जिनसेनगणिश्चात्र चैत्यैकार्षीद् बहूद्यमं ।
सूत्रभृच्छिवदेवेन प्रशस्तिरुदकारि च ॥ १

After this is added in a different hand

प्रासादे क्रियमाणेथ बहुविघ्नोपशांतये ।
विज्ञानं रचयामास जिनसेनो महामुनिः ॥ २ ॥ शुभं ।

## (४)

## लक्ष्मीकान्तप्रासादस्य प्रशस्तिः ।

स्वस्ति श्रीगणेशाय नमः । स्वस्तिश्रीजयोऽभ्युदयश्च ॥
ददातु वः स देवेशः शंखभूषणभूषितः ।
निपतंती दिवो येन केन मंदाकिनी धृता ॥ १ ॥
सलिलनिधिसुधाया हृत्सरस्यां वगाढो
  लवणिमजलभाजि स्वेष्टकांताविनोदः ।
विकचकुचसरोजे मंजु गुंजन् षडंघ्रिः
  सजलजलदनीलः पातु वः शार्ङ्गपाणिः ॥ २ ॥
श्रीमज्जेसलमेरुनाम नगरं पृथ्व्याः परं मंडनं
  भोग्यं यादवभूभुजामिव नवं चारु स्वभर्तुर्वयः ।
शूरैर्यादववंशजैरुपचितं स्वाकारशुद्धैर्नृपै-
  र्नानावित्तवणिग्विशां विजयतेऽजेयं परैस्तच्चिरं ॥ ३ ॥
सम्राट् श्रीजैत्रसिंहो यदुकुलजलधिप्रोल्लसत्पार्वणेंदु-
  स्तत्सूनुर्मूलराजो जगति सुविदितो देवराजो नृराजः ।
तद्वंशे यादवेंद्रः समभवदसकौ केहरिस्तत्तनूजः
  श्रीमद्रामाभिरामः समजनि तनयो लक्ष्मणो लक्ष्मणेशः ॥ ४ ॥
लक्ष्मणस्य तनयो विराजते वैरिसिंह इति विश्रुतः सदा ।
तेन देवभवनं प्रतिष्ठितं राज्यवृद्ध्याखिलपापशुद्धये ॥ ५ ॥
वेदांकाब्धींदुवर्षे शिशिरऋतुवरे माघशुक्के च पक्षे
  षष्ठ्यां वै शुक्रवारेश्विनिभ उदग्यान इंदौ तु मेषे ।

भूपः श्रीवैरिसिंहः सुरवरभवनेकारयत्सुप्रतिष्ठा-
मृत्विग्भिर्वेदविद्भिर्नृपतिभिरनिशं वंदितांघ्र्यब्जयुग्मः ॥ ६ ॥

संवत् श्रीविक्रमार्कसमयातीतसंवत् १४९४ वर्षे भाटिके संवत् ८१२ प्रवर्तमाने महामांगल्य-माघशुदि ६ शुक्रवारे अश्विनीनक्षत्रे शुक्लाख्ययोगे तीतलाख्यकरणे मेषस्थे चंद्रे महाराजाधिराज-श्रीयादववंशीयराउलश्रीजेतसिंहराउलश्रीमूलराजराजराउलश्रीदेवराजराउलश्रीकेहरिराउलश्रीलक्ष्मणत-त्पद(ट्ट)पूर्वाचलप्रचंडमार्तंडायमानमहाराजाधिराजश्रीवैरिसिंहेन सर्वकामसमृद्ध्यर्थं श्रीलक्ष्मीकांतप्रीत्यर्थं पंचायतप्रासादः प्रतिष्ठितः ।

प्रासादसत्कूपसरःप्रतिष्ठा विधापिता येन यदूत्तमेन ।
प्रजाः सुखेन प्रतिपाल्यते यः षड्दर्शनाधारपरः स जीयात् ॥ १ ॥
पौर्वैरमीभिः खलु भूमिपालैः व्य(र्व्य)स्मारि यद्यद्भुवि ।
मत्वैव तत्कार्यसमर्थमेनं श्रीवैरिसिंहं व्यदधाद्विधाता ॥ २ ॥

शुभं भवतु । श्री············पंचालीसाल्हासुतशिवदासभाटीदेपासुतभोजा······

# ( ५ )

## अष्टापद्प्रासादस्य प्रशस्तिः ।

॥ स्वस्ति ॥ श्रीपार्श्वनाथस्य जिनेश्वरस्य प्रसादतः संतु समीहितानि ।
श्रीशांतिनाथस्य पदप्रसादाद्विघ्नानि नश्यंतु भवेच्च शांतिः ॥ १ ॥

संवत् १५८३ वर्षे मागसिरसुदि ११ दिने श्रीजेसलमेरुमहादुर्गे राउलश्रीचाचिगदेवपट्टे राउल-श्रीदेवकर्णपट्टे महाराजाधिराजराउलश्रीजयतसिंहविजयिराज्ये कुमरश्रीलूणकर्णयुवराज्ये श्रीऊकेशवंशे श्रीसंखवालगोत्रे सं० आंबापुत्र सं. कोचर हूया । जिणइ कोरंटइ नगरि अनइ संखवाली-गामइ उत्तंगतोरण जैनप्रासाद कराव्या । आबू जीराउलइ श्रीसंघसुं यात्रा कीधी । जिणइ आपणइ उदारगुणइ आपणा घरनउ सर्व धन लोकनं देई कोरंटइ कर्णनामिना लीधी । सं. कोचरपुत्र सं. मूला तत्पुत्र सं. रउला सं. हीरा। सं. रउलाभार्या सं. माणिकदे पुत्र सं. आपमल्ल सं. देपमल्ल । सं. आपमल्लभार्या कमलादे पुत्र सं. पेथा सं. भीमा सं. जेटा । सं. पेथाभार्या पूनादे पुत्र सं. आसराज सं. मूंधराज पुत्रिका स्याणी । सं. आसराजइ श्रीशत्रुंजयमहातीर्थि श्रीसंघसहित यात्रा करी आपणा वित्त सफल कीधा । सं. आसराजभार्या चो. सं. पांचापुत्री गेली जिणइ श्रीशत्रुंजय गिरनार आबूतीर्थे यात्रा कीधी । श्रीशत्रुंजयादितीर्थावतारपाटा करावी । सतोरण सपरिकर श्रीनेमिनाथनां बिंब भरावी श्रीसंभवनाथनइ देहरइ मंडाव्या । समस्तकल्याणकादिक तपनी पाटी सैलमय करावी । सं. आसराजपुत्र सं. षेता सं. पाता । सं. षेतइ सं० १५११ श्रीशत्रुंजयगिर-नारतीर्थइ श्रीसंघसहित यात्रा कीधी । इम वरसइ २ तीर्थयात्रा करता सं० १५२४ तेरमी यात्रा करी श्रीशत्रुंजय ऊपरि छ अरी पालता श्रीआदिनाथप्रमुखतीर्थंकरनी पूजा करता छट्ठतप करी बि लाष नवकार गुणी चतुर्विधसंघनी भक्ति करी आपणा वित्त सफल कीधा ॥ वली चोपडा सं. पांचापुत्र सं. सिवराज सं. महिराज सं. लोला संघवीलाषण पुत्रिका सं. गेली । सं. लाषणपुत्र सं. सिषरा सं. समरा सं. माला सं. महणा सं. सहणा सं. कुंरा प्रमुखपरिवारसहित चो. सं. लाषण संखवाल सं. आसराजपुत्र सं. षेता ए बिहु मिली श्रीजेसलमेरुनगरि गढ ऊपरि त्रिभूमिक श्रीअष्टापदमहातीर्थप्रासाद कराव्या । सं. १५३६ वर्षे फागुणसुदि ३ दिने राउल-श्रीदेवकर्णराज्ये समस्तदेसना संघ मेलवी श्रीजिनचंद्रसूरिश्रीजिनसमुद्रसूरिकन्हलि प्रतिष्टा करावी श्रीकुंथुनाथ श्रीशांतिनाथ मूलनायक थपाव्या । चउवीस तीर्थंकरनी अनेक प्रतिमा भरावी ।

सं. षेतइ समस्त मारूयाडिमाहि रूपानाणासहित समकितलाइ लाह्या । सोनाने आषरे श्रीकल्पसिद्धांतनां पोथां लिखाव्यां । श्रीजिनसमुद्रसूरिकन्हां श्रीशांतिसागरसूरि आचार्यनी पद-स्थापना करावी । श्रीअष्टापदतीर्थइ बिहु भूमिकाए जगति करावी बिंब मंडाव्या । सं. षेताभार्या सं. सरसति पुत्र सं. वीदा सं. नोडा पुत्रिका धानू वीजू । सं. नोडाभार्या सं. नायकदे सं. पूनी । सं. वीदाभार्या सं. अमरादे सं. विमलादे सं. विमलादेपुत्र सं. सहसमल्ल सं. करणा सं. धरणा । पुत्रिका हरषू सलषू हस्तू । सं. सं. सहसमल्लभार्या सं. कुंरीपुत्र भोला सं. सवीरीपुत्र डाहा- सं. करणा सं. कनकादेपुत्र षीदा । पुत्रिका लाला सं. धरणाभार्या धरणिगदे पुत्रिका वाल्ही । इत्यादि परिवारसहित सं. वीदइ श्रीशत्रुंजय गिरनार आबूतीर्थे यात्रा कीधी । समकितमोदक घृत षांड साकरनी लाहिणि कीधी । श्रीजिनहंससूरिगच्छनायकनी वर्षग्रंथिमहोछव करी अल्ली घर २ प्रतइ लाही । पांचमिनां ऊजमणा कीधा । पांच सोनइया प्रमुख अनेक वस्तु ऊजमणइ मांडी । श्रीकल्पसिद्धांतपुस्तक घणीवार वचाव्यां । पांचवार लाष नवकार गुणी चारसो जोडी अल्लीनी लाहिणि कीधी । सं. सहसमल्ल श्रीशत्रुंजयतीर्थइ यात्रा करी जूनइगढि राणपुर वीरमगाम पाटण पारकरि षांड अल्ली लाहणि करी घरे आव्या पछइ सं. वीदइ घर २ प्रतइ दस २ सेर घृत लाह्या । अष्टापदप्रासादइ बिहु भूमिकाए जगतिना बारणानी चउकी करावी । पउडसाग जाली १४ मुहणा देहरा ऊपरि कांगुरा अष्टापदइ कराव्या । काउसग्गीया श्रीपार्श्वनाथनां बि कराव्या । बिहुं हाथिए सं. षेता सं. सरसतिनी मूर्त्ति करावी । सं. १५८१ वर्षे मागसिरवदि १० रविवारे महाराजाधिराज राउलश्रीजयतसिंह तथा कुमरश्रीलूणकर्ण्णवचनात् श्रीपार्श्वनाथ अष्टापदविचालइ सं. वीदइ सेरी छावी । कुतना वड बंधाव्या । बारणा पउडसाण कराव्या । वेईबंध छज्जा-वलि करावी । कोहर एक कराव्या । गाइसहस १ जोडी घृत अन्न गुल रुन घणी वार षद्दरसण ब्राह्मणादिकनां दीधा । श्रीजेसलमेरुगढनी दक्षिणदिसइ घाघरा बंधाव्या । देहरानी सेरीनइ घाघरा बे कु. श्रीजयतसिंहराउलनइ आदेसइ सं. वीदइ कराव्या । गउष करावी दस अवतार सहित लषमीनारायणनी मूर्त्ति गउषइ मंडावी ॥

> जिनो दशावतारोप्यवताररहितस्य तु ।
> श्रीषोडशजिनेंद्रस्य समियाय परीक्षये ॥ १
> शुद्धसम्यक्त्वधारित्वाद्भावितीर्थंकरत्वतः ।
> सलक्ष्मीकः समायातो जिनो दातुमिव श्रियं ॥ २

मंडपादिकनीकमठा सं. सहसमल्ल सं. करणा सं. धरणा कराविस्यइ ॥ इत्येषा प्रशस्तिः श्रीबृहत्खरतरगच्छे श्रीजिनहंससूरिपट्टालंकारश्रीजिनमाणिक्यसूरिविजयिराज्ये श्रीदेवतिलकोपाध्यायेन लिखिता चिरं नंदतु ॥

सूत्रधारमनसुखपुत्रसूत्रधारषेताकेन मुदकारि प्रशस्तिरेषा कोरीतं ॥ ० ॥ श्रीर्भवतु ॥

## ( ६ )

## शतदलकमलान्तःस्थो लेखः ।

> श्रीनिवासं सुरश्रेणिसेव्यक्रमं
> वामकामाग्निसंतापनीरोपमं ।
> माधवेशादिदेवाधिकोपक्रमं
> तत्त्वसंज्ञानविज्ञानभव्याश्रमं ॥ १ ॥

नव्यनीरागताकेलिकर्म्मक्षमं
यं(य)स्य भव्यैर्भजे नाम संपद्रमं ।
नीरसं पापहं स्मर्यते सत्तमं
तिग्ममोहार्त्तिविध्वंसतापाभ्रमं ॥ २ ॥

लब्धप्रमोदजनकादरसा(?)स्वधामं
तापाधिकप्रमदसागरमस्तकामं ।
घंटारवप्रकटिताद्भुतकीर्त्तिरामं
नक्षत्रराजिरजनाय लता(नीशप्रभा)भिरामं ॥ ३ ॥

घंटापथप्रथितकीर्त्तिरमोपयामं
नागाधिपः परमभक्तिवशात् सवामं ।
गंभीरधीरसमतामयमातंगमं
मं(म)त्त्यानतं नमत तं जिनपं निकामं ॥ ४ ॥

संसारकांतारमपास्य नाम
कल्याणमालास्पदमस्तशामं ।
लाभाय वश्राम तवाविरामं
लोभाभिभूतः श्रितरागधूमः ॥ ५ ॥

कर्म्मणां राशिरस्तोकलोकोद्गमः
संसृतेः कारणं मे जिनेशावमं ।
पूर्णपुण्याढ्य दुःखं विधत्तेऽतिमं
पर्ण(न) क्षमस्त्वां विना कोऽपि तं दुर्गमं ॥ ६ ॥

कार्म्मणं निर्वृतेर्हेतुमन्योऽसमः
यं(य)क्षराड्पूज्य तेनोच्यते निर्मम ।
श्रीपते तं जहि द्राग् विधायोद्यमं
दानशौंडाद्य मे देहि शं...प्रगं ॥ ७ ॥

यस्य कृपाजलधेर्विश्रामं
कंठगताशुसुभटसंग्रामं ।
भयजनकव्याया······मं
जेतारं जगतः श्रितधामं ॥ ८ ॥

कक्षीकृतवसुभृत······पुर्ग्रामं
लापोचारमहा············ ।
केशोच्चयमिह नयने क्षमं
लिंगति कमला कुरु मे क्षेमं ॥ ९ ॥

कलयति जगतः······प्रेमं
लंभयति सौख्यपटलमुद्दामं ।
कालं हंति च गतपरिणामं
महे तं महियसो·········मं ॥ १० ॥

रसनयेप्सितदानसुरद्रुमं
हितमहा······द्रिजलोत्तमं ।

तं सदापुण्यरमोदयसंगमं
समरसामृतसुंदरसंयमं ॥ ११ ॥
हिनस्ति सद्ध्यानावस्थितस्य मध्यमं
तं तीर्थनाथं समरप्लवंगमं ।
सुरासुराधीशम.............. यमं
ः नाथसंपूजितपदयुगसुमं ॥ १२ ॥
संसारमालाकुलचित्तमादिमं
साक्षार्थसंवेदनशून्यमश्रमं ।
रम्यासतावस्थितपूर्णचिद्घनं
सर्पांकितः शोषितपापकर्दमः ॥ १३ ॥
रत्नत्रयालंकृतनिलहेम
सीमाद्रिसारोपमसत्त्वसोम ।
शोभामयो ज्ञानमयं विमामं
षड्वर्ग मां देव विधेह्यकामं ॥ १४ ॥
भावविभासकनष्टविलोमं
स्कंदितस्कंदलतं प्रणमाम ।
रंगपतंगनिवारण सुभीमं
कंबुदानं (गलं) जिनप...हृत तं भौमं ॥ १५ ॥
मंत्रेश्वरः पार्श्वपतिपरिश्रमं
लालाश्रितस्यापनया मनोरमं ।
कर्मोत्थितं मे जिन साधु नगमं
रंभाविलासालसनेत्रनिर्गमं ॥ १६ ॥
समितिमारशरीरमविभ्रमं
हरिनतोत्तमभूरिगमागमं ।
श्रयत तं जितमानभुजंगमं
फलसमृद्धिविपीनपराक्रमं ॥ १७ ॥
पार्श्वयशः सृजति शं जिनसार्व्वभौमः
तारस्वरेण विबुधैः श्रित......होम ।
शोकारिमारिविरहय...वातस(दा?)भं
भव्यैः स्तुतं निहतदुर्मतदंडषव(?)मं ॥ १८ ॥
मायांबुजध्वंसविधौ महद्भिमं
न वाजयत्याशु मनस्तुरंगमं ।
मंत्रोपमं तं जिन राम(ग)पंचमं
स्तवेन युक्तं गुणरत्नकुट्टिमं ॥ १९ ॥
कलिशैलोरु व्यधाम(?)
माहात्म्यं हृदयंगमं ।
लब्धश्रितवसुत्राम
यंतिवर्गस्तुतं नुमः ॥ २० ॥
लोकोत्पत्तिविनाशसंस्थितिविदां मुख्यं जिनं वै स्तुमः
द्रव्यारक्तसमाधरं नमत भो पूजां वरां पार्श्विमं ।

परपक्षस्य तव स्तवं त्वन्निमित्त करींद्रमे(?)
तत्तद्भावमयं वस्र...तस्मै...काभ्यस्तवंदे ॥ २१ ॥
नयनाननसद्रोमं
संततिं तव जंगम ।
स्थावराशु(सु)मतां स्याम(?)
नयते शमकृत्रिमं ॥ २२ ॥
दासानुदासस्य मम
नवानंदविहंगमं ।
मायति प्राप्य सुमं
नंपा(नया)क्षत्तां महाद्रुमं ॥ २३ ॥
क्षमाबोहित्थनिर्यामं
मानवार्च्यं महाक्षमं ।
गुणिपूज्यं प्रीणयाम
रुं(रु)चिं स्तौमि नमं नमं ॥ २४ ॥
स्मरंति यं सुंदरयक्षकर्द्दमं
रागात् समादाय महंति कौंकुमं ।
मिथो मिलित्वा मवु(?)जाड्यकुंकुमं
चंद्राननं तं प्रविलोकताद्रमं ॥ २५ ॥

## शतदलकमलबहिःस्थो लेखः ।

इत्थं पार्श्वजिनेश्वरो भुवनदिकुंभ्यंगचंद्रात्मके
वर्षे वाचकरत्नसारकृपया राकादिने कार्त्तिके ।
मासे लोद्रपुरस्थितः शतदलोपेतेन पद्मेन सन्
नूतोयं सहजादिकीर्त्तिगणिना कल्याणमालाप्रदः ॥ २५ ॥

ऐं नमः ॥ श्रीसाहिर्गुणयोगतो युगवरेत्यट्टं(?हं) पदं दत्तवान्
येभ्यः श्रीजिनचंद्रसूरय इलाविख्यातसत्कीर्त्तयः ।
तत्पट्टेमिततेजसो युगवराः श्रीजैनसिंहाभिधा-
स्तत्पट्टांबुजभास्करा गणधराः श्रीजैनराजाः श्रुताः ॥ १
तैर्भाग्योदयसुंदरैरिषुसरस्वत्षोडशाब्दे १६७५ सित-
द्वादश्यां सहसः प्रतिष्ठितमिदं चैत्यं स्वहस्तश्रिया ।
यस्य प्रौढतरप्रतापतरणेः श्रीपार्श्वनाथेशितुः
सोयं पुण्यभरां तनोतु विपुलां लक्ष्मीं जिनः सर्वदा ॥ २
पूर्वं श्रीसगरो नृपोभवदलंकारोन्वये यादवे
पुत्रौ श्रीधरराजपूर्वकधरौ तस्याथ ताभ्यां क्षितौ ।
श्रीमल्लोद्रपुरे जिनेशभवनं सत्कारितं षीमसी
तत्पुत्रस्तदनुक्रमेण सुकृती जातः सुतः पूनसी ॥ ३
तत्पुत्रो वरधर्म्मकर्म्मणि रतः ख्यातोऽखिलैस्सद्गुणैः
श्रीमल्लस्तनयोथ तस्य सुकृती श्रीथाहरूनामकः ।
श्रीशत्रुंजयतीर्थसंघरचनादीन्युत्तमानि ध्रुवं
यः कार्याण्यकरोत्तथा लसरफीं पूर्णां प्रतिष्ठाक्षणे ॥ ४

प्रादात्सर्वजनस्य जैनसमयं चालेखयत् पुस्तकं
सर्वं पुण्यभरेण पावनमलं जन्म स्वकीयं व्यधात् ।
तेनायं भवनस्य यस्य जिनपस्योद्धारकः कारितः
सार्द्धं सद्धरराजमेघतनयाभ्यां पार्श्वनाथो मुदे ॥ ५ ॥ श्रीः ॥*

( ७ )

श्रीलोध्रवानगरे श्रीबृहत्खरतराधीशैः सं. १६७५ मार्गशीर्षसुदि १२ तिथौ गुरौ भांडशालिक सा० श्रीमल(ल्ल)भा० चांपलदेपुत्ररत्नथाहरूकेण भार्याकनकादेपुत्रहरराजमेघराजादियुतेन श्रीचिंतामणिपार्श्वनाथबिंबं का०......युगप्रधानश्रीजिनसिंहसूरिपट्टप्रभाकरभ० श्रीजिनराजसूरिभिः प्रतिष्ठितं ॥*

( ८ )

संवत् १६७५ मार्गशीर्षसुदि १२ गुरौ श्रीअजितनाथबिंबं का० भ० थाहरूभार्याकनकादेपुत्ररत्नहरराजेन प्र० युगप्रधानश्रीजिनसिंहपट्टप्रभाकरश्रीजिनराजसूरिभिः ॥*

( ९ )

सं. १६९३ मार्गसीरसुदि ९ भणसालीसंघवीथाहरूकेण श्रीपार्श्वनाथदेवगृहं स्ववृद्धभार्याकनकादेवीपुण्यार्थमकारि प्र० श्रीजिनराजसूरिभिः ॥*

( १० )

सं. १६९३ मार्गशीर्षसुदि ९ भणसालीसंघवीथाहरूकेण श्रीआदिनाथदेवगृहं स्वलघुभार्यासुहागदेवीपुण्यार्थमकारि प्रतिष्ठितं श्रीजिनराजसूरिभिः ॥*

( ११ )

सं. १६९३ मार्गशीर्षसुदि ९ भणसाली संघवीथाहरूकेण श्रीअजितदेवगृहं पुत्ररत्नहरराजपुण्यार्थमकारि प्र० श्रीजिनराजसूरिभिः ॥*

( १२ )

सं. १६९३ मार्गशीर्षशुदि ९ संघवीथाहरुकेण श्रीसंभवनाथदेवगृहं पुत्रमेघराजपौत्रभोजराज सुखम(?)स्य पुण्यार्थं प्र० श्रीजिनराजसूरिभिः ॥*

( १३ )

श्रीमहावीरतीर्थे श्रीसुधर्मस्वामिसंताने श्रीखरतरगच्छे श्रीउद्योतनसूरिश्रीवर्धमानसूरिश्रीजिनेश्वरसूरिश्रीजिनचंद्रसूरिश्रीअभयदेवसूरिश्रीजिनवल्लभसूरिश्रीजिनदत्तसूरिश्रीजिनचंद्रसूरिश्रीजिनपतिसूरिश्रीजिनेश्वरसूरिश्रीजिनप्रबोधसूरिश्रीजिनचंद्रसूरिश्रीजिनकुशलसूरिश्रीजिनपद्मसूरिश्रीजिनलब्धिसूरिश्रीजिनचंद्रसूरिश्रीजिनोदयसूरिश्रीजिनराजसूरिसुगुरुपट्टालंकारश्रीजिनभद्रसूरिविजयराज्ये श्रीजेसलमेरुदुर्गे श्रीचाचिगदेवे पृथिवीं शासति सति संवत् १५०५ वर्षे श्रीशंखवालगोत्रे सा० पेथापुत्रसा० आसराजभार्यया सा० षेता सा० पाताजनन्या गेलीश्राविकया वाचनाचार्यरत्नमूर्तिगणिसदुपदेशेन वा० जिनसेनगणिरम्योद्यमेन श्रीतपःपट्टिका कारिता । लिखिता च पं० मेरुसुंदरगणिना शुभमस्तु । सद्भिर्वाच्यमाना चिरं नंद्यात् । श्रीकीर्तिरत्नसूरि......

---

* एतच्चिह्नाङ्किताः सप्तापि लेखा लोद्रपुरमन्दिरसत्काः ।

## ( १४ )

संवत् १५१८ वर्षे वैशाषसुदि १० दिने राउलश्रीवयरसिंहपुत्रराउलश्रीचाचिगदेवविजयराज्ये चोपडागोत्रे सा० सिवराजमहिराजलोलाबांधवसं० लाषणसुश्रावकेण सं० थिरा सं० सहसा सं० सहजपाल सा० सिषरा सा० समरामालासहणाकुंरापौत्रश्रीकरणउदयकरणप्रमुखपरिवारसहितेन श्रीसित्तुजयगिरनारावतारपट्टिका समराभार्यासहजदेश्राविकापुण्यार्थं कारिता प्रतिष्ठिता खरतरगच्छे श्रीजिनभद्रसूरिपट्टालंकारश्रीजिनचंद्रसूरिभिः । वाचनाचार्यकमलराजगणयः प्रत्यहं प्रणमंति ॥

## ( १५ )

संवत् १५१८ वर्षे वैशाषसुदि १० दिने गणधरगोत्रे सा० नाथूपुत्र सं. पासडभार्याप्रेमलदे पुत्रसं. जीवंदसुश्रावकेण पुत्रसधारणधीराप्रमुखपरिवारसहितेन निजमात्राप्रेमलदेपुण्यार्थं नंदीश्वरपट्टिका कारिता प्रतिष्ठिता श्रीखरतरगच्छे श्रीजिनभद्रसूरिपट्टे श्रीजिनचंद्रसूरिभिः । वा० कमलराजगणिवराणां शिष्य उत्तमलाभगणिः प्रणमति ॥

## ( १६ )

संवत् १५१८ वर्षे वैशाषसुदि १० दिने संखवालगोत्रे सा० पेथापुत्र सा० आसराजश्रावकेण पुत्र षेता पाता पौत्र दीदा हेमराज प्रमुखपरिवारसहितेन निजभार्यागेलीपुण्यार्थं वा० कमलराजगणीश्वराणामुपदेशेन श्रीशत्रुंजयगिरनारावतारपट्टिका कारिता प्रतिष्ठिता श्रीखरतरगच्छे श्रीजिनभद्रसूरिपट्टालंकारश्रीजिनचंद्रसूरिभिः । उत्तमलाभगणिः प्रणमति सादरं ॥

## ( १७ )

राउलश्रीवयरसिंहपुत्रराउलश्रीचाचिगदेवविजयिराज्ये विक्रमात् सं० १५१८ वर्षे वैशाषसुदि १० दिने······समरापुत्र सं० सजाकेन सं० सद्धारुहदे सोटा (?) राणा जावड भावड सं० सोही रांभू वीजूप्रमुखपुत्रपुत्रिकादिपरिवारसहितेन श्रीमंडोवरनगरवास्तव्येन भार्यासूहवदेपुण्यार्थं श्रीनंदीश्वरपट्टिका कारिता खरतरगच्छे श्रीजिनचंद्रसूरिभिः ॥

## ( १८ )

संवत् १५१८ वर्षे ज्येष्टवदि ४ दिने श्रीचाचिगदेवविजयराज्ये गणधरगोत्रे जगसीपुत्रनाथू तत्पुत्रसं० सच्चराजभार्या सं० धविणि सिंगारदे पुत्रसं० धरमा सं० जिणदत्त देवसी भीमसी पौत्र लाषा रिणमल्ल देव अमरा भउणा सूरा सामलादिपरिवारयुतेन श्रीशत्रुंजयगिरनारावतारपट्टिका कारिता प्रतिष्ठिता श्रीखरतरगच्छे श्रीजिनभद्रसूरिपट्टालंकारश्रीजिनचंद्रसूरिभिः । अरवात्रीजदिने लिखितं ॥

## ( १९ )

श्रीपार्श्वनाथाय नमः ॥ संवत् १६ चैत्रादि ७३ वर्षे जेठसुदि १५ सोमवारे मूलनक्षत्रे । श्रीजेसलमेरुनगरे राउलश्रीकल्याणजीविजयराज्ये । श्रीखरतरवेगडगच्छे । भ० श्रीजिनेश्वरसूरिविजयराज्ये । छाजहडगोत्रे सं० कुलधर······वेगडापुत्र मं.······सुर······देवद······पुत्र मंत्री गुणदत्त तत्पुत्र मं.······सरजन पुत्रमं. जी······क······तत्पुत्रमं. चांपसी मं. उदयसिंह मं. ठाकरसी······ चांपसीपुत्र······कर्ण उदयसिंहपुत्र······उपारार······पदं कारितं चिरं जयतु । श्रीसंघस्य······ सूत्रधारपाचागेन······

## ( २० )

श्रीखरतरवेगडगच्छे भट्टारकश्रीजिनेश्वरसूरिसंताने भट्टारकश्रीजिनगुणप्रभुसूरिपट्टे भ० श्रीजिनेशरसूरि तत्पट्टे भट्टारकश्री ५ जिनचंद्रसूरिपट्टे भट्टारकश्रीजिनसमुद्रसूरि तत्पट्टालंकारहारसारभट्टारक श्री १०७ श्रीजिनसुंदरसूरि तत्पट्टे युगप्रधानभट्टारकश्री ७ श्रीजिनउदयसूरिविजयराज्ये प्राज्यसम्राज्ये ॥ श्रीरस्तुः ॥ श्रीः

## ( २१ )

॥ ॐ नमः श्रीपार्श्वनाथाय नमः ॥ श्रीवागडेशाय नमः ॥ संवत् १७८१ वर्षे शाके १६४६ प्रवर्त्तमाने महामांगल्यप्रदे मासोत्तमचैत्रमासे लीलविलासे शुक्रपक्षे त्रयोदश्यां गुरुवारे उत्तराफाल्गुनीनक्षत्रे वृद्धिनामयोगे एवं शुभदिने श्रीजेसलमेरुगढमहादुर्गे राउलश्री ५ अषैसिंघजी विजैराज्ये ॥

## ( २२ )

## सुपार्श्वजिनालयस्य प्रशस्तिः ।

ॐ नमः श्रीसुपार्श्वनाथाय ॥

श्रीनाभेयमनुं वृषांकिततनुं पापारिनाशे धनं ।
श्रीमच्छांतिजिनं तमोभरदिनं लोकत्रयीस्वामिनं ॥
सर्वानंदकरं महाभयहरं श्रीनेमिनाथं परं ।
वंदे पार्श्वप्रभुं सुरासुरविभुं श्रीवर्द्धमानं सु(शु)भं ॥ १ ॥
भुवनभवनपापध्वांतदीपायमानं
परमतप्रतिघानप्रत्यनीकायमानं ।
धृतिकुवलयनेत्रावश्यमंत्रायमानं
भजत विदितकीर्तिं श्रीसुपार्श्वं विमानं ॥ २ ॥
अर्हत ईशाः सकलाश्च सिद्धा आचार्यवर्या अपि पाठकेंद्राः ।
मुनीश्वराः सर्वसमाहितानि कुर्वंतु रत्नत्रययुक्तिभाजः ॥ ३ ॥
गजारूढा पीना द्विगुणभुजयुग्मेन सहिता ।
लसद्विद्युत्कान्तिर्नरसुरभरैः पादमहिता
ददाना भक्तेभ्यः प्रतिदिवसमुच्चैरमरतां
शुभं शांता संघस्य दिशतु सदानंदजननी ॥ ४ ॥
सत्सर्वर्द्धिसमन्विते शुभयुते दुष्टैर्जनैर्वच्युते
धर्माधिष्ठितचित्तलोकलसिते विद्याविनीतोच्चिते ।
श्रीमज्जेशलमेरुनाम्नि नगरे चैत्यं सुजातं कथं
तं वक्ष्ये ह्यधुना सुपार्श्वजिनपस्याहं तपागच्छके ॥ ५ ॥
गांभीर्यौदार्यधैर्यादिगुणसमुदयैः सद्गुरोर्धर्मचर्या
श्रुत्वा युक्तस्य वाणीं दुरितशतदलारामकामे हिमानीं ।
कंदर्पस्तेपि(?) यस्मां नवजिनभवनोत्पादनेनेत्यजस्रं
मर्त्यः प्राप्नोति नित्यं प्रतिभवकृतं यत्पापमाहत्य मुक्तिं ॥ ६ ॥
ब्रह्मेंद्रेंद्वीशदेवासुरनरनिकरैः सेवितांह्रिद्वयस्य ।
भक्तानां मंगलाय प्रमथितदनुजेंद्रस्य मायायुतस्य ।

श्रीमद्विष्णोः पदाब्जामलकलनजलैः क्षालितस्वांतकस्य ।
सन्न्यायाध्वप्रकर्त्तुर्जगति च विदितस्यारिवर्गांतकस्य ॥ ७ ॥

निश्शेषोर्व्वीशमान्यस्य जनसुखकृतो मूलराजाभिधान-
राज्ञः संप्राप्य चाज्ञां द्रुतहृतसमघः कारयामास संघः ।
सत्प्रासादं प्रसादं सुरभवनसमं नष्टदुष्कृद्विषादं
युक्तं पापाद्विमुक्तं गतकुमतमतं जालिकातोरणाद्यैः ॥ ८ ॥

शुभं श्रीमच्छ्रीविक्रमस्य क्षितिपतिशुभात् प्राज्यसाम्राज्यराज्या-
द्वर्षव्राते सुजाते वहनरसगजोर्व्वीमिते सौम्यमार्गे
सूर्ये मासोत्तमाश्वियुजि सितदले कर्मवाच्यां दशम्यां ।
रम्यां सद्योगगम्यां वसुपतिभयुजि सौम्यवारान्वितायां ॥ ९ ॥

..............जातं हि पूर्णं गतवत्सु तूर्णं
चैत्यं हि पंचस्वपि हायनेषु
जाता प्रतिष्ठा बलिनोंतरायात्
ततोंतरायस्य गता निवृत्तिः ॥ १० ॥

राजेंद्रक्षयसिंहनामनृपतेः पट्टोदयाद्रौ रवेः
श्रीयद्वन्वयक्षीरनीरधिविधोः सर्वर्द्धिविद्योदधेः ।
श्रीनाथस्य पदांबुजालिसदृशस्यामर्दितासन्म...
श्चंडाखंडकुमित्रपद्मिदलने दुर्दतपंचास्यिनः ॥ ११ ॥

सत्प्रासादतडागयागप्रभृतिश्रेयस्कृतेर्वर्द्धिता-
मंदानंदकृदुत्तमानघपयःपुण्यीकृतप्राणिनः ।
जाग्रत्प्रोत्कटयत्प्रतापतपना नष्टारिजांधकृतौ
राज्ये राउलमूलनामनृपतेर्वै विद्यमाने चिरं ॥ १२ ॥

सर्वाकृत्यनिवर्तिते शुभमते सद्यौवराज्यांकिते
गोषड्दर्शनपालके गज...वाह्ये कुमारे स्थिते ।
श्रीनारायणभक्तितत्परमतिर्माहेश्वरीयेन्वये
प्रावोभूत्करुणामृतार्द्रहृदयः ग्रामप्रतिष्ठाश्रयः ॥ १३ ॥

आह्येनेव सुरूपसिंह इति तत्सूना अमात्योत्तमे
स्वज्ञातौ तिलकोत्तमे सुहृदयानंदप्रकंदोपमे ।
सर्वक्षोणिमलब्धसत्कृतिसमे सत्पुण्यपुष्पद्रुमे
नाम्ना सालिमसिंहके मतवरे विख्यातपृथ्वीतले ॥ १४ ॥

वर्षे हर्षजनप्रदे नवरसाष्टेंदौ मिते संमते
श्रीमद्विक्रमभूपतेः सुललितस्यादभ्रराज्याद्भुतात् ।
ग्रीष्मर्त्तौ वृषराशिगे ग्रहपतौ सौम्यायने भास्करे
सत्सद्राशिनवांशगेषु सकलेषु व्योमगेषु क्रमात् ॥ १५ ॥

राधे मासि समन्विते सुविशदे पक्षे बलक्षे सखे
श्रीमन्नाभिसुतस्य पारणदिने शुद्धे तृतीयातिथौ ।
वारे चंद्रसुते शुभर्क्षसहिते सद्योगवेलायुते
दिग्वामा मृदुमंजुलाख्यविशदे जाते...निजे ॥ १६ ॥

सव्रीडीकृतनाकिनागवनिताव्रातामिरत्यद्भुते
गीतिसप्तस्वरान्विते वग(?)दिने सीमंतिनीभिः शुभे ।
काल्याणीयमहोत्सवे बहुकृते जाते महाडंबरे
वादित्रध्वनिपूरिते जयरवे वंदीजनोच्चारिते ॥ १७ ॥
सद्वंशेषु तपागणस्य निखिलेपूत्पत्तिभाजां स्व......
वृद्धाचार्यमतानुगतमुहृदां पुण्यात्मनामाग्रहात् ।
श्राद्धानां सुखदा मया नगजयेनेष्टा प्रतिष्टा मुदे
चैत्यस्य ध्वजदंडयोश्च कलस(श)स्याकारि सु(शु)भा हिता ॥ १८ ॥

अष्टभिः कुलकं

श्रीमत्तपागणसरोजविकाशहंसाः प्राभूवनापेंशुचिमानसराजहंसाः ।
सिद्धांतसिंधुमथनेकनिबद्धकक्षाः सूरीशहीरविजया हतदुष्टमक्षाः ॥ १९ ॥
दिल्लधामकब्बरसमस्तकुसार्वभौमे-
नासेव्यमानचरणाः करुणार्द्रचित्ताः ।
यद्बोधनाज्जगति त्यक्तमृताकरेण
व्यादत्तराज्यनवचिह्नत्रिदिगूपुरेण ॥ २० ॥ युग्मं
तत्पश्चात्संव्यतीते कतिपयसुसमे श्रीजिनेंद्राख्यसूरिः
कालेस्मिन् सन्निकर्षे विजितमहदनेकाभिमानिव्रृंदः ।
श्रेष्ठानंतक्षितीशाः सदननरभृतां माननीयो मुनींद्रो
जैनं चर्कर्द्धि राज्यं सुकृतयुतजनानंदजं पुण्ययुक्तं ॥ २१ ॥
शांतो दांतो धीमान् गीतार्थो मानवर्जितः सुचेताः ।
लोके हि लब्धसुयशा दगूछ्तमहागाधजलधितटः ॥ २२ ॥
श्रीहीरविजयसूरेः शाखायां श्रीगुलालविजयोस्ति ।
पुरवरजेशलमेरोस्तच्छिष्यौ द्वौ समायातौ ॥ २३ ॥
दीपविजयनगविजयौ संघस्य तपागणस्य विज्ञप्तेः ।
ताभ्यामिमाः प्रतिष्टाश्चैत्यध्वजदंडकलशानां ॥ २४ ॥
सुपार्श्वपार्श्वभगवतो ह्यात्महितार्थं कृताऽसकल्याणं ।
बह्वाडंबरयुक्ते कृते मद्दातूर्यसंरावे ॥ २५ ॥
जाते जयजयशब्दे दत्ते वंदीजनेषु सद्दाने ।
मिष्टान्नभोजनेन संतुष्टे सकलभूतगणे ॥ २६ ॥
प्रतिष्टाकृत्ये संपूर्णे सिद्धे सर्वमनोरथे ।
स्वपूर्वजकृताचारविधिज्ञेन महौजसा ॥ २७ ॥
राज्ञा श्रीमूलराजेन गृहमागत्य सन्मुदा ।
वस्त्रादिकृतसत्कारः परोपकृतिकर्मटः ॥ २८ ॥
अवर्णवादी न क्वापि देवगुर्वोश्च पूजकः ।
कृतसंगः सदाचारैः श्रृण्वानो धर्ममन्वहं ॥ २९ ॥
दीनानाथादिहृदुःखे दयार्द्रीकृतमानसः ।
पापभीरुः प्रसिद्धं च देशाचारं समाचरन् ॥ ३० ॥
सर्वमिष्टान्नसंपूर्णं सर्वव्यंजनसंयुतं ।
सर्वसुष्टुरसोपेतं सर्वचित्तसुखप्रदं ॥ ३१ ॥
संघः साधर्मिवात्सल्यं चकारामंदभोजनं ।
ईदृक्छुभेन कार्येण नरः प्राप्नोति निश्चितं ॥ ३२ ॥

इहलोके धनं चायुर्वृद्धिं कीर्त्तिं सुतं सुखं ।
परत्र देववैभव्यं परमां शिवसंपदां ॥ ३३ ॥ षड्भिः कुलकं
भद्रं कुरुष्व परिपालय सर्वविश्वं
विघ्नं हरस्व विपुलां कमलां प्रयच्छ ।
जैवातृकार्कसुरसिद्धजलानि यावत्
स्थैर्यं भजस्व हि सुपार्श्वज(जि)नस्य नित्यं ॥ ३४ ॥
रविचंद्रधरासुतसौम्यगुरूशनसः
शनिराहुशिखिप्रमुखा दिविगाः ।
दिविगास्सततं मम हर्षयुताः
प्रदिशंत्वयि भद्रभरं भवतां ॥ ३५ ॥
क्षेत्राधीश्वरयोगिनीजनगणैः सिद्धैः समाराधितो
ध्यातो देवगणैस्तथा मुनिगणैः कार्यार्थिभिः सर्वदा ।
साम्राज्यार्थकरश्चतुर्भुजधरः खड्गादिशस्त्रैर्वरः
श्रीसंघस्य सुखं ददातु सततं श्रीमाणिभद्रो द्रुतं ॥ ३६ ॥
क्षोण्यां चाखिलदेवता गजमुखाः क्षेत्राधिपा भैरवा
योगिन्यो बटुकाश्च सिद्ध...तरपैशाचकाश्चेटकाः ।
अन्ये भूचरखेचरामृत(ता)पगा वेतालभूतग्रहाः
सानंदाः प्रदिशंतु मंगलवरं संघस्य मे सत्वरं ॥ ३७ ॥
यासां संस्मरणाद् भवंति सकलाः संपद्गणा देहिनां
याः सर्वा दुः(?)खं दिनाश्रिजगतामाधारभूताश्च याः ।
संघस्याप्यखिलस्य दुःखनिवहं कुर्वंतु दूरं सदा
श्रीमच्छासनदेवताः सुनयनाः संपूर्णचंद्राननाः ॥ ३८ ॥
उद्यच्छारदचंद्रास्या सूर्यकांतिसमप्रभा ।
सुखाय मे च संघस्य भूयाच्छ्रीशांतिदेवता ॥ ३९ ॥
यावद्विष्णुपदं ध्रुवस्थितियुतं वर्वर्त्ति तेजोनिधी
यावच्चंद्रदिवाकरौ दिविसरौ यावद्धरित्रीधरौ ।
यावत्संति धरांबुवह्निखमरुद्धाराधरामंडलं
यावत्तावदिदं प्रमोदभरदं चैत्यं चिरं तिष्ठतु ॥ ४० ॥
येषां लग्नं द्रव्यं चैश्चेयं कारिता प्रतिष्ठा ।
तेषां कुलस्य नित्यं वृद्धिर्भूयाद्धनयशसोः ॥ ४१ ॥
सुवृष्टास्संतु जलदाः सुवातास्संतु वायवः ।
बहुधान्यास्तु पृथिवी सुस्थितोस्तु जनोखिलः ॥ ४२ ॥
सर्वेपि संतु सुखिनः सर्वे संतु निरामयाः ।
सर्वे भद्राणि पश्यंतु मा कश्चिद्दुःखभाग् भवेत् ॥ ४३ ॥
नगविजयेन मयैषा कृता प्रतिष्ठाप्रशस्तिरवशेषा ।
भूयाद्वृद्धिरशेषा संघस्य मे शस्यशुभरेखा ॥ ४४ ॥
विनयनतकोटिकोद्दयमरनरभरसेवितांह्रिकमलस्य ।
श्रीमत्संखेश्वरस्य..................... ॥ ४५ ॥

संवत् १८६९ वर्षे वैशाखसुदि ३ दिने
श्रीसंघेन प्रतिष्ठा कारिता ॥

---

# जेसलमेरुदुर्गभाण्डागारीयग्रन्थानां
# वर्णानुपूर्व्या सूची ।



* एतच्चिह्नाङ्किता ग्रन्था यावज्ज्ञातमद्यावधि क्वापि मुद्रणेन न प्रसिद्धाः ।

ग्रन्थनाम. — पृष्ठ.



ग्रन्थनाम. — पृष्ठ.

# सूचिपत्रनिर्दिष्टग्रन्थकर्तृणां तद्ग्रन्थनामोपेता सूची ।

## ( क )

## जैनग्रन्थकाराः ।

ग्रन्थकृन्नाम. — पृष्ठे.

# (ख)

## जैनेतरग्रन्थकाराः ।

# सपरिशिष्टसूचिपत्रनिर्दिष्टविशिष्टनामसूची ।

## [ १ ]

## जैनाचार्यमुनिप्रभृतयः ।

# [२]

## जैनजैनेतरश्रेष्ठिप्रभृतयः।

# [३]

## जैनमुनिवंश-गच्छादि।

## [४]

## गृहस्थवंश-कुल-ज्ञाति-गोत्रादि ।



## [५]

## नृपाः ।

# [६]

## स्थानानि ।

# GAEKWAD'S ORIENTAL SERIES

## WORKS PUBLISHED.

| | | Rs. | A. | P. |
|---|---|---|---|---|
| 1. | Kavyamimansa by Rajasekhara, edited by C. D. Dalal, M.A. and R. A. Shastry ... ... ... ... ... ... | 2 | 0 | 0 |
| 2. | Naranarayanananda by Vastupala, edited by C. D. Dalal, M.A. and R. A. Shastry ... ... ... ... ... ... | 1 | 4 | 0 |
| 3. | Tarkasangraha by Anandajnana or Anandagiri, edited by T. M. Tripathi, B.A. ... ... ... ... ... ... | 2 | 0 | 0 |
| 4. | Parthaparakrama by Pralhadanadeva, edited by C. D. Dalal, M.A. ... ... ... ... ... ... ... ... | 0 | 6 | 0 |
| 5. | Rashtraudhavansa-Mahakavya by Rudrakavi, edited by E. Krishnamacharya, Introduction by C. D. Dalal, M.A.. ... | 1 | 12 | 0 |
| 6. | Linganusasana by Vamana, edited by C. D. Dalal, M.A. ... | 0 | 8 | 0 |
| 7. | Vasantavilasa by Balchandrasuri, edited by C. D. Dalal, M.A... | 1 | 8 | 0 |
| 8. | Rupakashatka by Vatsaraja, edited by C. D. Dalal, M.A. ... | 2 | 4 | 0 |
| 9. | Mohaparajaya by Yasahpala, edited by Muni-Chaturvijayaji. Introduction and appendices by C. D. Dalal, M.A. ... ... | 2 | 0 | 0 |
| 10. | Hammiramadamardana by Jayasinhasuri, edited by C. D. Dalal, M.A. ... ... ... ... ... ... ... | 2 | 0 | 0 |
| 11. | Udayasundarikatha by Soddhala, edited by C. D. Dalal, M.A. and E. Krishnamacharya ... ... ... ... ... | 2 | 4 | 0 |
| 12. | Mahavidyavidambana by Bhatta Vadindra, edited by M. R. Telang .. ... ... ... ... ... ... ... | 2 | 8 | 0 |
| 13. | Prachinagurjarakavyasangraha, collection of old Gujarati poems—12th to 15th centuries, edited by C. D. Dalal, M.A. ... ... | 2 | 4 | 0 |
| 14. | Kumarapalapratibodha by Somaprabhacharya, edited by Muni Jinavijayaji ... ... ... ... ... ... ... ... | 7 | 8 | 0 |
| 15. | Ganakarika by Bhasarvajna, edited by C. D. Dalal, M.A. ... | 1 | 4 | 0 |
| 16. | Sangitamakaranda by Narada, edited by M. R. Telang ... | 2 | 0 | 0 |
| 17. | Kavindracharya List, List of works in the collection of Kavindracharya, a 17th century pandit, edited by R. A. Shastry with a foreword by Dr. Ganganatha Jha. ... ... | 0 | 12 | 0 |
| 18. | Varahagrihyasutra, edited by R. Shama Shastry ... ... | 0 | 10 | 0 |
| 19. | Lekhapaddhati. Specimen Sanskrit letters, etc., 8th to 15th centuries, edited by C. D. Dalal, M.A. (*shortly*) ... ... | | | |
| 20. | Panchamikaha or Bhavisayattakaha by Dhanapala, edited by C. D. Dalal, M.A. and Dr. P. D. Gune, M.A., Phd. (*shortly*). | | | |
| 21. | Descriptive catalogue of manuscripts in the Bhandars at Jaisalmere. Compiled by C. D. Dalal, M.A. and edited by L. B. Gandhi ... ... ... ... ... ... ... | 2 | 8 | 0 |

22, 23. Parasuramakalpasutra, with commentary by Ramesvar, and Paddhati by Emananda. Edited by A. Mahadeva Shastry, B.A. Director, Adyar Library. 2 volumes (*shortly*) ...

24. Tantrarahasya. Edited by Dr. R. Sama Sastry, B.A., Ph. D. Central Government Oriental Library, Mysore (*shortly*) ...

## IN THE PRESS.

1. Samarangana by Bhoja (a work on Indian Architecture) edited by Mahamahopadhyaya T. Ganapati Shastry, Hon. M. R. A. S., Curator for publication of Sanskrit Manuscripts, Trivandrum. ... ... ... ... ... ... ...
2. Tattvasangraha of Santaraksita, with commentary by Kamalasila. Edited by Embar Krishnamacharya, Adhyaksha, Sanskrit Pathasala, Vadtal ... ... ... ... ...
3. Nyayapravesa of Dingnaga, with commentary by Haribhadrasuri and Panjika by Parsvadeva. Edited by A. B. Dhruva, M.A., L.L.B., Principal Central Hindu College, Benares ...

# गायकवाड ओरिएन्टल सिरीझ.

### मुद्रितग्रन्थाः

१. राजशेखरकृतकाव्यमीमांसा ... २– ०–०
२. वस्तुपालकृतनरनारायणानन्दः ... १– ४–०
३. आनन्दज्ञानकृततर्कसङ्ग्रहः ... २– ०–०
४. प्रह्लादनदेवकृतपार्थपराक्रमः ... ०– ६–०
५. रुद्रकविकृतराष्ट्रौढवंशमहाकाव्यम् ... १– १२–०
६. वामनकृतलिङ्गानुशासनम् ... ०– ८–०
७. बालचन्द्रसूरिकृतवसन्तविलासः ... १– ८–०
८. वत्सराजविरचितरूपकषट्कम् ... २– ४–०
९. यशःपालकृतमोहपराजयनाटकम् ... २– ०–०
१०. जयसिंहसूरिकृतहम्मीरमदमर्दनम् ... २– ०–०
११. सोड्ढलकृतोदयसुन्दरीकथा ... ... २– ४–०
१२. महावादीन्द्रकृतमहाविद्याविडम्बनम्
( भुवनसुन्दरसूरिटीकायुतम् ) ... २– ८–०
१३. प्राचीनगूर्जरकाव्यसङ्ग्रहः
( प्रथमो भागः ) ... ... २– ४–०
१४. सोमप्रभाचार्यकृतकुमारपालप्रतिबोधः ७– ८–०
१५. भासर्वज्ञकृतगणकारिका सटीका
( कारवणमाहात्म्योपेता ) ... १– ४–०
१६. नारदकृतसङ्गीतमकरन्दः ... ... २– ०–०
१७. कवीन्द्राचार्यसूचीपत्रम् ... ... ०–१२–०
१८. वाराहगृह्यसूत्रम् ... ... ... ०–१०–०
१९. लेखपद्धतिः ... ... ... (सम्पूर्णप्राया)
२०. धनपालकृतपञ्चमीकहा(अपभ्रंशभाषायाम्) ,, ,,
२१. जेसलमेरुभाण्डागारीयग्रन्थानां सूची २– ८–०
२२. परशुरामकल्पसूत्रं सव्याख्यम् ...(सम्पूर्णप्रायम्)
२३. परशुरामकल्पसूत्रोपरि उमानन्दपद्धतिश्च(सम्पूर्णप्राया)
२४. रामानुजाचार्यकृतं तन्त्ररहस्यम् ... (सम्पूर्णप्रायम्)

### मुद्यमाणग्रन्था:

१. भोजकृतसमराङ्गणम्
२. दिङ्नागकृतन्यायप्रवेशः हरिभद्रसूरिकृत।
वृत्तिपार्श्वदेवकृततत्पञ्जिकाभ्यां विभूषितः
३. शान्तरक्षितकृततत्त्वसङ्ग्रहः
कमलशीलकृतपञ्जिकायुतः

"इमे ग्रन्थाः सेन्ट्रल लाइब्रेरी वडोदरा"
इत्यत्र प्राप्स्यन्ते.

# विषय-सूची।

# सङ्केत-सूचनम्।

A. एशियाटिक सोसाइटी बेंगाल-रिपोर्ट-पुस्तकानि। ( Notices of Sanskrit Mss. )

B. ब्रिटीशम्युझियम केटलॉग-पुस्तकम्। ( Catalogue of the Sanskrit Mss. in the British Museum. )

C. सेन्ट्रल लायब्रेरी वरोडा-संस्कृतपुस्तकालयस्था प्रतिः।

D. डेक्कनकॉलेज-सं. पु. रिपोर्ट-पुस्तकम्। ( Descriptive Catalogue of the Government Collections of Mss. deposited at the Deccan College, Poona. )

H. जैनमुनिवर्यहंसविजयसङ्ग्रहसत्काऽत्रत्यजैनज्ञानमन्दिरस्था प्रतिः।

I. इण्डियाऑफिसकेटलॉग-पुस्तकम्। ( Catalogue of Sanskrit Mss. in the India Office Library. )

K. प्रवर्तककान्तिविजयमुनिराजसङ्ग्रहसत्काऽत्रत्यजैनज्ञानमन्दिरस्था प्रतिः।

M. पंन्यासमोहनविजयमुनिराजसङ्ग्रहसत्काऽत्रत्यजैनचित्कोशस्था प्रतिः।

M. L. मद्रासगवर्न्मेन्टलायब्रेरी-सूचिपत्रम्। ( Catalogue of Mss. collected for the Government Oriental Ms. Library, Madras ).

P. पत्तनभाण्डागार-सूचिपत्रम् ( अनयैव संस्थया मुद्राप्यमाणम्. )

P. P. प्रो. पिटर पिटर्सनस्य रिपोर्ट-पुस्तकानि। ( Reports of operations in search of Sanskrit Mss. in the Bombay Circle. )

R. डॉ. रामकृष्णभाण्डारकरस्य रिपोर्ट-पुस्तकम्। ( Report on the search for Sanskrit Mss. in the Bombay Presidency. )

S. प्रो. श्रीधरभाण्डारकरस्य रिपोर्ट-पुस्तकम्। ( Report of a second tour in search of Sanskrit Manuscripts made in Rajputana and Central India. )

ख. खरतरगच्छपट्टावली ( क्षमाकल्याणीया )

बृ. बृहट्टिपनिका ( जैनसाहित्यसंशोधकसंज्ञकत्रिमासिकपत्रस्य प्रथमवर्षीय-द्वितीयपुस्तके मुद्रिता )

ही. पं. हीरालालद्वारा जैनश्वेताम्बरकॉन्फरन्ससंस्थया कारिता जेसलमेरभाण्डागारीयसूची।

# शुद्धिपत्रकम् ।

(१)

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | २२ | अव्यस्थितायां | अव्यवस्थितायां |
| ११ | ३३ | ०प्रतिकृत् | ०प्रतिष्ठाकृत् |
| १२ | २२ | १२ | ७२ |
| १२ | ३२ | पावितो | पाठितो |
| १३ | ५ | सं. १५१९ | सं. १५१२-१९ |
| १७ | ३२ | (?)गुणः | गुणैः |
| १८ | ९ | ०नेत्राद्दु० | ०नेत्राद्दु(?ब्ज)० |
| २३ | ५ | सं. | टी. सं. |
| २६ | ३१ | ०नद्यु० | ०नद्द्यु० |
| २९ | १३ | चतुष्पादिका | चतुष्पदिका |
| ३१ | २ | शाब्दोपामना० | शाब्दोपमाना० |
| ,, | २२ | ०पाध्यायो च० | ०पाध्यायश्च० |
| ३६ | ३५ | स्वारोऽहं | स्वारोहं |
| ४६ | ७ | ०वृत्तिर्वर्तते | ०वृत्तिः, सुलसाख्यानं च श्रूयते |
| ५४ | १० | १४०६ | १४०७ |
| ,, | ११ | ०शिष्यः | ०शिष्या |
| ,, | १६ | ०स्थास्य | ०स्यास्य |
| ५५ | २ | १६? | १५ |
| ५५ | ३ | सप्तदश० | षोडश० |
| ,, | ,, | सम्भाव्यते | सम्भाव्यते; यतोऽनेन सं. १५१६ वर्षे विद्याविलासप्रबन्धः प्रणीतः श्रूयते। |
| ५५<br>१४ | ८<br>२४ | उन० | एकोन० |
| ५७ | ३५ | सु० | सु(श्रुत ?)० |
| ५८<br>५८ | १३<br>१५-१७ | ०विचार-चतुर्विध०(?) | ०विचार-चतुर्विध०(?)इत्यादिषु तपोटमतकुट्टन-प्रायश्चित्तविधानं विहाय प्रायोऽन्यानि स्वागमिक-जिनप्रभसूरिकृतानि श्रूयन्ते । |
| ६४ | १७ | ०कारो | ०कारः |
| ६४ | ३७ | साद्व(?)० | साह्व० |

| | | | |
|---|---|---|---|
| 4 | 7 | धनेश्वरसूरि | ०धनेश्वरसूरि ( ? श्रीचन्द्रसूरि ) |
| ,, | 14 | [ राजशेखर ] | [ देवभद्र ? ] |
| ,, | 26 | मिथ्यात्व० | मिथ्यात्व [ तिमिर ]० |
| ,, | 27 | ५० | प० |
| 5 | 37 } | ०वृत्ति (मु०) | वृत्ति |
| 8 | 36 } | | |
| 13 | 5 | ( मु० ) | |
| ,, | 25 | [ लघु ] | [ लघु ] |
| 17 | 24 | 40 | 10 |
| 25 | 33 | ०व्यया० | व्यपा(व्यपेता)० |
| 29 | 20 | दुसं(ञ)० | दु(सं)ज्ञ० |
| 35 | 10 | ०नियम... | ०नि(जि)यम... |
| 43 | 18 | ०सोदर्य: श्री० | ०सोदर्य:(र्य)श्री० |
| ,, | 30 | जिनेश्वरसूरि | जिनरत्नाचार्य |
| 45 | 11 | सन्त० | सन्त(स्तात्त)० |
| 56 | 27 | ०सत्ययोवि(वि) | ०सत्पशोवि० |

# PREFACE.

THE Jain Bhandars in Jesalmere have long been famous throughout India. They appear, however, to have escaped the notice of Western scholars until Colonel James Tod drew attention to their importance. In *Travels in Western India* (1829), a delightful work which deals largely with the sacred places of the Jains and which deserves to be reprinted, he remarks:—

"Until we have some insight into the subterranean 'bindar' of Anhulwarra, and a more extended knowledge of the Oswals of Jessulmer, with access to its library, which is equally numerous and probably more select than that of Pattun: above all, until we have formed some acquaintance with the dignitaries of the Jain sect and their learned librarians, we are not in a condition to appreciate the intellectual riches of the Jains, and can only pity the overweening vanity which has prompted the assertion that the Hindus possess no historical records, and which seeks to quench the spirit of enquiry by proclaiming such research a vain labour."

The first Europeans to have examined these bhandars were Dr. Bühler and Dr. Jacobi. In a short letter to the *Indian Antiquary*[1] Dr. Bühler says:—

"I have succeeded in seeing a portion of the famous Bhandar of the Osval Jains of this town, and have obtained already results which repay me for the tedious journey, and the not less tedious stay in this country of sand, bad water and guinea worms. A large portion of the Bhandar consists of palmleaf Mss. dated from *circa* 1110 to 1310 A. D. We have worked six days in the Bhandar and have not yet done......The Panch of the Osval, to whom the great Bhandar belongs, is very tough, and requires frequent admonitions from the Rawal, but I believe finally we shall see everything."

Dr. Bühler was under the impression that he had seen all the contents of all the bhandars. As a matter of fact, he inspected

(1) III. pp. 89-90.

only a small portion of one, viz, the Bada (Big) Bhandar, the contents of which he estimates as about 400 or so, whereas even Professor S. R. Bhandarkar knew of 2,200 works in the Big Bhandar. In a letter written in Bikanir to the Berlin Academy,[1] and dated February 14th, 1874, only fourteen days after his communication to the *Indian Antiquary*, Dr. Bühler remarks:—

"In Jessalmir, which was founded about the middle of the twelfth century...there is a large colony of Jains......A temple was built under the pontificate of Jina Bhadrasuri, to which were gradually added six other temples. Through this temple and the wealth of the Jain community...... Jessulmir has obtained a high fame as one of the principal seats of the Jain faith. Especially, however, is the renown of the Bhandar everywhere celebrated, which according to the statements of the Gujaratis, surpasses all similar Bhandars in the world. It was therefore one of the chief objects of my journey to obtain admittance to this Bhandar, and to make its contents accessible to science. After some trouble I succeeded in solving the mystery, and it turns out that the magnitude of the Bhandar has been very much exaggerated, but its contents are nevertheless of great value."

About thirty years after Dr. Bühler's visit, he was followed by Professor Shridhar R. Bhandarkar, who has given us the result of his labours in the "Report of a second tour in search of manuscripts in Rajputana and Central India in 1904-5 and 1905-6," published in 1909. About the same time the Jain Swetambar Conference was collecting materials for its "Granthavali," which also appeared in 1909. Professor Bhandarkar's Report is a very interesting and important one. However, it is somewhat unfortunate that he placed so much reliance on a catalogue of Jesalmere manuscripts compiled by one of the Conference pandits, and has thereby occasionally been led into error, for, as the Conference itself confessed in its "Granthavali," the catalogue was a very faulty and imperfect piece of work. In the present Catalogue an attempt has been made to rectify these errors.

The "Descriptive Catalogue" now offered to the public is believed to be pretty exhaustive, and to mention all the important palm leaf and paper manuscripts in Jesalmere. It is the work of a scholarly young Jain, the late Mr. C. D. Dalal, Sanskrit Librarian, Baroda Central Library. Mr. Dalal was well equipped for his arduous task. He was held in high esteem by the learned

(1) *Vide Indian Antiquary*, IV, pp. 81-83.

of his community, and had been touring in Western India, doing similar research work in the Jain bhandars of Pattan, Baroda, Cambay, Ahmedabad, Chhani and elsewhere. Moreover, for some years he had been engaged in handling, collating and cataloguing the manuscript collection of the Baroda Central Library.

During his visit to Jesalmere in 1916 he carefully examined all the contents of the Big Bhandar and of three other bhandars. Acknowledgment is due to the Agent-General for Rajputana, the Residents at Bikanir and Jesalmere, the Jesalmere Darbar and the Panches and Yatis of that city, for assistance given to him during his visit.

During a brief space of three years this brilliant young scholar found time to edit wholly or in part no less than fourteen works in the *Gaekwad's Oriental Series*, only one half of which, however, had been published at his death. It is feared that his incessant labours seriously weakened his health, never very robust, and indirectly shortened his life.

It is unfortunate that he never found time to prepare the press copy of this Catalogue. At his death in October 1918 only rough and undigested notes were available, a portion being in pencil which had somewhat faded. However, every effort has been made by the compiler to make the List as complete and correct as possible, and he alone is responsible for the Sanskrit Preface, Introduction and Appendices.

A Descriptive Catalogue of the Jain Bhandars of Patan, together with Mr. Dalal's report on his work in that town, is in hand, and will appear in due course in the *Gaekwad's Oriental Series.*

**N. M. D.**

# प्रस्तावना.

प्रत्नपुस्तकरत्नान्वेषिणः प्राज्ञवतंसाः!

प्रमोदं प्राप्नुवन्तु प्रतिभावन्तो भवन्तोऽद्याचयावदप्रकाशितरहस्यस्य प्रचुरप्रयासेनाप्यप्राप्य-दर्शनस्य गुप्तिगुप्तजीर्णविशीर्णलुप्तावशिष्टस्य जेसलमेरुदुर्गस्थजैनभाण्डागारीयदुष्प्रापग्रन्थरत्न-सङ्ग्रहस्य प्रारम्भप्रान्तोल्लेखाद्युपेतसूचिपत्रसमीक्षणेन ।

प्रत्यक्षीकृत्य चैतत् समर्पयन्तु सहस्रशो धन्यवादान् विद्याविलासिने साहित्यसागरसमुल्ला-सनचन्द्राय महाराजाय श्रीमते सरकारसयाजीरावगायकवाडमहोदयाय; यत्प्रसादप्राग्भा-राद् भारतवर्षेऽद्वितीयस्य पाश्चात्यैरेतद्देशीयैश्च प्रभूतैः प्राज्ञपुङ्गवैश्चिरादहमहमिकया दिदृ-क्षितस्यादृष्टाज्ञाताश्रुतपूर्वप्राचीनपुस्तकरत्नानामगारस्यापि रहस्यमेतदात्मसात् कर्तुं सम्प्राप्तोऽयं शुभोऽवसरः ।

प्रसिद्ध्यर्थं सत्वरमभिलषितस्याप्यस्य विलम्बेऽवारितप्रसरोऽतर्कितोऽनिष्टविघ्न एव कारणम् । श्रीमतां महाराजानां समाज्ञया येन साहित्यसमुपासकेन दुर्गममपि जेसलमेरुदुर्गं गत्वा १९१६ तमख्रिस्ताब्दस्य नवममासादेतत्सूचिसङ्कलनकार्यं प्रारभ्य सततप्रयासेन तस्यैव वर्षस्य द्वादशमे मासि पूर्णमकारि; हन्त! एम्. ए. इत्युपाधिविभूषितः साक्षररत्नं स डाह्याभाईतनुज-चीमनलालदलालमहाशयोऽघटितघटनाघटकस्य दुर्विधेर्वशादेतदसज्जमेवानाधारमिव मुक्त्वा १९१८ तमख्रिस्ताब्दस्य दशमे मासि दिवं गतवान् ।

यशःशेष एष दलालमहाशयो यद्यप्येतत्सूचिसङ्कलनानन्तरं पादोनवर्षद्वयं यावत् स्वजीवन-मधारयत्, तथाप्यन्यान्यकार्यव्यापृततयाऽन्त्यावस्थायां प्रकृतेरस्वास्थ्यादिना चैतद्विषयकं किमपि विशिष्टं निवेदनं नोल्लिलेख, न च मुद्रायन्त्रार्हां शुद्धां प्रतिकृतिं कर्तुं कारयितुं वा प्राभवत् । स्वस्मृतियोग्यो य उल्लेखो यथाकथञ्चिदनेन तत्र त्वरयाऽकारि, तस्यापूर्णरूपा कति-चित्पत्रविरहिता चैका प्रतिकृतिस्तत्स्वर्गमनाद् वर्षद्वये व्यतीते जातायां मन्नियोजनायां मया-ऽवालोकि । अव्यवस्थितायां च तस्यां प्रतिकृतौ प्रथमतोऽप्यस्पष्टरूपाणि तदक्षराणि विशेषतो दु-र्बोधान्यतिकृच्छ्रेण वाच्यान्यभवन् । ज्ञातपरिस्थितिरहं तद्भाण्डागारस्य स्वयं समीक्षणमकृत्वाऽस्य प्रकाशनं दुष्करं प्रचुरपरिश्रमेण विलम्बेन च साध्यमज्ञासिषम्, किन्तु तद्भाण्डागारस्य दर्शनं ततोऽपि दुर्घटं व्यचारयम्; ततः एम्. ए. एल्. एल्. बी. पदाङ्कितस्याचिरादमरालयमुपेयुषः जे. एस्. कुडालकर (क्युरेटर ऑफ स्टेटलाइब्रेरीझ्) महाशयस्य प्रेरणया पूर्वोक्तप्रति-कृत्यैतस्ततो यत्किञ्चित्प्राप्तान्यसामग्र्या च प्रस्तुतकार्यं प्रायतिषि ।

हंसविजयसमभिख्येन जैनमुनिना वि. सं. १९५० वर्षे (१८९४ ख्रिस्ताब्दे) जेसलमेरुदुर्गे चातुर्मास्यस्थितिरक्रियत, तदा तेन मुनिवर्येणैतद्भाण्डागारस्यैका सूची सङ्कलिताऽऽसीत्, कति-पयादर्शपुस्तकानां प्रतिकृतयश्चाकार्यन्त । गवेषिताऽपि सा सूची न लब्धा, तथापि तस्य मुनिवर्य-स्यात्रत्यजैनज्ञानमन्दिरस्थाः काश्चन पूर्वोक्ताः प्रतिकृतीर्व्यलोकयम् ।

जैनश्वेताम्बरकॉन्फरन्ससंज्ञकसंस्थया १९०४–५ खिस्ताब्दे हीरालाल हंसराज इत्याह्वं जैनपण्डितं प्रेष्यास्य बृहद्भाण्डागारस्य शतद्वयाधिकसहस्रद्वयग्रन्थानां सूचिपत्रमकार्यत, यच्च तयैव संस्थया प्रकाशितायां जैनग्रन्थावल्यामविश्वसनीयत्वेन नैकवारं निरदेशि; तदित एव कालान्तरेणोपलब्धम्। दलालेन ( ) एतादृक्कोष्ठके क्वचिदस्य क्रमाङ्को दर्शितो दृष्टिगोचरी भवति। मुम्बापुरीराजकीयनिदेशात् प्रो. श्रीधरभाण्डारकरश्च तदैव ( १९०४–५ खिस्ताब्दे ) जेसलमेरौ गतवान्। तद्यात्रासम्बन्धि भाण्डागारदर्शनविषयकं च स्वानुभूतं तेन महाशयेन १९०४–५,५–६ खिस्तवर्षीये रिपोर्ट–नामकपुस्तके प्रकाशितम्, तदपराणि च प्रो. पिटर्सनादिकृतानि रिपोर्ट–क्यॅटलॉगसंज्ञकानि पुस्तकानि मयाऽस्मिन् कार्ये ग्रन्थपरिचयादावुपयोजितानि, तानि तत्तत्स्थले संक्षिप्तसंज्ञया समसूच्यन्त; तत्सङ्केताभिज्ञानं त्वन्यत्राकारि।

एतत्सूचिपत्रदर्शितानां भाण्डागाराणां स्थापन-संरक्षण-संवर्धनादिना विहितस्वपरोपकाराणां जैनाचार्य-मुनि-गृहस्थानामितिवृत्तप्रतिपादका जेसलमेरुदुर्गीयनृपाणां च सम्बद्धा दलालसङ्गृहीता ये केऽपि शिलालेखा मयेह दृष्टास्ते चात्र परिशिष्टे समुपवेशिताः। १,२,३,४,५,१३ परिशिष्टदर्शिता लेखा यद्यपि प्रो. श्रीधरभाण्डारकरेण स्वपुस्तके ( रि० २, पृ० ९३–९७ ) दर्शितास्तथापि न ते परिपूर्णा यथास्थिताश्चेति सूक्ष्मदर्शिभिर्द्रक्ष्यते। १–२–३–५–६–१९–२०–२१-२२ परिशिष्टप्रदर्शिता लेखास्तु दलालेन यथाप्रतिच्छन्दं ( Impression ) सङ्गृहीता आसन्। तेषामन्येषां च लेखानां प्रतिकृतिं सावधानतयाऽतिपरिश्रमेणाकार्षम्, यथायुक्तं चैताश्चयवेशयम्, एषामुपयुक्तता त्वग्रे प्रतिप्रसङ्गं प्रादर्शयम्।

प्रो. श्रीधरभाण्डारकरेण स्वकीये पुस्तके ( रि० २, पृ० १० ) दशानां जेसलमेरुपुस्तकसङ्ग्रहाणां नामावल्युदलेखि। दलालेन तु निम्ननिर्दिष्टानां चतुर्णामेव जैनपुस्तकभाण्डागाराणां पुस्तकान्यत्र संसूचितानि; अन्येषां तु विशेषमहत्त्वरहितत्वादथवा श्री. भाण्डारकरेण तद्विषय इल्लिखितत्वादुपेक्षाऽक्रियतेति सम्भाव्यते।

## (१)

## बृहद्भाण्डागारः।

अस्यैवात्र प्राधान्यम्, प्राचीनपुस्तकगवेषिणः साक्षरा अस्यैव दर्शनार्थं समुत्कण्ठन्ते। दुर्गमोऽपि स मरुदेशप्रदेश एतत्सौरभेणैवाकर्षति प्राज्ञमधुपान्। पूर्वं डॉ. बूल्हरमहाशयेन १८७४ समे खिस्ताब्देऽस्य दर्शनं व्यधायि, तदा तेन ततो नवतिवर्षप्राचीनाऽस्य द्वाविंशत्यधिकचतुःशतीपुस्तकानां संक्षिप्ता टिप्पनिका व्यलोकि, सं. ११६० वर्षीयं तालपत्रपुस्तकं च प्राचीनतमत्वेन प्राबोधि ( Gowsh पृ. ११७ )। तदनन्तरं १९०४–५ खिस्ताब्दे ही. हं. जैनपण्डितेन स्वसूचिपत्रे, तदवलम्ब्य श्री. भाण्डारकरेण च निजे पुस्तके (रि० २, पृ० १४) ततोऽपि प्राचीनानि सं. ९२४,१००५, ११२०, ११२७,११३९, ११४४, ११५५ तमवर्षेषु लिखितानि तालपत्रपुस्तकानि सूचितानि। किन्त्वेषु केवलं सं. ११३९ वर्षीयं विहायान्यदेकमपि विश्वस्तवर्षसङ्ख्याकं न प्रतिभाति। एतत्सूचिपत्रानुसारेण तु ३–४–२७ पृष्ठेषु दर्शितानि सं. १११–, सं. ११३०, सं. ११३९ वर्षेषु लिखितानि क्रमेण भगवतीसूत्र–तिलकमञ्जरी–कुवलयमालाऽऽख्यानि पुस्तकानि प्राचीनतमानि प्रतिभान्ति। १५० (१) क्रमाङ्के दर्शितं सं. १११५ वर्षीयं तु शङ्कितं भाति।

सर्वेष्वपि ताडपत्रेष्ववर्वाचीनं सं. १४९३ वर्षे लिखितं सर्वसिद्धान्तविषमपदपर्यायसंज्ञकं पुस्तक-

मत्र विलोक्यते ( पृ.२३ ) इत्यतः सं. १४५८ वर्षीयं कुमारपालप्रतिबोधनामकं ताडपत्रपुस्तक-मुद्दिश्य तत्प्रस्तावकेन "प्रायस्ताडपत्रात्मकेषु पुस्तकसमूहेषु इदं पुस्तकमपश्चिमं प्रतिभात्यस्माकम्। यतः, एतस्मात् पुस्तकादर्वाचीनं नान्यत् पुस्तकमस्माकं दृष्टिपथमायातं कर्णगोचरीभूतं वा कुत्रापि जैनग्रन्थागारे।" (कु० प्रस्ता०) विहितोऽयमुल्लेखो निरस्तो भवति।

जेसलमेरुस्थापना सं. १२१५ वर्षे जेसलनृपाज्जातेति राजस्थानादीतिवृत्तवेदिनां प्रायः सुविदितमेव। ततोऽपि प्राचीनलेखनकालानि प्रभूतानि पुस्तकान्यत्र प्रेक्ष्यन्ते। येषु लेखनस्थलं निर्दिष्टं विलोक्यते, तेषु क्वापि जेसलमेरुनाम नोपलभ्यते; नवरं जेसलमेरुदुर्गे रचितानि त्रीणि पुस्तकान्यत्रावलोक्यन्ते। तेषु प्रथमं तावत् पूर्णभद्रगणिना सं. १२८५ वर्षे रचितं धन्य–शालिभद्रचरितं तालपत्रीयम्, द्वितीयं गुणसमृद्धिमहत्तरया सं. १४०७ वर्षे विरचितमञ्जणासुन्दरीचरियम्, तृतीयं तु पुण्यसागरोपाध्यायेन सं. १६४५ वर्षे विहिताया जम्बूद्वीपप्रज्ञप्तिवृत्तेः पुस्तकम्।

खरतरगच्छीयजिनराजसूरिशिष्यस्य जिनभद्रसूरेरुपदेशात् स्तम्भतीर्थे परीक्षिगूजरपुत्रधरणादिसुश्रावकैः सं. १४८५ तमवर्षादारभ्य सं. १४९३ तमवर्षपर्यन्तं लेखितानां तालपत्रपुस्तकानामत्र भाण्डागारे प्राचुर्यं वर्तते। तेषामन्तिमो लेखः प्रायः सदृशोऽतः क्वचित् क्वचिद् दलालेनायं संक्षिप्तो दृश्यते (पृ. १८,१९,२३,३४,३६)। सं. १४९७ वर्षे जिनभद्रसूरिणा प्रतिष्ठितस्य सम्भवजिनालयस्यैकस्मिन् प्रदेशेऽयं भाण्डागारो वर्तते। अनेन सूरिवर्येण सम्भवजिनालयप्रतिष्ठायाः प्रागणहिल्लपाटकपुरादिषु विधिपक्ष(खरतरगच्छ)श्राद्धसङ्घेन ज्ञानरत्नकोशा अकार्यन्त-(परि० ३) इत्यादिनाऽयमपि बृहद्भाण्डागारोऽस्यैव सूरिवर्यस्य सदुपदेशाद् वैक्रमवत्सरपञ्चदशशतकप्रान्ते स्थापितः सम्भाव्यते। स्तम्भतीर्थाणहिलपाटकादिस्थानेषु लेखितानि सङ्गृहीतानि च तालपत्रीयादिविविधपुस्तकानि तदानीं कुतोऽपि कारणवशात् तत्र नीतानि, पाश्चात्यैश्च तदनुयायिभिर्वृद्धिं नीतानीत्यनुमीयते। पुस्तकसङ्ग्रहस्य तत्र नयने मुख्यं कारणं तु म्लेच्छनृपाणामाक्रमणरूपं तर्क्यते; यतोऽत्याचारिभिरनेकैस्तैर्नृपापसदैरसकृदत्याहितमिति जनप्रसिद्धम्। जेसलमेरुदुर्गस्तु बलवद्भिरपि म्लेच्छावनीपैर्दुर्ग्रह आसीत् (परि० ३, श्लो० ५)। जेसलमेरुस्थापनाया अनन्तरमचिरेणैव तत्र धनाढ्या जैनगृहस्था विशेषतश्च खरतरगच्छानुयायिनो न्यवसन्, यैस्तत्र जिनालयजिनपतिगुरुस्तूपाद्यपि चक्रे (दशश्रावकचरितप्रशस्तिः; प्रा. लेखसङ्ग्रहः २। ४४७)। जेसलमेरुपुरीयो लक्ष्मणनृपो जिनराजसूरिनिदेशात् सं. १४५९ वर्षे पार्श्वजिनालये जैनबिम्बस्थापयितुः सागरचन्द्रसूरेर्भक्त आसीत् (परि० १, श्लो० १४–२१)। यदीये राज्यकाल एव सं. १४७३ वर्षे जिनवर्धनसूरिणा लक्ष्मणविहाराख्यस्य पार्श्वजिनालयस्य शान्तिजिनालयस्य च प्रतिष्ठाऽकारि (परि० १–२)। अयं स एव जिनवर्धनसूरिर्यं सागरचन्द्रसूरिः सं. १४६१ वर्षे जिनराजसूरेः स्वर्गमनानन्तरं जिनराजसूरिपट्टे स्थापितवान् (ख.)। सप्तपदार्थीटीका–वाग्भटालङ्कारटीकाकर्त्रा च येन जिनवर्धनसूरिणा सं. १४६९ वर्षे प्रतिष्ठिता जिनराजसूरिमूर्तिरद्यापि देवकुलपाटके विद्यते। सागरचन्द्रसूरिर्व्यन्तरदृश्यमानमस्य जिनवर्धनसूरेर्व्रतमालिन्यं विशङ्क्यामुं पश्चात् समुदायात् पृथक्कृत्य तत्स्थाने जिनभद्रसूरिं सं. १४७५ वर्षे प्रतिष्ठितवान्, यत्प्रभृति जिनवर्धनसूरितः पिप्पलखरतरशाखा निर्गता (ख.)। जेसलमेरौ पञ्चायतप्रासादप्रतिकृत् (परि० ४) लक्ष्मणनृपस्य पुत्रो वैरिसिंहनृपश्छत्रधर–त्र्यम्बकदासौ च नृपती जिनभद्रसूरेर्भक्ता आसन् (परि० ३)। तदानीन्तनास्तत्रत्या जैनगृहस्था राजमान्या गच्छपतिजिनभद्रसूरिं प्रति श्रद्धावन्तश्चाभूवन्नित्याद्यपि परिशिष्टलेखदर्शनेन स्फुटमवगम्यते इत्यतः पुस्तकानां संरक्षणे तत् स्थानं निरुपद्रवं निरूप्य विचक्षणोऽयं जिनभद्रसूरिः सारभूतं स्वपुस्तककलापं गूर्जरधरायास्तत्र नीतवा-

नित्यनुमानं न निर्विचारम् । तथा च सप्तदशशताब्दीभवैर्गुणविनयगणि–समयसुन्दरादिभिरप्यस्य सूरिवर्यस्य ज्ञानकोशलेखनदक्षत्व–भाण्डागारपोषकत्वादिगुणोऽस्मारि, जेसलमेरुस्थस्यास्य भाण्डागारस्यापि च स्मरणमकारि । स्थाने[3] स्थाने ज्ञानकोशान् कारयितुरस्य सूरिवर्यस्य जन्म सं. १४५० वर्षे, दीक्षा सं. १४६१ वर्षे, सूरिपदं सं. १४७५ वर्षे, स्वर्गमनं च सं. १५१४ (५) वर्षे समजनि । अनेन दीक्षा खरतरगच्छीयजिनराजसूरिपार्श्वे जगृहे । विद्याध्ययनं तु वाचकशीलचन्द्रगणिपार्श्वेऽकारि (ख.) । सूरिवर्यस्यास्य विद्वत्ता–सच्चरित्रता–जिनमन्दिर–जिनबिम्ब–ज्ञानकोशप्रतिष्ठाकृत्त्व–व्याख्यातृत्व-राजमान्यत्वादिगुणानां वर्णनमत्र (परि०३) विहितमिति नेह पुनः प्रतन्यते । अनेन सूरिणा सूरिपदानन्तरं यावज्जीवं सं. १५१५ वर्षपर्यन्तं प्रतिष्ठितानि प्रभूतानि जैनबिम्बानि लेखितानि च पुस्तकानि यत्र तत्र प्रेक्षणपथपान्थीभवन्ति । सं.१५१८ वर्षे ऊकेशवंशीयेन केनचित् कारिताऽस्य सूरेः प्रतिमा नगरग्रामे जैनमन्दिरभूमिगृहे स्थापिता वर्तते ( भावनगरप्राचीनशोधसङ्ग्रहभा० १, पृ. ७१ ) । सं. १५२४ वर्षे जिनचन्द्रसूरेर्गच्छाधिपत्ये तदादेशात् कमलसंयमोपाध्यायेन प्रतिष्ठिते जिनभद्रसूरिपादुके वैभारगिरौ ( राजगृहे )च विद्येते ( जैनलेखसङ्ग्रहले. २५७) । येन कमलसंयमेन सं.१४७६ वर्षे जिनभद्रसूरिपार्श्वे[4] दीक्षाऽग्राहि, [5]सं. १५४४ वर्षे जेसलमेरुदुर्गे सर्वार्थसिद्धिसंज्ञिकोत्तराध्ययनसूत्रवृत्तिश्च विनिर्ममे । [6]सं. १४८४ वर्षे पत्तनस्थमेनं जिनभद्रसूरिं प्रति जयसागरोपाध्यायः सिन्धुदेशान्त-

१ श्रीज्ञानकोशलेखनदक्षा जिनभद्रसूरयो मुख्याः ।
तत्पट्टे सञ्जातास्ततोऽद्युतन् दिव्यगुणजाताः ॥–सम्बोधसप्ततिवृत्तिप्र०

अणहिल्लपत्तन–जेसलमेरुस्थितसमयकोशवीक्षायाः ।
समवसितगोप्यगम्भीरभावश्रुतनिकरसञ्चाराः ॥–विचाररत्नसङ्ग्रहः p. p. २ । ३१०

२ श्रीमज्जेसलमेरुदुर्गनगरे जावालपुर्यां तथा
श्रीमद्देवगिरौ तथा अहिपुरे श्रीपत्तने पत्तने ।
भाण्डागारमबीभरद् वरतरैर्नानाविधैः पुस्तकैः
स श्रीमज्जिनभद्रसूरिसुगुरुर्भाग्याद्भुतोऽभूद् भुवि ॥–अष्टलक्षी p. p. ४ । १२.

३ स्थाने स्थाने स्थापितसारज्ञानभाण्डागारश्रीजिनभद्रसूरि–पत्तनीयवाडीपार्श्वनाथमन्दिरप्रशस्तिः
( एपिग्राफिआ इण्डिका १।३७ )

स्थाने स्थाने पुस्तकभाण्डागारस्थापकाः श्रीजिनभद्रसूरयः– ख.

४ कीर्तिः श्रीजिनभद्रसूरिसुगुरोः सिद्धान्तकन्दोद्भवा
व्याख्यानालवती जनोन्नतिदला...... ।
विश्वद्रहव्या विसिनीव भव्यमधुपैः सौभाग्यसौगन्ध्यभाग्
भाग्यादित्यमहोदयाद् विजयते नित्यप्रबुद्धाऽद्भुतम् ॥

षट्–सप्ताम्बुनिधि–क्षपाकरमिते संवत्सरे वैक्रमे तैरस्मि स्वकरेण मोहजलधिपोतं व्रतं ग्राहितः ।
शास्त्रं वा परमेष्ठिपञ्चकनमस्कारागमं पाठितो वात्सल्यं कथयामि वा कियदहं यत् प्रत्यहं तैः कृतम् ॥
—उत्तरा० वृ० प्र०

५ अम्भोधि–वारिनिधि–बाण–शशाङ्कवर्षे श्रीउत्तराध्ययनवृत्तिमिमां चकार ।
जेसलमेरौ दुर्गे विजयदशम्यां समर्थिता सेयम् । श्रीजिनभद्रमुनीश्वरचरणस्मरणप्रसादेन ॥
—उत्तरा० वृ० प्रशस्ति०

६ जलधि–वसु–भुवन–सङ्ख्ये वर्षे माघे सिताष्टमीदिवसे । रविसुतवारे रुचिरे समर्थितोऽयं महालेखः ॥
—विज्ञप्तित्रिवेणिप्र०

गेतमल्लिकवाहणपुराद् विद्वत्तापरिपूर्णां विज्ञप्तित्रिवेणिं प्रहितवान्, यस्मा उपाध्यायपदं जिनभद्रसूरिणा व्यतारि (पृ. ५७)। सं. १४९५[1] वर्षे जयसागरोपाध्यायविहिता सन्देहदोलावलिवृत्तिश्चैतेन व्यशोधि[2], स्वयं च जिनसप्ततिसंज्ञकं प्रकरणं प्राणायि[3]। सं. १४८७ वर्षे जेसलमेरौ जन्मभाक्, सं. १५३० वर्षे तत्रैव स्वर्गामी जिनचन्द्रसूरिरस्य पट्टधर आसीत् (ख.), सं. १५१८ वर्षे यत्प्रतिष्ठितानां तीर्थपट्टिकानां लेखा अत्र प्रोद्धृताः (परि० १४,१५,१६,१७,१८)। सं.१५१९ वर्षे पुष्पमालावृत्ति(पृ. ५८)-चरित्रपञ्चकवृत्तिविधातुः साधुसोमगणिनो गुरुर्ग्यासदीनसाहिसभायां वादिविजेता सिद्धान्तरुच्युपाध्यायोऽप्यस्य जिनभद्रसूरेः शिष्य आसीत्[4]। भावप्रभाचार्य-कीर्तिरत्नाचार्यादीनयं जिनभद्रसूरिः सूरिपदेऽस्थापयत् (ख.)। अष्टादश[5] विद्वांसोऽस्य शिष्या आसन्। सं. १५३६ वर्षे जेसलमेरुदुर्गे देवकर्णराज्येऽष्टापदप्रासादप्रतिष्ठाकारको जिनचन्द्रसूरेः शिष्यः (परि० ५) जिनसमुद्रसूरिर्जिनभद्रसूरेः प्रशिष्य आसीत्। परमहंससम्बोधचरित्रकारो नयरङ्गो जिनभद्रसूरेः सन्तानीयः (पृ. ५७)। महेश्वरकविः[6] कविवरमण्डनचरिते, धनदश्च[7] निजनिर्मिते नीतिशतके स्वसमकालीनजिनभद्रसूरेर्गुणानवर्णयत्।

एवं पुस्तकलेखन-सङ्ग्रहार्थमुपदिश्य भाण्डागारं बिभ्रता जिनभद्रसूरिमहाशयेन, तदुपदेशमनुसृत्य निजद्रव्यव्ययेन पुस्तकानि लेखयित्वा संगृह्य च समर्पयित्रा धरणाऽऽदिगृहस्थगणेन च साहित्यसमुपासकानां समाजोऽतीवानुगृहीत एतद्विषये केन किं वक्तव्यम्? । किन्तु तादृगलभ्यदुर्लभपुस्तकरत्नानामगारं साम्प्रतं कारागारमिव क्रियमाणं श्रुत्वा वा महापुरुषोद्गीर्णानामगणितगुणगणाकीर्णानां तेषां ग्रन्थानां दुर्दैववशात् कालक्रमेणासावधानतया जन्तुजातेन च

---

१ विक्रमतः पञ्चनवत्यधिकचतुर्दशशतेषु वर्षेषु । प्रथितेयं श्लोकैरिह पञ्चदश शतानि सार्धानि ॥
—सन्देहदोलावलीवृत्तिः

२ जैनेन्द्रागमतत्त्ववेदिभिरभिप्रेतार्थकल्पद्रुभिः । सद्भिः श्रीजिनभद्रसूरिभिरियं वृत्तिर्विशुद्धीकृता ॥
—सन्देहदोलावलीवृत्तिः

३ गणहरसुहम्मवंसे कमेण जिणरायसूरिसीसेहिं । पयरणमिणं हियट्ठं रइयं जिणभद्दसूरीहिं ॥
—जिनसप्ततिप्रकरणम्

४ श्रीखरतरगच्छेशश्रीमज्जिनभद्रसूरिशिष्याणाम् । जीरापल्लीपार्श्वप्रभुलब्धवरप्रसादानाम् ॥
श्रीग्यासदीनसाहेर्महासभालब्धवादिविजयानाम् । श्रीसिद्धान्तरुचिमहोपाध्यायानां विनेयेन ॥
साधुसोमगणीशेनाक्लेशेनार्थप्रबोधिनी । श्रीवीरचरिते चक्रे वृत्तिश्चित्तप्रमोदिनी ॥

* * * * * * * * *

चार्वी चरित्रपञ्चकवृत्तिर्विहिता नवैकतिथिवर्षे । हर्षेण महर्षिगणैः प्रवाच्यमाना चिरं जयतु ॥
—जिनवल्लभीयमहावीरचरितवृत्तिः

५ तस्य अष्टादश शिष्याः श्रीसिद्धान्तरुचिपाठक-श्रीकमलसंयमोपाध्यायादयो विद्वांसः ।
—पट्टावली ( विनयवल्लभीया )

६ चिन्तामणिः सम्प्रति भक्तिभाजां तपस्यया त्रासितदेवनाथः ।
दयोदयः प्रीणितसर्वलोकः सिद्धो गरीयाञ्जिनभद्रसूरिः ॥—धनदनीतिशतकम् (श्लो० ९४)

७ जयत्यतः श्रीजिनभद्रसूरिः श्रीमालवंशोद्भवदत्तमामः ।
गम्भीरचारुश्रुतराजमानस्तीर्थाटनैः सन्ततपूतमूर्तिः ॥
—काव्यमनोहरम् ( सर्ग ७, श्लो० ३५ )

जनितां जीर्णविशीर्णलुप्तप्रायां स्थितिं शृण्वतां केषां सहृदयानां बत! शोको न समुत्पद्येत ?। सङ्ग्रहकर्तॄणामुदारमाशयमनवबुध्यतां देश-क्षेत्र-काल-भावादिकमननुसरतां स्वयं तदुपयोगं कर्तुमशक्नुवतामन्यांश्चानुपयोजयतां पूर्वोक्तां दुरवस्थितिं दृग्गोचरीकुर्वतामपि भाण्डागाररक्षकाणां दुरन्ता गजनिमीलिका कस्य सहृदयस्य न दुःखाय ? । आशास्महेऽतः परमप्रसिद्धग्रन्थप्रकाशनप्रसङ्गे प्रशस्तपद्धत्या प्राचीनान् ग्रन्थान् प्रकाशयिष्यै विश्वासार्हायै संस्थाया आदर्शपुस्तकप्रेषणप्रदानप्रवणा प्रशस्ता मतिरेषां प्रादुर्भवेत् ।

## ( २ )

## तपागच्छ-भाण्डागारः ।

तपागच्छोपाश्रयस्थोऽयं भाण्डागारः केन कदा भृत इति स्फुटं न ज्ञायते, तथापि तपागच्छीयानन्दविमलसूरिशिष्यपं० वानरगणिशिष्यपं० आनन्दविजयगणिना सं. १६५९ वर्षे प्रतिमोचनेनायं चित्कोशो वृद्धिं प्रापितो ज्ञायते ( पृ. ५३,५५ ) । हीरविजयसूरिमूर्तिरेतदुपाश्रये वर्तते । सप्तदशशताब्द्यां तपागच्छीयसाधूनां विचरणमित आसीदिति स्पष्टमवबुध्यते । तपागच्छाश्रितः सुपार्श्वजिनालयस्त्वर्वाचीनः सं. १८६९ वर्षे प्रतिष्ठितः ( परि०२२ ) । बृहद्भाण्डागारादपि प्राचीनं सं. ११०९ वर्षे लिखितं पञ्चमीकहाग्रन्थस्य ताडपत्रीयमादर्शपुस्तकमत्र वर्तते ( पृ. ५२ ); अस्मादेवादर्शात् सं. १६५१ वर्षे पं० आनन्दविजयगणिशिष्यपं० बुद्धिविमलेनानुलेखिते पत्तनभाण्डागारस्थे पुस्तके तु सं. १००९ वर्षे तत्ताडपत्रपुस्तकलेखनं समसूचि । एतस्मात् प्राचीनं ताडपत्रपुस्तकं नाद्यावधि कुत्राप्युपलब्धं श्रुतं वाऽस्माभिः । सं. ११७५ वर्षे लिखिता हरिभद्रसूरिरचितपञ्चाशकानां प्रतिरपि प्राचीनाऽत्र वर्तते ( पृ. ५१ ) । एषां वृत्तिः सं. ११२४ वर्षे नवाङ्गवृत्तिकर्त्राऽभयदेवसूरिणा विहिता ।

## ( ३ )

## डुंगरजीयति-सङ्ग्रहः ।

जेसलमेरुदुर्गे विवेकसमुद्रगणिना सं. १३३४ वर्षे विहितायाः पुण्यसारकथायाः पुस्तकमत्र प्रेक्ष्यते । ऊनविंशशताब्दीप्रणीतानि पुस्तकान्यपि सङ्गृहीतान्यत्र विलोक्यन्ते । सङ्ग्रहकर्तृविषये ज्ञातव्यं न किञ्चिदपि ज्ञातम् ।

## ( ४ )

## थीरु( थाहरू )शाह-भाण्डागारः ।

प्रो. श्रीधरभाण्डारकरेण चीमनलालदलालेन चैतद्भाण्डागारस्वामिनो नाम 'थीरुशा' इति दर्शितम्, किन्तु शिलालेखाद्युल्लेखानुसारेण सप्तदशशताब्द्युत्तरार्धे विद्यमानो जेसलमेरुनिवासी जैनश्रेष्ठी थाहरूनामधेयः स विज्ञायते; येन सं. १६७५ वर्षे लोद्रवापत्तने चिन्तामणिपार्श्वजिनालयस्योद्धारः कारितः (परि० ६), चिन्तामणिपार्श्वजिनबिम्बमपि कारितम् । सं. १६८२ वर्षे यश्च सङ्घपतिर्भूत्वा शत्रुञ्जये गणधराणां पादुकाः स्थापयामास (एपिग्राफिआ इण्डिका २ । ६८) । यश्च पुनः सं. १६९३ वर्षे लोद्रवापुरि स्वजनश्रेयोऽर्थं नैकानि देवगृहानि कारयामास (परि० ७,८,९,१०,११,१२) ।

चतुर्ष्वप्येषु पुस्तकसङ्ग्रहेषु यानि पुस्तकान्यत्युपयुक्तान्यवगतानि, तानि सर्वाण्यपि दलालेन प्रायोऽत्र संसूचितानि । एतन्मध्यात् केचिद् ग्रन्थाः सूचिपत्रसङ्कलनकाले मुद्रिता आसन्,

केचिद् ग्रन्थाश्च सू.सङ्कलन-मुद्रणकालयोः षड्वर्षप्रमाणेऽन्तराले मुद्रितास्तेषां समुपवेशनं न नाम निरर्थकम्; यतस्तत्तद्ग्रन्थानां पुनर्मुद्रणादिप्रसङ्गेऽशुद्धिसंशोधनाय त्रुटित-स्खलितांशपरिपूर्तये क्वचित् सन्देहापनोदादिप्रयोजनाय च स्फुटं वरिवृतीत्यावश्यकता। अत्र निर्दिष्टाश्च ये ग्रन्था मुद्रिता ज्ञातास्तान् तत्रैव (मु.)संज्ञया समज्ञापयम्। सौकर्येण ग्रन्थनामज्ञानार्थं सर्वेषामपि प्रायः षट्शतीग्रन्थानां वर्णानुपूर्व्या सूचीं निबध्य प्रान्ते न्यवेशयम्, तत्राप्यप्रसिद्धग्रन्थान् चिह्नाङ्कितान् कृत्वा प्रादर्शयम्। तदनन्तरं तु जैन-जैनेतरग्रन्थकर्तॄणां तद्ग्रन्थनामोपेतानि नामानि समुपावेशयम्। अवशिष्टानीतिवृत्तोपयुक्तानि विशिष्टनामानि षड्विभागेन प्रान्ते समसूचयम्। अत्र सूचितान् विविधविषयकानप्रसिद्धान् अङ्गोपाङ्ग-मूलसूत्र-च्छेदसूत्र-प्रकीर्णकादिजैनसिद्धान्तग्रन्थान्, जैनन्याय-वादग्रन्थान्, बौद्ध-नैयायिक-वैशेषिक-साङ्ख्य-वेदान्तादिदर्शनग्रन्थान्, जैनद्रव्यानुयोग-गणितानुयोग-चरणकरणानुयोगोपदेश-धर्मकथानुयोगग्रन्थान् ,जैनेतरकथा-चरितादि, व्याकरण-काव्य-च्छन्दोऽलङ्कार-कोश-नाटक-प्रकीर्णग्रन्थान्, कल्प-मन्त्र-शकुन-काम-योग-स्तुति-स्तोत्रादिग्रन्थान्, गूर्जरभाषाग्रन्थांश्च पृथक्कृत्य यथाविषयं विभज्य यावज्ज्ञातं तत्तद्विषयकं रचनासमयपौर्वापर्यमनतिक्रम्य च ग्रन्थकर्तृपरिचयेन साकं पृथक् पर्यचाययम्,यथाप्रसङ्गं पूर्वसूचिपत्रजाः स्खलनाश्च तत्रैव समशोधयम्। विक्रमीयपञ्चदशशताब्द्या ऊनविंशशताब्दीं यावज्जातानां लक्ष्मण-वैरिसिंह-चाचिगदेव-देवकर्ण-जयतसिंह-लूणकर्ण-कल्याणाक्षयसिंह-मूलराजसंज्ञकानां जेसलमेरुपुरीयनृपाणां तत्पूर्वजानां च सत्तासमयादि परि० १,२,३,४,५,१३,१४,१५,१६,१७,१८,१९,२१,२२ लेखपरिपठनेन ज्ञास्यत इति नात्र पुनरुल्लिख्यते।

जेसलमेरुदुर्गे गत्वा येनैतत् सूचिपत्रं परिश्रमेण सङ्कलितम् ,यशःशेषः स **श्रीमनलालदलाल**-महाशयः, यैश्चैतत्कार्येऽनल्पां सहायतां वितीर्यैतत्पन्था निर्विघ्नं सुसरलो व्यधायि; तेऽर्बुदगिरिप्रष्ठाधिकारिणः ( **जोधपुररेसिडेन्सी** ), भाण्डागारनियुक्ताश्च कथं नाम धन्यवादं नार्हन्ति ?।

कार्ये चास्मिन् प्रसङ्गोचितं साहाय्यं प्रदाय येनाहं प्रोत्साहितस्तस्यैतत्संस्कृतपुस्तकालयाध्यक्षस्य ( संस्कृतलाइब्रेरियन् ) एम्. ए. पदप्रतिष्ठितस्य **जी. के. श्रीगोन्देकरमहाशयस्य, के. पी. मोदी.** बी. ए. एल्. एल्. बी. इत्यस्य, **के. रङ्गस्वामिप्रभृतेस्तथा** स्वसङ्ग्रहपुस्तकानि प्रदर्शयित्रोः प्रवर्तक**कान्तिविजय-हंसविजयमुनीशयो**श्चोपकृतिः स्मृतिपथात् कथमपि नापैति।

सावधानतया प्रयत्नेन संशोध्य कृतेऽप्यत्युपयोगिन्यस्मिन् कर्तव्ये मम मतिमान्द्यात् प्रमादाद् वा जाता याः काश्चन स्खलना मतिमतां मतिमार्गारूढा भवेयुस्ताः प्रकृतिकृपालवः परिश्रमवेदिनः सहृदयाः 'न हि सर्वत्र पाण्डित्यं सुलभं पुरुषे क्वचित्' इत्यभियुक्तोक्तिं हृद्यवधार्य संशोधयिष्यन्ति मां च संसूचयिष्यन्तीत्याशास्ते—

ता. १-९-२२<br>सेन्ट्रल लाइब्रेरी,<br>**बड़ोदा.**

गान्धीत्युपाह्वो भगवान्दासतनुजः<br>**लालचन्द्रः**

---

# अप्रसिद्धग्रन्थग्रन्थकृत्परिचयः ।

## जैनसिद्धान्तग्रन्थाः ।

### अङ्गम् ।

उपासकदशाचूर्णिः ( ? कथाः )    क्रमाङ्कः १० (३)

यद्यपि ची. दलालेनात्र 'सप्तमाङ्गचूर्णिः' इत्युल्लेखं दृष्ट्वैतदेव नाम सूचितम्, एवं ही. सूचिपत्रेऽपि, किन्तु न चैवम् । 'जस्स०' इत्यादिना दर्शितायाः प्रारम्भगाथाया अनन्तरगाथायामानन्दादीनां दशानामुपासकानां संक्षिप्तकथा अभिधेयत्वेनाभिहिताः । तत्प्रान्ते च कर्त्रा स्वस्य जिनपतिसूरिशिष्यत्वं, पूर्णभद्रगणिरिति नाम, सं० १२७५ वर्षे चासां सप्तमाङ्गानुसारेण रचनेत्यादि सर्वं स्पष्टं निवेदितं दृश्यते H. आदर्शपुस्तके । तत्र कथाप्रारम्भात् प्राक् कथासङ्ग्राहिकाः षोडश गाथाः सन्ति । सप्तदशगाथाया आरभ्य सप्तविंशत्यधिकशत-गाथापर्यन्तं प्रथमकथा । तदनन्तरं च क्रमेण १३,११,५,६,२३,८८,५७,५,५ गाथापरिमिता नव कथा वर्तन्ते । कथासमाप्तौ पुस्तिकालेखयितुर्भुवनपालस्य दशसु काव्येषु प्रशस्तिस्तदनन्तरं चोपासकदशाङ्गस्य विषमपदपञ्जिकारूपा संक्षिप्ताऽवचूरिर्वर्तते सैवात्र सप्तमाङ्गचूर्णित्वेन केनाप्युपलक्षिता ।

---

१ "आणंदाईण दसण्हं उवासगाणं कहाओ वुच्छामि ।
दट्ठूण सत्तमंगं समासओ आयसरणत्थं ॥" H.

२ "आणंदाईण एयं सुचरियदसगं सत्तमंगाणुसारा
संखेवेणं विचित्तं कयमिह गणिणा पुन्नभद्देण भद्दं ।
सीसेणं वाइविंदप्पहुजिणवइणो विक्कमाइच्चवासे
षट्टंते वाण-सेलासिसिरकरमिए कण्हछट्ठीए जिट्ठे ॥" H.

३ "गुरुग(गि)रिविहितास्थपुण्यपर्वप्रवालः
सुभगविमलमुक्ताशब्दधर्मैकहेतुः ।
सफलमृदुलताढ्यः स्फारतेजोविभूति-
स्त्रिजगति वरवर्ति श्रीमदूकेशवंशः ॥ १ ॥
साधुस्तत्र बभूव भूमिविदितः क्षेमंधरः श्रीधरः
सत्यासक्तमना वृषप्रणयवान् कौमोदकीभावभृत् ।
यश्चकेऽजमेरुनाम्नि नगरे श्रीपार्श्वनेतुः पुरः
प्रेम्णा सद्व्रजकष्टवृष्टिहतये शैलं महामण्डपम् ॥ २ ॥
ऋजुस्व(?)स्य महोदधेर्बहुतरा रत्नोपमाः सूनवः
संपूर्णा गुणसङ्गजैः[:] सुरुचयो देवश्रियः कुक्षिजाः ।
कोप्य(प्ये)तेषु जगद्धरः सुकृतिनामग्रेसरः कौस्तुभः
श्रीश्रीमत्पुरुषोत्तमैकहृदये वासित्वमेयो(?) गुणः ॥ ३ ॥

## उपाङ्ग-व्याख्याग्रन्थाः ।

### जीवाभिगमलघुवृत्तिः ( हारिभद्री )[1] क्र. २५८(१)

एतद्वृत्तिकारश्चतुर्दशशतप्रकरणकृत्त्वेन सुप्रसिद्धो विरहाङ्कपदोपलक्षितो विद्याधरकुलतिलको जिनभटनिगदानुसारी जिनदत्ताचार्यशिष्यो याकिनीमहत्तराधर्मपुत्रो हरिभद्रसूरिः, यस्य सत्ता विवादास्पदाऽप्यस्मदभिप्रायेणाष्टम-नवमशताब्दीमध्यकालरूपा युक्तियुक्ता प्रतिभाति । यतो वि. सं. ७३३ वर्षे रचिताया निशीथचूर्ण्या अवतरणानि हरिभद्रसूरीयावश्यकवृत्तौ दृश्यन्ते, वि. सं. ८३५ वर्षे कुवलयमालायाः कर्ता दाक्षिण्यचिह्नसूरिश्चेमं स्मरति स्मातस्तन्मध्यकालीनोऽयमिति स्पष्टम् ।

---

श्रीमत्पार्श्वस्य नेतुः सदनममदनं भव्यनेत्रादुमित्रं
पुर्यां श्रीजेसलस्य व्यरचयदचिराच्चामितो भूषणानि ।
गेहे साधर्मिकोर्वीरुहवनमनु चाच्छिन्नवात्सल्यकुल्या-
पूरेणावीवहद् यो मरुषु किमपरं प्राप कल्पद्रुमलम् ॥ ४ ॥

शालीनतालीश्रीशीलं सदात्मजमपालयत् ।
तस्य सालहीनाम्ना सा बभूव सधर्मिणी ॥ ५ ॥

तस्यासतेऽक्षतनयास्तनयास्त्रयोऽमी
तेषामयं धुरि यशोधवलो यशोऽब्धिः ।
माध्यंदिनो भुवनपाल इलापसंस-
दुज्ज्वलकीर्त्तिरनुजः सहदेव एषः ॥ ६ ॥

इह भुवनपालः प्रीतदिक्चक्रवालः
सुगुरुजिनपतीशस्तूपमूर्ध्नि ध्वजस्य ।
विघटितमधिरोहं कारयामास यश्चा
जिनपतिरथयानं चक्रवर्त्तीव पद्मः ॥ ७ ॥

तस्य प्रिया त्रिभुवनपालधीदा रघुप्रभोरिव जनकस्य धीदा ।
पुत्रद्वयं समजनि खीम्बसिंहाभयाह्वयं कुशलवलीलमस्य ॥ ८ ॥

स धन्यकृतपुण्यतां सततशालिभद्रात्मतां
किलातनितुमात्मनो मुनिचरित्ररम्यामिमाम् ।
सुधार्मिकजनव्रजोपवनसारणिः श्रीभरः
स्म लेखयति पुस्तिकां भुवनपालसाधुर्मुदा ॥ ९ ॥

मेघस्यांबुदवृंदमुक्तसलिला पूरे मणिज्योतिरु-
द्योतिच्छत्रपरीतचक्रिपृतनाभृच्चर्मरत्नश्रियम् ।
मध्येऽम्भोधिमहीतलं दिनमणी भास्वन्नभः संवृतं
यावद् नन्दति तावदत्र जयतादेषाऽधिकं पुस्तिका ॥ १० ॥ H.

[1] जी० वृत्तिर्हारिभद्री प्रदेशवृत्तिनाम्नी ११९२।'—बृ०

प्रज्ञापनालघुवृत्तिः (वृत्तिः)। [ हरिभद्रसूरिः ] क्र. १११(२),११८
ले. सं. १३७८ जम्बूद्वीपप्रज्ञप्तिचूर्णिः क्र. १९१(२),२५५(२),२५८
(३),३३०(१) [ P. P. ३।१४४ ]

जम्बूद्वीपप्रज्ञप्तिवृत्तिः क्र. ३६,६५

इयं मलयगिरीयाऽनुमीयते। अन्यत्र दुर्लभेयम्।

वृ. सं. १६४५ जम्बूद्वीपप्रज्ञप्तिवृत्तिः। पुण्यसागरोपाध्यायः पृ. ४६

वृत्ते रचना जेसलमेरुदुर्गे भीमभूमिपतिराज्ये इति प्रान्ते सूचितम्। वृत्तिकारोऽयमाचाराङ्गदीपिकाकर्तुर्बृहत्खरतरगच्छीयजिनहंससूरेः शिष्यः, येन सं. १६४० वर्षे जिनवल्लभसूरीयप्रश्नोत्तरकाव्यस्यापि वृत्तिरक्रियत। सं. १६२४ (?४४) वर्षे रचितदण्डकजिनस्तुतिवृत्तिकर्ता पद्मराजगणिरस्य शिष्यः (P. P. ६,४७), सं. १६६० वर्षे गौतमकुलकवृत्तिकारो ज्ञानतिलकगणिश्चास्य प्रशिष्यः।

चन्द्रप्रज्ञप्तिसूत्रम् क्र. २४१ [ A. ८।११३ ]

चन्द्रप्रज्ञप्तिटीका। मलयगिरिः क्र. २०६ [ A. ८।११४ ]

---

## मूलसूत्रव्याख्याग्रन्थाः।

(१)

विशेषावश्यकवृत्तिः। जिनभद्रः क्र. ७४

भाष्यकार एवास्याः कर्ता ज्ञायते। मलधारिहेमचन्द्रसूरिणाऽस्याः संस्करणमकारि। दुर्लभेयमन्यत्र। 'सूत्रकारपरमपूज्यश्रीजिनभद्रगणिक्षमाश्रमणप्रारब्धा समर्थिता श्रीकोट्टा(ट्या)चार्यवादि(हरि)गणिमहत्तरेण श्रीविशेषावश्यकलघुवृत्तिः।'—इति पत्तनप्रतिप्रान्त उल्लेखो दृश्यते।

---

१ "जयति हरिभद्रसूरिष्टीकाकृद् विवृतविषमभावार्थः।
यद्वचनवशादहमपि जातो लेशेन वृत्तिकरः॥"—प्रज्ञापनाटीकायां मलयगिरिः
'प्र० लघुवृत्तिर्हारिभद्री ३७२८।'—बृ०

२ 'ज० चूर्णिः १८७९।'—बृ०। ३ 'ज० वृत्तिर्मलयगिरीया ९५००।'—बृ०

"उपाङ्गानां च मध्ये प्रथममुपाङ्गं श्रीअभयदेवसूरिभिर्विवृतम्। राजप्रश्नीयादीनि षट् श्रीमलयगिरिपादैर्विवृतानि। पञ्चोपाङ्गमयी निरयावलिका च श्रीचन्द्रसूरिभिर्विवृता। तत्र प्रस्तुतोपाङ्गस्य वृत्तिः श्रीमलयगिरिकृताऽपि सम्प्रति कालदोषेण व्यवच्छिन्ना।"
—जम्बूद्वीपप्रज्ञप्तिवृत्तौ शान्तिचन्द्रवाचकः

४ 'चन्द्रप्रज्ञप्तिसूत्रम् २०५४। वृत्तिर्मलयगिरीया ९५००।'—बृ०

५ "क्व श्रीजिनभद्रगणेः पूज्यस्यैतानि भाष्यवचनानि।
तर्कव्यतिकरदुर्गाण्यतिगम्भीराणि ललितानि॥
विवृतानि स्वयमेव हि कोट्याचार्यैश्च बुधजनप्रवरैः।"—विशेषावश्यकबृहद्वृत्तिः

विशेषावश्यकवृत्तिः । हरिभद्रसूरिः ? क्र. ३०८

द्वितीयखण्डरूपेयं प्रसिद्धा मलधारिहेमचन्द्रसूरिकृताऽथवा हरिभद्रसूरिविरचिताऽऽवश्यकवृत्तिः सम्भाव्यते; यतो हरिभद्रसूरिविहिता विशेषावश्यकवृत्तिर्न श्रूयते ।

---

आवश्यकचूर्णिः[1] क्र. २८८ [ P. P. ३।१८३ ]

चूर्णिकारो जिनदासमहत्तर इति प्रघोषः ।

आवश्यकबृहद्वृत्तिः (वृत्तिः[2]) । मलयगिरिः क्र. १५९,३२०,३४२. ७३(२),८६(२),९१ क्रमाङ्केषु कर्तुर्नाम न दृश्यते । सुप्रसिद्धस्यास्य जैनागमवृत्तिकारस्य सत्ता कुमारपालनृपसत्तायामित्येतत्कृतस्य मलयगिरिशब्दानुशासनस्यान्तर्वर्तिनाऽरुणत् कुमारपालोऽरातीन् इति दृश्यार्थत्याद्यन्तोदाहरणेन, कुमारपालप्रबन्धादौ हेमचन्द्राचार्येण सममस्य विहारादिवर्णितत्वेन चावसीयते । विदुषश्चास्य कृतिसंहतिरत्र ग्रन्थकृन्नामसूच्यां ( पृ. ९० ) सूचिता, ओघनिर्युक्तिवृत्ति–कर्मप्रकृतिवृत्ति–धर्मसङ्ग्रहणिवृत्ति–धर्मसारटीका–भगवतीद्वितीयशतकवृत्ति–विशेषावश्यकवृत्ति–षडशीतिवृत्ति–सप्ततिकावृत्त्याद्याऽपराऽपि वर्तते ।

[ वृ. सं. १२९६ ] आवश्यकलघुवृत्तिः[3] । तिलकाचार्यः क्र. ७६,३२१ [ P. P. १।६;४।७४, A. १०।१६ ]

वृत्तिकारोऽयं श्रीपदविशिष्टश्चन्द्रगच्छीयचन्द्रप्रभसूरिसन्तानीयशिवप्रभसूरेः शिष्यः, अस्यां वृत्तौ सहायकस्य पद्मप्रभसूरि–यशस्तिलकादेश्च गुरुः । अनेन सूरिणा सं. १२६१ वर्षे प्रत्येकबुद्धचरितम्, सं. १२७४ वर्षे जीतकल्पवृत्तिः, सं. १२७७ वर्षे सम्यक्त्वप्रकरणवृत्तिः, सं. १३०४(?) वर्षे दशवैकालिकटीका सामाचारी–श्रावकप्रायश्चित्तसामाचारी–पौषधिकप्रायश्चित्तसामाचारी–चैत्यवन्दना–वन्दनक–प्रत्याख्यानलघुवृत्ति–श्रावकप्रतिक्रमणसूत्रवृत्ति-साधुप्रतिक्रमणसूत्रवृत्ति–पाक्षिकसूत्र–पाक्षिकक्षामणकावचूर्यादयश्च ग्रन्था जग्रन्थिरे ।

---

व्या. सं. ११२२ आवश्यकव्याख्या ( प्रतिक्रमणसूत्रपदविवृतिः[4] ) । नमिसाधुः क्र. २१७,१६२(१)

हरिभद्रसूरिरचितावश्यकटीकांशरूपेयम् । विवृतिकारोऽयं थारापद्रपुरीयगच्छीयशालि-( शालिभद्र )सूरेः शिष्यः, येन विदुषा सं. ११२५ वर्षे रुद्रटालङ्कारटिप्पनमकारि ।

यतिप्रतिक्रमणवृत्तिः क्र. १६६(२)

---

१ 'आ० वरावचूर्णिरष्टादशसहस्रप्रमाणा पूर्वर्षिविहिता'—सिद्धान्तागमस्तवावचूरिः 'आवश्यकचूर्णिः १३६००,१८४७४ ।'—बृ०

२ 'आवश्यकवृत्तिर्मलयगिरीया १८००० ।'—बृ०

३ "शतद्वादशकेऽब्दानां गते विक्रमभूभुजः ।
संवत्सरे षण्णवतौ वृत्तिरेषा विनिर्ममे ॥ —आ० प्रशस्तिः P. P. ४।७५
'आ० लघुवृत्तिः श्रीतिलकीया १२९६ वर्षे कृता १२३२५ ।'—बृ०

४ 'साधुप्रतिक्रमणादिषड्विधावश्यकसूत्रवृत्तिः नमिसाधुना सं. ११२३(२) वर्षे कृता १५५० ।'—बृ०

इयमावश्यकबृहद्वृत्तिगताऽथवा तिलकाचार्य-जिनप्रभाचार्यादिविहितेति स्फुटं नैव ज्ञायते।

पाक्षिकप्रतिक्रमण(?सूत्र)चूर्णिः क्र. १७०(३)

[ वृ. सं. १२२२[1] ] श्रावकप्रतिक्रमणसूत्रवृत्तिः । श्रीचन्द्रसूरिः क्र. ४७(२)

अयं वृत्तिकारश्चन्द्रकुलोद्भवशीलभद्रसूरिशिष्यधनेश्वरसूरेः शिष्यः, यस्य सामान्यावस्थायां पार्श्वदेवगणिरिति नामासीत् । अनेनैतदतिरिक्ता सं. ११६९ वर्षे न्यायप्रवेशकवृत्तिपञ्जिका, सं. ११७१ वर्षे स्वगुरोर्धनेश्वरसूरेः सार्धशतकवृत्तौ सहायता, सं. ११७३ वर्षे निशीथचूर्णि-विंशोद्देशकवृत्तिः, ले. सं. १२२६ नन्दीटीकादुर्गपदव्याख्या, सं. १२२७ वर्षे जीतकल्पबृहच्चूर्णिव्याख्या, सं. १२२८ वर्षे निरयावली(पञ्चोपाङ्ग)वृत्तिः, चैत्यवन्दनसूत्रवृत्ति-प्रतिष्ठाकल्प-सर्वसिद्धान्तविषमपदपर्याय-सुखबोधा सामाचार्यादयश्च नैके ग्रन्था विदधिरे ।

---

ले. सं. १३२९ सङ्घाचारभाष्यम् क्र. १५३

इदं शान्तिसूरिकृतं साम्प्रतं मुद्रितं तदेव वाऽन्यदिति निश्चेतव्यम् ।

शक्रस्तवादि(चैत्यवन्दनसूत्र)विवरणम् । प्रद्युम्नसूरिः ? क्र. १२२(१)

चैत्यवन्दनसूत्रव्याख्या(?) क्र. १२२(२)

वि. सं. ११७४ चैत्यवन्दनाचूर्णिविवरणम् । यशोदेवसूरिः[3] क्र. १७०(१)

ही. सूच्यां, 'S. २१२८' इत्यत्र चास्य कर्ता यशःप्रभसूरिर्निर्दिष्टो न सम्यक् ।

चैत्यवन्दनसूत्रवृत्तिः । श्रीचन्द्रसूरिः क्र. ४७(१)

वृत्तिकारोऽयं द्वादशशताब्द्युत्तरार्धे त्रयोदशशताब्दीप्रारम्भे च विद्यमानः शीलभद्रसूरि-शिष्यधनेश्वरसूरेः शिष्य आसीद् यस्य कृतिसंहतिरुपरि प्रदर्शिता ।

सङ्घाचारटीका । [ धर्मघोषसूरिः[4] ] पृ. ५४ [ P. P. १।१४ ]

---

सं. ११८२ पच्चक्खाणसरूवम् । यशोदेवसूरिः[5] क्र. १७०(२)

'P. P. १।७६' इत्यत्र 'भणियं जसभद्दसूरीहिं' इति प्रान्तपाठविलोकनादस्य यशोभद्रसूरि-रित्यपरं नाम सम्भाव्यते ।

---

१ "करनयनसूर्यवर्षे प्रातः पुष्यार्कमधुसितदशम्याम् ।
धृतियोगनवमकक्षे समर्थिता प्रकृतवृत्तिरियम् ॥"—P. श्रा० प्रान्ते
'श्रावकप्रतिक्रमणसूत्रवृत्तिः १२२२ वर्षे श्रीचन्द्रीया १९५० ।'—बृ०

२ 'चैत्यवन्दनामहाभाष्यं श्रीशान्तीयं सूत्रव्याख्याचरणादिवाच्यम्
'महामहपणमंत' इत्यादिपदम् गाथा ९२२ ।'—बृ०

३ 'ईर्या० १५०, चैत्य० ८४०, वन्द० ७२७ चूर्णयः ११७४ वर्षे यशोदेवकृताः ।'—बृ०

४ 'चैत्यवन्दनाभाष्यवृत्तिः संघाचारनाम्नी तपाश्रीधर्मघोषसूरिकृता ८५०० ।'—बृ०

५ 'प्रत्याख्यानस्वरूपं यशोदेवकृतम् गाथा ३६० ।'—बृ०

( २ )

दशवैकालिकचूर्णिः[1] क्र. २५४(२),२७१

दशवैकालिकटीका । सुमतिगणिः(?सूरिः)[2] क्र. १६०

इयं हारिभद्रीयदशवैकालिकानुयोगात् पृथक्कृता सूत्रव्याख्या । वृत्तिकारोऽयं सुमतिसूरिः स्वं वाचकशिष्यत्वेन निर्दिशति स्म । सं. ११८८ वर्षे लिखिताऽस्याः प्रतिः पत्तने वर्ततेऽतोऽस्य सूरिवर्यस्य प्राचीनता प्रतीयते ।

दशवैकालिकटीका । तिलकाचार्यः[3] क्र. १३२(१) [ P. P. ३।४९;५।६५ ]

टीकाकारोऽयं चन्द्रगच्छीयचन्द्रप्रभसूरिसन्तानीयशिवप्रभसूरेः शिष्यस्त्रयोदशशताब्द्या उत्तरार्धे विद्यमान आसीद् यद्ग्रन्थाः पूर्वं ( पृ. २० ) दर्शिताः ।

( ३ )

ओघनिर्युक्तिभाष्यम् क्र. १४४(१)

अन्यत्र[4] दुष्प्रापमेतत् ।

( ४ )

पिण्डनिर्युक्तिविवरणम् ( ०लघुवृत्तिः[5] ) क्र. २७२,३१७(२)

पिण्डनिर्युक्तिवृत्तिः ( शिष्यहिता ) क्र. ८०

( ५ )

ले. सं. १२२६ नन्दी[टीका[6]]दुर्गपदव्याख्या । श्रीचन्द्रसूरिः

क्र. २०१ [ P. P. ५।२०२ ]

( ६ )

अनुयोगद्वारचूर्णिः । [ जिनदासगणिमहत्तरः[7] ] क्र. १४४(२) [P. P. ३।१८५]

अनुयोगद्वारटीका । हरिभद्रसूरिः क्र. १९२(२)

इयं लघुवृत्तिसंज्ञिता[8] दुर्लभा ।

---

१ 'दश० चूर्णिः ७०००,७९७० ।'—बृ०

२ 'दश० लघुवृहद्वृत्त्युद्धाररूपा सुमतिसूरीया २६०० ।'—बृ०

३ 'दश० वृत्तिः श्रीतिलकीया नेमिचरित्रगर्भा ७००० ।'—बृ०

४ 'ओ० भाष्यम् ३००० नास्ति ।'—बृ०

५ 'पिं० वृत्तिर्नास्ति ४००० । लघुवृत्तिराद्या तत्राद्यानि १३५० हारिभद्राणि, शेषाणि तु १७५० देवाचार्यशिष्यवीराचार्यकृतानि ३१०० ।'—बृ०

६ 'नं० लघुवृत्तिर्नास्ति २३०० प्रमाणा । टिप्पनकं श्रीचन्द्रीयमाद्यावृत्तिसत्कम् ३३०० ।'—बृ०

७ 'अ० चूर्णिर्जिनदासमहत्तरीया २२६५ ।'—बृ०

८ 'अ० लघुवृत्तिर्नास्ति ।'—बृ०

(७)

उत्तराध्ययनचूर्णिः[1]　　　　क्र. २७०

चूर्णिकारो गोवालियमहत्तरशिष्य इत्यन्यत्र प्रतिपादितम् ।

[ सं. ११२९[2] ]　उत्तराध्ययनटीका ( सुखबोधा ) । नेमिचन्द्रसूरिः

क्र. १०२(२),१८७,३४४

टीकाकारोऽयं सूरिवर्यो वड( बृहद् )गच्छीयोद्योतनसूरिशिष्याम्रदेवोपाध्यायस्य शिष्यो देवेन्द्रगण्यपराह्वः । महावीरचरियनाम्नी यस्य कृतिः सं. ११३९ वर्षे निष्पन्ना प्रसिद्धा । इतराऽऽख्यानमणिकोश-रत्नचूडचरितादिकाऽन्यत्र ( P. P. ३।८० ) प्रादर्शि ।

छेदसूत्र-व्याख्याग्रन्थाः ।

(१)

निशीथम्[3]　　　　क्र. २४३(२) [ P. P. १।८८ ]

निशीथभाष्यम्[4]　　　　क्र. २०८,२३० [ P. P. ५।१०० ]

निशीथचूर्णिः　　　　क्र. ४४,१०१

चूर्णिकृत्त्वेन जिनदासमहत्तरस्य प्रसिद्धिः । शकसं. ५९८=वि. सं. ७३३ वर्षे समाप्ताऽस्य महत्तरस्य नन्द्यध्ययनचूर्णिरुपलभ्यतेऽतो वैक्रमाष्टमशताब्दीपूर्वार्धेऽस्य सत्ता सम्भाव्यते ।

निशीथचूर्णिः ( प्रथमखण्डः ) } क्र. २०७ [ P. P. ५।१०१ ]
निशीथविशेषचूर्णिः ( द्वितीयखण्डः ) } क्र. ३१८

(२)

महानिशीथम्[5]　क्र. २४५(२), पृ. ५१ [P. P. १।८७; A. १०।१०]

महानिशीथचूर्णिः　　　　क्र. ६०,२४५(१)

इयं नान्यत्रोपलभ्यते ।

(३)

बृहत्कल्पसूत्रम्[6]　　　　क्र. २४०(१) [ A. ९।२०६ ]

बृहत्कल्पभाष्यम्[7]　　　　क्र. ४१,२४०(२) [ P. P. ४।१५३ ]

---

१ 'उ० चूर्णिर्गोवालियमहत्तरशिष्यकृता ५९००,५८५० ।'—बृ०

२ 'उ० लघुवृत्तिः ११२९ वर्षे देवेन्द्रगण्यपरनामश्रीनेमिचन्द्रसूरीया ससूत्रा १४००० ।'—बृ०

३ 'निशीथसूत्रं विंशोद्देशमयम् ८१२,९५० ।'—बृ०

४ 'नि० भाष्यम् ७००० ।'—बृ०

५ 'महानिशीथसूत्रं लघुमध्यमबृहद्वाचनम् ३५००,४२००,४५४४ ।'—बृ०

६ 'कल्पसूत्रं षडुद्देशमयम् ४७३ ।'—बृ०

७ 'क० बृहद्भाष्यम् १२००० ।'—बृ०

लघुकल्पभाष्यम्[1] क्र. ९,३२९ [ P. P. ३।१५३ ]
कल्पचूर्णिः क्र. २९७ [ P. P. ३।१७०,१७७ ]

चूर्णिकारोऽयं प्रलम्बसूरिरिति D. सूच्यां निर्दिष्टम् ।

कल्पचूर्णिवृत्तिः क्र. ६४

क्षेमकीर्तिवृत्तित इयं भिन्ना अभिन्ना वेति निर्णेतव्यम् ।

ले. सं. १३७८ बृहत्कल्पपीठिका । मलयगिरिः क्र. १९३(१)
[ सं. १३३२ ][2] बृहत्कल्पवृत्तिः । क्षेमकीर्तिः क्र. ७९,१२९,१९३(२), २८७,३३५,३३८. [ P. P. ५।१०१; A. ९।२०७ ]

मलयगिरिप्रारब्धटीकाऽनुसन्धाताऽयं वृत्तिकारश्चैत्रगच्छीयविजयेन्दुसूरिशिष्य आसीत् ।

( ४ )

व्यवहारभाष्यम्[3] क्र. ३२३(१),३४०(१)
व्यवहारचूर्णिः[3] क्र. १७२ [ P. P. ३।१७१ ]
व्यवहारविवरणम् क्र. ३२३(२)
व्यवहारवृत्तिः[3] । मलयगिरिः क्र. ७५,१६१,२९२ [ P. P. १।१३; ३।६३,१५७ ]

( ५ )

पञ्चकल्पभाष्यम् । [सङ्घदासक्षमाश्रमणः][4] क्र. ३३९(२) [ P. P. ३।१७८;४।१०३ ]
पञ्चकल्पचूर्णिः[4] क्र. ३३९(३) [ P. P. ३।१७१ ]
जीतकल्पभाष्यम्[5] (?) क्र. १३६

( ६ )

दशाश्रुतस्कन्धसूत्रनिर्युक्तिचूर्णिः[6] क्र. ३३९(१),३४०(२) [ P. P. ३।१४२,१८१; ४।१०० ]

---

१ 'क० भाष्यम् ७६०० ।'—बृ०

२ 'कल्पवृत्तिः सूत्रभाष्यगर्भा । आद्या ४६०० मलयगिरीया, शेषा तु १३३२ वर्षे तपाक्षेमकीर्तीया ४२००० ।'—बृ०

'श्रीविक्रमतः क्रामति नयनाग्निगुणेन्दुपरिमिते वर्षे । ज्येष्ठश्वेतदशम्यां समर्थितैषा च हस्तार्के ॥' —P. P. ५।१०४

३ 'व्य० भाष्यम् ६४०० । चूर्णिः १२००० । व्यवहारवृत्तिः सूत्रभाष्यगर्भा मलयगिरीया ३३(४)६२५ ।'—बृ०

४ 'पञ्चकल्पसूत्रं ११३३ । भाष्यं सङ्घदासगणिकृतम् गाथा २५७४,३०३५ । चूर्णिः ३०००, ३१३६ ।'—बृ०

५ 'जीतकल्पसूत्रं जिनभद्रीयम् गाथा १०५ । भाष्यम् ३१२५ नास्ति ।'—बृ०

६ 'दशाश्रुतस्कन्धसूत्रं दशाध्ययनमयम् २१०६,२२२५ । निर्युक्तिः १५४,२२० । चूर्णिः ४३२१ ।'—बृ०

कल्पटिप्पनम् । पृथ्वीचन्द्रसूरिः क्र. १३२(३) [P. P. १।१३;३।१५,३०७]

P. P. १।६९ इत्यत्रास्य कर्ता देवसेनगणिर्दर्शितो न सम्यग्, टिप्पनकारोऽयं स्वयं देवसेनगणिशिष्यत्वं प्रतिपन्नवान्; तथैव चान्यत्र सम्यग् दर्शितम् ।

प्रकीर्णके ।

अङ्गविद्या क्र. १३३ [P. P. ३।२३१]

वीरसूरिणाऽस्या अध्ययनमकारि; यस्य जन्म सं. ९३८ वर्षे, दीक्षा सं. ९८० वर्षे, स्वर्गमनं च सं. ९९१ वर्षे बभूव इत्यन्यत्र (प्रभा० पृ. २०८) वर्णितम् ।

ज्योतिष्करण्डटीका । मलयगिरिः क्र. २३३

सर्वसिद्धान्तविषमपदपर्यायः क्र. १९७

अस्मिन् ग्रन्थे सर्वेषां जैनसिद्धान्तानां विषमपदानि परिस्फुटानि कृतानि विलोक्यन्ते । श्रीचन्द्रसूरि(पृ. २१)कृतोऽयं ग्रन्थ इति जैनग्रन्थावल्यादौ निरदेशि ।

जैनन्यायग्रन्थाः ।

सम्मतिटीका ( तत्त्वबोधविधायिनी ) । अभयदेवसूरिः

क्र. १०२(१) [A. १०।३९]

सिद्धसेनदिवाकरकृतं मूलं तु मुद्रितम् । टीकैषांऽशतो यशोविजयजैनग्रन्थमालया प्रकाशिता । टीकाकारोऽयमभयदेवसूरी राजगच्छीयप्रद्युम्नसूरिशिष्यः । वादमहार्णवग्रन्थोऽस्य कृतित्वेनान्यत्र (प्रभा० प्रशस्तिः, P. P. ३।१५९) दर्शितः । मुञ्जनृपसभायां वादिविजेता धनेश्वरसूरिरस्य शिष्य आसीदिति सूरिशेखरस्यास्य सत्ता विक्रमीयदशमशताब्द्यां सम्भाव्यते ।

ले. सं. ११७१ अनेकान्तजयपताकावृत्तिटिप्पनम् । मुनिचन्द्रसूरिः

क्र. २९१ [P. P. ३।१९४]

विरहाङ्कहरिभद्रसूरिकृतं मूलम्, परिच्छेदत्रयपर्यन्तं स्वोपज्ञविवरणं च मुद्रितम् । टिप्पनकारोऽयं मुनिचन्द्रसूरिः सुप्रसिद्धस्य वादिदेवसूरेर्गुरुः । अनेन सं. ११७४ वर्षे उपदेशपदवृत्तिर्व्यरचि । एतदतिरिक्ता धर्मबिन्दुवृत्तिः, ललितविस्तरापञ्जिका, अङ्गुलसप्ततिः, वनस्पतिसप्ततिः,

---

१ 'पर्युषणा० कल्पटिप्पनकं पृथ्वीचन्द्रीयम् ६४० ।'—बृ०

२ 'अङ्गविद्या षष्टिअ(ध्य)ध्यायात्मिका ९००० ।'—बृ०

३ 'ज्योतिष्करण्डवृत्तिः ससूत्रा मलयगिरीया सू. १८५०, वृ. ५००० ।'—बृ०

४ 'सम्मतिसूत्रं सिद्धसेनदिवाकरकृतम् गा. १०७ । सम्मतिवृत्तिः काण्डत्रयोपेता प्रद्युम्नशिष्याभयदेवीया २५००० ।'—बृ०

५ 'अनेकान्तजयपताकावृत्तिर्हारिभद्री ८२५०, तट्टिप्पनकं मौनिचन्द्रम् २००० ।'—बृ०

"हरिभद्रसूरिरचिताः श्रीमदनेकान्तजयपताकाद्याः ।
ग्रन्थनगा विबुधानामप्यधुना दुर्गमा येऽत्र ॥
सत्पञ्जिकादिपद्याविरचनया भगवता कृता येन ।
मन्दधियामपि सुगमास्ते सर्वे विहितबुद्धीद्धाः ।"—गुर्वावल्यां मुनिसुन्दरसूरिः ।

पाक्षिक(आवश्यक)सप्ततिः, कर्मप्रकृतिचूर्णिटिप्पनकम्, गाथाकोषः, मोक्षोपदेशपञ्चाशत्, कुलकानि इत्याद्याऽनल्पा कृतिरस्य सूरिवर्यस्य प्रतिभापटुत्वं प्रकाशयति । [१]सं. ११७८ वर्षेऽयं सूरिर्दिवं जगाम । श्रीधरभां० महाशयेनास्य लेखनकालो रचनाकालत्वेन निर्दिष्टः, स तु समयसाम्याद् भ्रान्तिभवोऽवभासते ।

न्यायग्रन्थः क्र. ८४(३)

अनिर्दिष्टग्रन्थ-ग्रन्थकृदभिधानोऽयं जैनन्यायग्रन्थद्वयेन साकमेकस्मिन् पुस्तके दर्शितत्वात् कश्चिज्जैनन्यायग्रन्थ इति सम्भाव्यते ।

प्रमाणमीमांसा [ हेमचन्द्राचार्यः ] क्र. ८४(१)

कुमारपालभूपालप्रतिबोधकस्य सुप्रसिद्धस्य हेमचन्द्राचार्यस्येयं कृतिर्द्वितीयपरिच्छेदस्य प्रथमाह्निकं यावन्मुद्रिता । परिपूर्णा त्वियं पञ्चपरिच्छेदात्मिकेति ग्रन्थप्रारम्भे प्रोक्तं प्रौढपाण्डित्यशालिनाऽनेन स्वयमेव । सूरिपुङ्गवस्यास्य जन्म सं. ११४५ वर्षे, दीक्षा सं. ११५० वर्षे, सूरिपदं सं. ११६६ वर्षे, स्वर्गमनं च सं. १२२९ वर्षे इति प्रभावकचरित्रादिष्वनेकेषु ग्रन्थेषु तच्चरित्रेण साकं प्रदर्शितम् । एतदतिरिक्ताऽद्यावधि ज्ञाता चेयं सूरिशिरोमणेरस्य कृतिः—

| | | | |
|---|---|---|---|
| सिद्धहेमशब्दानुशासनम् | ( सवृत्ति ) | अभिधानचिन्तामणिः | ( सवृत्तिकः ) |
| काव्यानुशासनम् | ,, | अनेकार्थसङ्ग्रहः | ,, |
| छन्दोऽनुशासनम् | ,, | निघण्टुः | ( सशेषः ) |
| लिङ्गानुशासनम् | ,, | देशीनाममाला | ( सवृत्तिः ) |
| वादानुशासनम् | ,, | योगशास्त्रम् | ( सवृत्ति ) |
| धातुपारायणम् | | त्रिषष्टिशलाकापुरुषचरित्रम् | |
| महार्णवन्यासः | | परिशिष्टपर्व | |
| अयोगव्यवच्छेदद्वात्रिंशिका | | द्व्याश्रयमहाकाव्यम् | ( सं. प्रा. ) |
| अन्ययोगव्यवच्छेदद्वात्रिंशिका | | सप्तसन्धानमहाकाव्यम् | |
| अर्हन्नीतिः | | वीतरागस्तोत्रम्, महादेवस्तोत्रम् | |

१ "अष्टहयेशमिते ११७८ ऽब्दे विक्रमकालाद् दिवं गतो भगवान् ।
श्रीमुनिचन्द्रमुनीन्द्रो ददातु भद्राणि सङ्घाय ॥"—गुर्वावल्यां मुनिसुन्दरसूरिः ।

२ 'प्रमाणमीमांसासूत्रवृत्तौ हेमसर्गेये सू०......वृ०......'—वृ०

"व्याकरणं पञ्चाङ्गं प्रमाणशास्त्रं प्रमाणमीमांसा ।
छन्दोऽलङ्कृतिचूडामणी च शास्त्रे विभुर्व्यधित ॥
एकार्थानेकार्था देश्या निघण्ट इति च चत्वारः ।
विहिताश्च नामकोशा भुवि कवितानट्युपाध्यायाः ॥
द्व्युत्तरषष्टिशलाकानरेशवृत्तं गृहिव्रतविचारे ।
अध्यात्मयोगशास्त्रं विदधे जगदुपकृतिविधित्सुः ॥
लक्षणसाहित्यगुणं विदधे च द्व्याश्रयं महाकाव्यम् ।
चक्रे विंशतिमुच्चैः स वीतरागस्तवानां च ॥
इति तद्विहितग्रन्थसङ्ख्यैव न हि विद्यते ।
नामापि न विद्मस्तेषां मादृशा मन्दमेधसः ॥"
—प्रभावकचरित्रे ( हेमचन्द्रप्रबन्धे ) प्रभाचन्द्रसूरिः ।

ले. सं. १२०२　　द्रव्यालङ्कारवृत्तिः । रामचन्द्र–गुणचन्द्रौ　　क्र. ९५

परिपूर्णोऽयं ग्रन्थः प्रकाशत्रयात्मकः, किन्त्वत्र केवलं द्वितीय-तृतीयावेव प्रकाशाववलोक्येते। तृतीयप्रकाशोऽप्यपूर्णः, वृत्तिसमन्वितोऽयं नान्यत्रोपलभ्यते। मूलमात्र एव बृ. कर्त्रा सूचितः। अत्र प्रथमप्रकाशे जीवद्रव्यम्, द्वितीये पुद्गलप्रकाशे पुद्गलद्रव्यम्, तृतीयेऽकम्पप्रकाशे च त्रीणि धर्माधर्माकाशद्रव्याणि प्रमाणप्रतिष्ठितानि। आभ्यामेव विद्वद्भ्यां सम्मील्य नाट्यदर्पणं विरचितम्। एतयोश्च पं. रामचन्द्रः प्रबन्धशतकर्तृत्वेन प्रसिद्धः सिद्धहेमशब्दानुशासनविधातुः सुप्रसिद्धस्य हेमसूरेः शिष्यः, स्वयं चानेन ज्ञापितमेतदन्यत्र निजकृतौ। प्रभावकचरितादावयं हेमसूरिपट्टधरत्वेन वर्णितः। रचना त्वस्य द्वादशशताब्द्युत्तरार्धे इत्यनुमानं न दोषावहम्। कुमारविहारशतकम्, कौमुदीमित्राणन्दम्, द्वात्रिंशिकाः, नलविलासः, निर्भयभीमव्यायोगः, मल्लिकामकरन्दः(?), यादवाभ्युदयः, रघुविलासः, राघवाभ्युदयः, सत्यहरिश्चन्द्रम् इत्याद्याऽस्यानल्पा कृतिर्विदुषां मनांसि हरति। अस्य च सहकारी कोऽयं गुणचन्द्रः? हैमविभ्रमवृत्तिकारो वादिदेवसूरिशिष्योऽथवा हेमसूरेरेव शिष्यो येन सं. १२४१ वर्षे सोमप्रभाचार्यसन्दर्भितः कुमारपालप्रतिबोधः श्रुत इति विशिष्टप्रमाणं विना निर्णेतुं दुःशकम्, समयविचारे वादिदेवसूरिशिष्येण साकमस्य सङ्गतिर्विशेषतो घटते।

## जैन-वादग्रन्थाः।

ले. सं. १२९५　　बोटिकनिराकरणम् [ हरिभद्रसूरिः ]　　क्र. २४८(१)

बोटिकानां दिगम्बराणां मतमत्र खण्डितम्। C. प्रतिप्रान्ते 'कृतिरियं हरिभद्रसूरेः' इत्युल्लेखो वर्तते। अयं च सूरिः सुप्रसिद्धश्चतुर्दशशतप्रकरणकारो याकिनीमहत्तराधर्मपुत्रो ज्ञायते।

वादस्थलम्। प्रद्युम्नसूरिः　　　　पृ. ६०

---

१ 'द्रव्यालङ्कारस्तर्कः पं. रामचन्द्रगुणचन्द्रकृतः ४८०।'—बृ०

२ 'रामचन्द्रकृतं प्रबन्धशतं द्वादशरूपकनाटकादिस्वरूपज्ञापकम्।'—प्राचीनपत्रे

३ "सूत्र०—मारिष! श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनविधानवेधसः श्रीमदाचार्यहेमचन्द्रस्य शिष्ये(ष्यं) रामचन्द्रमपि(पि) जानासि?। चन्द्र० ( साक्षेपम् )—

पञ्चप्रबन्धमिषपञ्चमुखानकेन विद्वन्मनःसदसि नृत्यति यस्य कीर्तिः।
विद्यात्रयीचणमचुम्बितकाव्यतन्द्रं कस्तं न वेद सुकृती किल रामचन्द्रम्?॥

किं तु(नु) द्रव्यालङ्कारनामा प्रबन्धोऽनभिनेयत्वेन तावदास्ताम्। अपरेषां राघवाभ्युदय–यादवाभ्युदय–नलविलास–रघुविलासानां चतुर्णां रमणीयतमसन्दर्भनिवेशानां विशदप्रकृतीनां पुनर्मध्ये कुत्र प्रजानामनुरागः?।"—रघुविलासे P. P. ५।१४४

४ "हेमसूरिपदपङ्कजहंसैः श्रीमहेन्द्रमुनिपैः श्रुतमेतत्।
वर्धमान–गुणचन्द्रगणिभ्यां साकमाकलितशास्त्ररहस्यैः॥"—कुमारपालप्रतिबोधप्र०

५ 'बोटिकनिषेधो वस्त्रव्यवस्थापनरूपः।'—बृ०

**खरतरगच्छीयैर्विप्रतिपाद्यमानमाशापल्लीयोदयनविहारमूर्तीनां वन्दनार्हत्वमत्र साधितम् । ग्रन्थकारोऽयं सुप्रसिद्धवादिदेवसूरिशिष्यस्य महेन्द्रसूरेः शिष्यस्त्रयोदशशताब्दीपूर्वार्धे विद्यमानः सम्भाव्यते । पितुः प्रबोधार्थमस्य रचनेत्यन्ते निगदितम् । सा. [3]क्षेमन्धरोऽस्य पिता ज्ञायते ।**

प्रबोधोदयवादस्थलम् । जिनपतिसूरिः पृ. ६०

**पूर्वनिर्दिष्टस्य वादस्थलस्य खण्डनमेतत् । अत्र तासामेव मूर्तीनां वन्दनानर्हत्वं प्रतिपादितम् । ची. दलालेनानयोर्द्वयोरपि विषयः समानो दर्शितः, किन्तु परस्परमनयोर्विरुद्धो विषयः । यद् यत्पूर्वग्रन्थकारेण वादिना साधितम्, तत्तदनेन प्रतिवादिना विबाधितम् । गूर्जरत्रायामाशापल्लीपुरे पूर्वमेतद्विषयको वादोऽपि सभासमक्षमासीदित्येतदारम्भप्रान्तविलोकनादवगम्यते । अयं सूरिर्जिनचन्द्रसूरिशिष्यो जिनेश्वरसूरि–जिनपालोपाध्याय–सूरप्रभवाचक–पूर्णभद्रगणि–सुमतिगण्यादीनां गुरुः, येषां नैका कृतिरत्रान्यत्र दर्शिता । ख. पट्टावल्याद्यनुसारेणास्य सूरेर्जन्म सं. १२१० वर्षे, दीक्षा सं. १२१८ वर्षे, सूरिपदं सं. १२२३ वर्षे, स्वर्गमनं च सं. १२७७ वर्षे समजनीति ज्ञायते । सं. १२३२ वर्षेऽनेन कल्याणनगरे महावीरप्रतिमा प्रतिष्ठितेति तीर्थकल्पे जिनप्रभसूरिः । एतदतिरिक्ताऽस्य कृतिस्तीर्थमाला, सङ्घपट्टकटीका, पञ्चलिङ्गीविवरणमित्यादिका सुप्रसिद्धा ।**

---

१ "इह केचिज्जिनपतिमतानुसारिणोऽप्यपारतमःस्तोमास्तगमस्तशेमुषीविशेषास्तत्तत्कदाग्रहग्रहग्रहिलतया सकर्णाभ्यर्णप्रचारपरिहारपरवचःप्रपञ्चचातुरीधुरीणतया च जनितस्वजनमनोविश्लेषाश्चतुस्त्रिंशदतिशयवतां भगवतामर्हतामपि श्वेताम्बरयतिप्रतिष्ठितास्वपि प्रतिमास्वनभिवन्दनीयतामुपदिशन्ति तान् प्रतीदमनुमानमुपन्यस्यते ।"—वा० प्रारम्भे H.

"ततश्च निःशेषदोषप्रमोषपोषितः पारमार्थिकापरिगृहीतत्वे सति श्वेताम्बरयतिप्रतिष्ठितार्हद्बिम्बत्वादिति हेतुः स्वसाध्यं साधयन् न गीर्वाणप्रभुणाऽप्यपहस्तयितुं पार्यत इति ।"—वा० प्रान्ते H.

२ "इह हि भगवदागमेषु बहुधा निर्णीतमायतनानायतनविभागं धीशतया यथावदधिगामुका अप्यधीशतया कदभिनिवेशावेशास्कन्दितमानसा मानसानुमच्छिखराधिरोहप्ररोहदुच्चावचवचनाडम्बराः केचित् सिताम्बरा आयतनमेवार्हद्बिम्बं न तु कथञ्चिदनायतनमपीति बाहुदण्डमुद्धृत्य मुग्धेभ्यः प्रतिदिशमनिशमुपदिशन्तः श्रीगूर्जरत्रोदरे श्रीमदाशापल्लीपुरेऽसङ्ख्यसङ्ख्यावन्मुख्यस्वपक्षपरपक्षसामाजिकसमाजसमक्षं बहुशो निःप्रश्नव्याकरणीकृत्यास्माभिः सिद्धान्तरहस्यसुधारसं पायिता अपि भाग्यविपर्ययात् तमुद्वम्य स्ववसतिकोणके प्रविश्य प्रतिपदमसभ्यवाग्दर्पणेन स्वयमेव प्रकृतप्रमेयस्य सभानर्हतां सूचयन्त आजन्मप्रपीतोत्सूत्रसूत्रणविषोद्गारप्रकारं प्रेक्षावतामनुपादेयं प्रमेयं चिकीर्षन्तः प्रकृतिस्वच्छस्य कज्जलसन्निधेः कालिम्नावभासिनः स्फटिकस्येव निसर्गायतनस्य पार्श्वस्थादिपरिग्रहेणानायतनतया प्रतिभास्वरस्यापि तस्यायतनत्वसिद्ध्येऽनुमानप्रमाणमेवमुपन्यस्यन्ति । आशापल्लीवदनतिलकायमानोदयनविहारान्तर्वर्तीन्यर्हद्बिम्बानि यति–गृहिणां वन्दनीयानि × × ॥"

—प्रबोधोदयप्रारम्भे H.

३ "अतो गीर्वाणप्रभुणेत्यादि त्वद्वाक्यमुत्तानवावदूकप्रलापकल्पं तदेवमलमेभिर्भवत्प्रयुक्तैर्जात्युत्तरैरुन्मत्तप्रलापैरिव बालकेलिकारैः । यच्च सोऽयमभञ्जि सभासदां समक्षमिति स्वयं स्वावदातोत्कीर्तनं तद्यदाशापल्ल्यां तदा त्वदुपासकदण्डनायकश्रीअभयडप्रभृतिसभासदां समक्षं यदभूत् तत् सर्वत्र गूर्जरत्रायां प्रतीतम् । अथ स्ववसतिकोणके तदा स्वस्य गेहेनर्दिताप्रकाशनमात्रमेव ।

सं. १६६५ उत्सूत्रोद्धटनखण्डनम् । गुणविनयः पृ. ५८

तपागच्छीयधर्मसागरोपाध्यायविहितस्योत्सूत्रोद्धटनकुलकस्यतत् खण्डनं तपागच्छखण्डनरूपं खरतरगच्छमण्डनरूपम् । खण्डनकारोऽयं गुणविनयपाठकः खरतरगच्छीयजयसोमोपाध्यायस्य शिष्यः सप्तदशशताब्दीमध्यकालीनः । अस्य कृतिबाहुल्यं विज्ञायते यथा—

सं. १६४१ खण्डप्रशस्तिकाव्यवृत्तिः ( सं. १६५७ विचाररत्नसङ्ग्रहलेखनम् )
सं. १६४६ रघुवंशटीका सं. १६५९ लघुशान्तिटीका
सं. १६४६ दमयन्तीचम्पूवृत्तिः सं. १६६२ अञ्जनासुन्दरीसम्बन्ध (गू.)
सं. १६४७ प्रा० वैराग्यशतकवृत्तिः सं. १६६४ इन्द्रियपराजयशतकवृत्तिः
सं. १६५१ सम्बोधसप्ततिकावृत्तिः सं. १६६५ गुणसुन्दरीचतुष्पदिका (गू.)
सं. १६५५ कर्मचन्द्रमन्त्रिवंशप्रबन्धः (गू.)

एतदतिरिक्ता अज्ञातरचनासमयाश्चेते ग्रन्थाः—

जिनवल्लभीयाजितशान्तिवृत्तिः, मितभाषिणीवृत्तिः, लुम्पकमतनमोदिनकरचतुष्पादिका (गू.) सवत्थशब्दार्थसमुच्चय इत्यादयः । सं. १६७५ वर्षे विमलाचले जिनराजसूरिकृतायामादिनाथप्रतिष्ठायामयमपि तत्रासीत् ( एपिग्राफिआ इण्डिका २।६२–६३ ) ।

[ सं. १७३१[1] ] पाण्डित्यदर्पणम् । उदयचन्द्रः पृ. ५६

अनूपसिंहसंज्ञकस्य मरुदेशीयनृपस्याज्ञयाऽस्य रचना । अत्र मनजीकादीनां पण्डितानां मतमवमतम् , निजाभीष्टप्रयोगाश्च प्रमाणपुरस्सरं समर्थिताः ।

---

## बौद्धन्यायग्रन्थाः ।

ले. सं. १२०६ धर्मोत्तरटिप्पनम् । मल्लवादी क्र. १४,१३०(१) [P.P.५।३]

बौद्धाचार्यधर्मोत्तरकृतायाः सुप्रसिद्धाया न्यायबिन्दुटीकाया एतट्टिप्पनम् । टिप्पनकारो मल्लवाद्याचार्यो जैनो नयचक्र सन्मतितर्कवृत्त्यादिकर्ता ज्ञायते; यस्य चरित्रं प्रभावकचरित्र–प्रबन्धचिन्तामणि–सम्यक्त्वसप्ततिवृत्ति–प्रबन्धकोषादौ दृष्टिगोचरं भवति । विरहाङ्कहरिभद्रसूरिणाऽस्यास्मारि स्वग्रन्थे । कुमारपालप्रतिबोधकहेमसूरिरपि सिद्धहेमशब्दानुशासने तार्किकशिरोमणित्वेनोदाहरदेनं सूत्रोदाहृतिप्रसङ्गे[2] । प्रभावकचरित्रकारेणास्य समयो वीरनि. सं. ८८४=वि. सं. ४१४ रूपो न्यरूपि[3], किन्तु न्यायबिन्दुटीकाकारस्य धर्मोत्तरस्य सत्ता पाश्चात्यविद्वद्भिर्विक्रमीयसप्तमशताब्द्यां निर्णीयतेऽतो टिप्पनकारस्यार्वाचीनतेति स्पष्टमथवाऽयं मल्लवादी कश्चिदन्यः सम्भाव्यः । अपूर्णा मुद्रिता च न्यायबिन्दुटीका–टिप्पण्यस्माद् भिन्नाऽभिन्ना वेति तत्रत्यप्रतिसमीक्षणं विना निर्णेतुं दुःशकम् ।

---

यदपि पितुः प्रबोधावधये इत्यादि तत्रायं पुण्यात्मा विधिचैत्यादिविचारसारक्षोदकोविदशिरःशेखरः सा० क्षेमन्धरः सकलपवित्रगोत्रपरिवारेण सह प्रभुश्रीजिनदत्तसूरियुगप्रधानप्रकाशितविधिमार्गप्रतिबोधबन्धुर एवेति स्वकृतप्रकृतवादस्थानकमसिद्धसाध्यत्वात्र सम्यक् साधनमिति भवता स्वयमेव सूचितं, सम्यक् साधनं हि स्वसाध्यं साधयत्येवेति ॥"—प्रबोधोदयोपान्त्ये II.

१ चन्द्राग्नि–मुनि–भूसंख्ये वत्सरे सुदि चाश्विने ।
चन्द्रेणोदयपूर्वेण दशम्यां विशदीकृतः ॥ C.

२ 'अनुमल्लवादिनं तार्किकाः'—हैम० २।२।३९

३ "श्रीवीरवत्सरादथ शताष्टके चतुरशीतिसंयुक्ते ।
जिग्ये स मल्लवादी बौद्धांस्तद्व्यन्तरांश्चापि ॥"—प्रभा० पृ० ७४.

ले. सं. १२०१ न्यायप्रवेशटीका[1] । हरिभद्रसूरिः क्र. २३

मूलमात्रेयं कृतिर्दिङ्नागनामधेयस्य बौद्धाचार्यस्य । टीकाकारस्तु जैनेषु महामान्यश्चतुर्दश-शतप्रकरणकृत्त्वेन सुप्रसिद्धो विरहाङ्को हरिभद्रसूरिः, यस्य समयनिर्णयार्थं नैके विद्वांसो विवदन्ते । वि. सं. ५८५ वर्षेऽस्य सूरिवर्यस्य स्वर्गमनं समजनीति प्राचीनानां मतम्, आधुनिकैस्तु विक्रमीयाष्टम-नवमशताब्दीमध्यकालीनत्वं स्वीक्रियते (पृ. १८) । अचिरेण प्राकट्यं नेष्यतेऽयं ग्रन्थोऽनया संस्थया ।

[पं. सं. ११६९] न्यायप्रवेश[टीका]पञ्जिका । [पार्श्वदेवगणिः]

क्र. २४४ [P.P. ११८१]

इयं पूर्वसूचितायाष्टीकायाः पञ्जिका टीकया साकं प्रसिद्धिमानेष्यतेऽनया संस्थया । पञ्जिकाकारः शीलभद्रसूरिशिष्यधनेश्वरसूरिशिष्यः पूर्वं पार्श्वदेवनाम्ना प्रसिद्धो विशेषावस्थायां तु [2]श्रीचन्द्रसूरिनाम्ना प्रथितो यस्य कृतिसमुदितिः पूर्वं (पृ. २१) सूचिता ।

तत्त्वसङ्ग्रहः[3] । [शान्तरक्षितः] क्र. १२०

तत्त्वसङ्ग्रहपञ्जिका । कमलशीलः क्र. ८

सूचितं खल्वनया संस्थया पञ्जिकासमेतोऽयं ग्रन्थो मुद्रापयितुमारब्धः, स चाचिराद् दृष्टिगोचरीकरिष्यते विद्वद्वृन्देन ।

ले. सं. ११९४ प्रमाणान्तर्भावः[4] क्र. ६

H. प्रतिप्रान्तं पत्तनीयसूच्युल्लेखं च दृष्ट्वा दर्शितं 'प्रमाणान्तरुचि' इति नाम न सम्यक् । जैनग्रन्थावल्यां ही. सूच्याधारेण दर्शिते 'प्रमाणान्तःस्तव' 'बौद्धमीमांसादलन' इति नामनी अपि न समीचीने । तथैव देवभद्र-यशोदेवौ चास्य कर्तारौ न, केवलमस्य लेखकावेताविति प्रतिभाति H. प्रतिप्रेक्षणेन । किञ्च पुस्तकेऽत्र ग्रन्थद्वयं वर्तते, पूर्वं चतुर्दश पत्राणि यावन्मीमांसकदर्शनस्य शावरभाष्यस्य प्रथमाध्यायस्य प्रथमपादो वर्तते; तदनन्तरं तस्य कुमारिलकृतश्लोकवार्तिकस्य च खण्डनरूपो बौद्धदर्शनानुसारी प्रत्यक्षानुमान-

---

१ 'न्यायप्रवेशकटीका च हारिभद्री सू० टी० ५९७'—बृ०

२ "न्यायप्रवेशशास्त्रस्य सद्वृत्तेरिह पञ्जिका ।
स्वपरार्थं दृब्धा स्पष्टा पार्श्वदेवगणिनाम्ना ॥
ग्रह–रस–रुद्रैर्युक्ते विक्रमसंवत्सरे तु राधायाम् ।
कृष्णायां च नवम्यां फाल्गुनमासस्य निष्पन्ना ॥"—पञ्जिकाप्रान्ते P.
'न्यायप्रवेशकटिप्पनं ११६९ वर्षे श्रीचन्द्रीयम्'—बृ०

३ 'तत्त्वसङ्ग्रहः प्रकृतीश्वरादिनिरासवाच्यो बौद्धः ३७१६'—बृ०

४ "यस्य प्रज्ञाप्रकाशः कवलयति जगच्चक्रमेपा(षो)कलंकः
सत्वार्थ (?) वा विधातुं यदपर उदयी नासमर्थोकलंकः ।
तन्नला स्वार्थसंपत्सुहितमनुपमो मंहु(जु)वाग् यो न दीनः
प्रत्यक्षं चानुमा धं(चे)त्यत उदितमिदं येन तुल्यो नदीनः ॥"
—प्रमाणान्तर्भावप्रारम्भे H.

प्रमाणद्वयसाधकः शाब्दोपमानार्थापत्त्यभावाख्यप्रमाणचतुष्टयान्तर्भावसंसाधकः परिच्छेदचतुष्टयोपेतोऽयं प्रमाणान्तर्भावनामधेयो बौद्धन्यायग्रन्थः। बृ. दर्शितं 'अपौरुषेयवेदनिराकरणं प्रत्यक्षानुमानाधिकप्रमाणनिराकरणं च यशोदेवसाधुकृतम्' नास्माद् भिन्नं प्रतिभाति। श्रीहर्षस्य नामग्रहणादयं ग्रन्थकारस्तत्समकालीनोऽथवा तदुत्तरकालीन इति स्पष्टम्।

## नैयायिकग्रन्थाः।

ले. सं. १२०८          न्यायमीमांसा (?)          क्र. २४२

अस्य ग्रन्थस्य सम्यङ् नाम नावबुध्यते। ही. सूच्यां 'प्रमाणप्रमेयन्याय' इति नाम दर्शितम्। न्यायदर्शनभाष्यस्य काचिद् व्याख्या प्रतिभाति. व्याख्यातुर्नाम नावगम्यते।

भाष्यवार्तिकटीका। अनिरुद्धः          क्र. ९३(१)

इयं भाष्यवार्तिकटीकाविवरणपञ्जिकानाम्ना प्रान्तोल्लेखे दर्शिता। भाष्यं त्वत्र न्यायदर्शनभाष्यं ज्ञायते। अनेन पण्डितेन विहिता भट्टिकाव्यटीकाऽत्र दर्शिता। सुप्रसिद्धा साङ्ख्यसूत्रवृत्तिश्चास्य कृतिर्ज्ञायते।

न्यायमञ्जरीग्रन्थिभङ्गः। चक्रधरः          क्र. ३२५(२)

इयं न्यायमञ्जरी जयन्तभट्टकृता गौतमसूत्रतात्पर्यवृत्तिरवबुध्यते। तस्या ग्रन्थीनां विषमपदानां भङ्क्ताऽयं चक्रधरो भट्टशङ्करात्मज इत्यतोऽधिकं नावगतम्। अस्मिन्नश्वघोषस्य राज्यपालनाटककर्तृत्वं प्रादर्शि।

[3]श्रीकण्ठन्यायटिप्पनकम्          पृ. ४८

सूचितं खल्वेतदुदयनविरचिताया न्यायतात्पर्यपरिशुद्धेः टीकारूपम्।

[3]न्यायालङ्कारटिप्पनम्। अभयतिलकोपाध्यायः          पृ. ४७

पूर्वोक्तायाः श्रीकण्ठवृत्तेरेतट्टिप्पनं पञ्चप्रस्थन्यायतर्कव्याख्येति संज्ञितम्। टिप्पनकारोऽभयतिलकोपाध्यायो चतुर्दशशताब्दीप्रारम्भे विद्यमान आसीत्। सं. १३१२ वर्षेऽनेन

---

१ प्रमाणान्तर्भावे शाब्दप्रमाणान्तर्भावः प्रथमः परिच्छेदः।—H. प. १८
उपमानान्तर्भावो द्वितीयः परिच्छेदः।—H. प. १९
प्रमाणान्तर्गतौ तृतीयोऽर्थापत्तिपरिच्छेदः।—H. प. २२
इत्यद्व(द्धु)० प्रमाणान्तरुचिः( र्भावः ) समाप्तः।—H. प. २६

२ "अथ कालान्तरत्वेन युक्तः सोऽर्थः प्रसाध्यते।
कालान्तरस्थितिर्नैव श्रीहर्षादेः प्रसिध्यति॥"—H. प. १६

३ 'न्यायतर्कसूत्रं (१) भाष्य (२) वार्तिक (३) तात्पर्यटीका (४) तत्त्वपरिशुद्धि (५) न्यायालङ्कारवृत्ति (६) पञ्चप्रस्थन्यायतर्काणि (क्रमशः) अक्षपाद–वात्स्यायन–भारद्वाज–वाचस्पति–उदयन–श्रीकण्ठ–अभयतिलकोपाध्यायकृतानि षडपि ५३०००।'—बृ०

"न्यायसूत्र–भाष्य–न्यायवार्तिक–तात्पर्यटीका–तात्पर्यपरिशुद्धि–न्यायालङ्कारवृत्तयः क्रमेणाक्षपाद–वात्स्यायनोद्योतकर–वाचस्पति–श्रीउदयन–श्रीकण्ठाभयतिलकोपाध्यायविरचिताः ५४०००।"
—षड्दर्शनसमुच्चयटीकायां गुणरत्नसूरिः।

विरचिता हैमसं० द्व्याश्रयस्य वृत्तिरत्र दर्शिता। सं. १३१२ वर्षेऽनेन चन्द्रतिलकोपाध्यायस्याभयकुमारचरित्रं संशोधितम्। उपदेशमालावृहद्वृत्तिप्रान्ते प्रशस्तिश्चैनेन विनिर्मिताऽत्र (पृ. ३६) सूचिता। अस्या व्याख्यायाः संशोधको लक्ष्मीतिलकोपाध्यायोऽस्य विद्यागुरुः, जिनेश्वरसूरिश्चास्य दीक्षागुरुरिति सूचितमेतत्प्रान्ते।

## वैशेषिकग्रन्थाः।

पदार्थधर्मसङ्ग्रहव्याख्या क. ९६

व्याख्यातुर्नाम नोपलभ्यते। कन्दली–किरणावलीभ्यां भिन्नेयं कदाचिद् व्योमशिवाचार्यकृता व्योममतिः सम्भवेत्।

वैशेषिकवृत्तिः। चन्द्रानन्दः पृ. ४५

न्यायकन्दलीटिप्पनम्। नरचन्द्रसूरिः क. १९(१)

टिप्पनकारोऽयं जैनाचार्यो हर्षपुरीयगच्छीयमलधारिदेवप्रभसूरिशिष्यस्त्रयोदशशताब्द्युत्तरार्धे विद्यमान आसीत्। सुप्रसिद्धमन्त्रिवस्तुपालस्याभ्यर्थनयाऽनेन कथारत्नसागरो निर्मितः। एतद्व्यतिरिक्ता अनर्घराघवटिप्पनम्, ज्योतिःसारः, प्राकृतदीपिका (प्रबोधः) इत्याद्या एतदीया अनल्पग्रन्थास्तत्तच्छास्त्रेष्वस्य वैदुष्यमुद्बोधयन्ति। सं. १२७१ वर्षेऽस्यैवादेशात् पं०गुणवल्लभेन समर्थिता व्याकरणचतुष्कावचूरिरत्र (पृ. ३६) प्रदर्शिता। देवप्रभसूरीयं पाण्डवचरित्रम्, उदयप्रभसूरीयं धर्माभ्युदयकाव्यं चानेन संशोधितम्। सं. १२८८ वर्षे प्रस्तुतसूरिरचितानि प्रशस्तिरूपाणि वस्तुपालस्तुतिकाव्यानि गिरिनारगिरौ शिलालेखे वर्तन्ते। मं. वस्तुपालप्रार्थनयाऽलङ्कारमहोदधिविरचयिता नरेन्द्रप्रभसूरिरस्य शिष्यः।

द्रव्य (?) प्रकाशः। रामचन्द्रः पृ. ५२

ग्रन्थस्य नाम सम्यग् नावगम्यते, तथापि वैशेषिकन्यायानुसारीति प्रतिभाति। अभिधेयाभिधायकसूचकश्लोकोत्तरार्धे प्रकाश इत्येतावदेव नाम दृश्यते।

द्रव्यप्रच्छकः (?)। रामचन्द्रः पृ. ५२

अयमपि पूर्ववद् वैशेषिकमतानुसारी स्फुटसंज्ञाविहीनः।

## साङ्ख्यग्रन्थः।

साङ्ख्यसप्ततिवृत्तिः (माठरवृत्तिः ?) क. ९३(२)

माठरवृत्तिस्तु साम्प्रतं मुद्रिता, तस्याश्च प्रमाणं न महद्, इयं तु महती; इत्यत इयं काचिदन्याऽन्यकृता सम्भवेत्।

---

१ "द्व्याश्रयटीकाकारी द्विव्याकरणः सुदृष्टसाहित्यः।
सुकविरभयतिलकगणिश्चाशोधयतामिदं शास्त्रम्॥"
—अभयकुमारचरित्रे चन्द्रतिलकोपाध्यायः।

२ "व्योमशिवाचार्यकृता टीका व्योममतिर्मता।
सा स्यान्नव सहस्राणि ×××× ॥"—षड्दर्शनसमुच्चये राजशेखरसूरिः।

३ "टिप्पनमनर्घराघवशास्त्रे किल टिप्पनं च कन्दल्याम्।
सारं ज्योतिषमदभद् यः प्राकृतदीपिकामपि च॥"
—न्यायकन्दलीपञ्जिकायां राजशेखरसूरिः।

४ 'क्रियते रामचन्द्रेण प्रकाशोऽयं बुधप्रियः।'—पृथक् पत्रे

## वेदान्तग्रन्थौ ।

इष्टसिद्धिः । विमुक्तात्माचार्यः क्र. १४०(२)

इयमपूर्णरूपा प्रथमाध्यायात् किञ्चिदधिकाऽत्र दृश्यते । बर्नेलसूचिपत्रे ( पृ.९५ ) सूचितोऽयं ग्रन्थः । मधुसूदनेनाद्वैतसिद्धावस्य नाम गृहीतम्, आनन्दज्ञानेन चास्य वाक्यानि स्वतर्कसङ्ग्रह उद्धृतान्यवलोक्यन्तेऽतोऽस्य प्राचीनतेति स्पष्टम् ।

खण्डनखण्डखाद्यटीका ( शिष्यहितैषिणी ) क्र. २२५ [ P. P. ५।२९ ]

विद्यासागरीव्याख्योपेतस्य मुद्रितखण्डनखण्डखाद्यस्य प्रस्तावनायां लक्ष्मणशास्त्रिणा शिष्यहितैषिण्याः कर्ता पद्मनाभः सूचितः, किन्त्वस्याः प्रान्तनिरीक्षणेऽनुभवस्वरूपो व्यज्यते स चानुभूतिस्वरूपाचार्यः सम्भाव्यते । 'P. P. ५।३०' इत्यत्र मुद्रितो 'व्योम्नीषाम्बभवस्वरूप-'इति पाठः सम्यग् न भाति ।

## सर्वदर्शनसङ्ग्रहः ।

सर्वसिद्धान्तप्रवेशः क्र. २९३(३)

षण्णामपि दर्शनानां स्वरूपप्रतिपादकोऽयं ग्रन्थो जिनेश्वरप्रणामरूपमङ्गलकरणाज्जैनाचार्यकृत इत्यनुमीयते । त्रयोदशशताब्द्युत्तरार्धलिखितपुस्तिकायामागतत्वादस्य रचना ततः पूर्वमिति स्फुटम् ।

## जैनद्रव्यानुयोगः ।

ले. सं. १२२२ कम्मपयडीसंग्रहणीटीका क्र. २७७

इयं सुप्रसिद्धायाः शिवशर्मसूरिरचितायाः कर्मप्रकृतेश्चूर्णिः प्रतिभाति ।

कर्मप्रकृतिचूर्णिविशेषवृत्तिः क्र. १७८

कर्मप्रकृतिप्राभृतसङ्ग्रहणीचूर्णिपदविषयकटिप्पनकरूपेयं रचयितुर्नामविहीनात्र विलोक्यते; तथाप्यन्यत्र मुनिचन्द्रसूरिकृतं टिप्पनं सूचितं तदेवैतत् सम्भाव्यते । अयं मुनिचन्द्रसूरिरनेकान्तजयपताकावृत्तिटिप्पनादेर्विधाता सं. ११७८ वर्षे स्वर्गभाग् ज्ञायते ( पृ. २५ ) ।

शतकवृत्तिः । मलधारिहेमचन्द्रसूरिः क्र. २८४ [ P. P. ४।१३० ]

२८६ क्रमाङ्के शतकचूर्णिनाम्ना दर्शिताऽपीयमेव वृत्तिः प्रतिभाति । २३२२ श्लोकमिता शतकचूर्णिस्तु साम्प्रतं मुद्रिता । शतकसूत्रकारः शिवशर्मसूरिरत्यन्तप्राचीनः । वृत्तिकारोऽयं द्वादशशताब्द्युत्तरार्धे सिद्धराजादिसत्कृत आसीदित्यन्यत्र ( पृ. ३९ ) सूचितम् ।

ले. सं. १२११ सि(स)त्तरीटिप्पनम । रामदेवगणिः क्र. ३१९

---

१ 'कर्मप्रकृतिचूर्णिटिप्पनकं मुनिचन्द्रीयम् १९२० ।'—बृ०

२ 'बृहच्छतकवृत्तिर्मलधारिहेमचन्द्रीया ३७४० ।'—बृ०

३ 'सत्तरिटिप्पनकम् खरतररामदेवगणिकृतम् गाथा ५४७ ।'—बृ०

चन्द्रर्षिमहत्तरविरचितं मूलं मलयगिरिरचितया वृत्त्या समेतं मुद्रितम् । टिप्पनमेतत् प्राचीनाश्चूर्णीरनुसृत्य व्यधायीत्येतत्प्रान्ते प्रोक्तम् । टिप्पनकारोऽयं जिनवल्लभसूरेः शिष्यः, यस्यान्यदपि षडशीतिटिप्पनकमग्रे दर्शितम् । द्वादशशताब्द्या उत्तरार्धेऽस्य रचना सम्भाव्यते ।

ले. सं. १२४६ षडशीतिटिप्पनकम्[1] । रामदेवगणिः पृ. ४५

अस्य मूलं जिनवल्लभसूरिविरचितं टीकाद्वयोपेतं मुद्रितम् । वस्तुविचारसारेत्यस्यैवापरं नाम । प्रा० टिप्पनकर्ताऽयं मूलकारस्यैव शिष्य इत्यत्र गदितम् । पूर्ववदस्यापि रचना द्वादशशताब्द्या उत्तरार्धेऽनुमीयते ( सं. ११७३ वर्षे ? ) । सं. १२९५ वर्षे सुमतिगणिरिमं गणिनं सूक्ष्मार्थसार-प्रकरणवृत्तिकृत्त्वेन दर्शयामास । कागदपत्रात्मिकेयं प्रतिः प्राचीनाऽथवाऽत्र दर्शितो लेखन-संवत्सरः प्राचीनादर्शस्येति निर्णेतुं न साधनम् ।

---

जीवसमासः क. ३०९(१)

जीवाजीवादिस्वरूपप्रतिपादकोऽज्ञातकर्तृनामाऽयं प्राचीनो ग्रन्थः, यतोऽस्य शीलाङ्काचार्य-मलधारिहेमचन्द्रकृते वृत्ती उपलभ्येते । सं. ११६४ वर्षे स्वयं मलधारिहेमचन्द्रसूरिणा लिखिता सवृत्तिकस्यास्य ताडपत्रीया प्रतिः स्तम्भतीर्थे विद्यते 'P. P. १।१८' इत्यत्र सूचिता ।

ले. सं. १२२२ विभत्तिवियारो( विचारमुखप्रकरणम ) । अमरचन्द्रसूरिः

क. २४९(२)

कोऽयममरचन्द्रसूरिरिति न निर्णीयते, नागेन्द्रगच्छीयः सम्भवेत् ।

वृ. सं. ११३९, ले. सं. १२०१ सङ्ग्रहणीवृत्तिः । शालिभद्रसूरिः

क. ९८,१७७(१) [ P. P. ५।४१,१३३ ]

मूलमात्रेयं जिनभद्रगणिक्षमाश्रमणकृता मलयगिरिविहितवृत्तियुता मुद्रिता । अयं वृत्तिकारः थारापद्रपुरीयगच्छीयपूर्णभद्रसूरिशिष्य इत्याद्यत्र प्रोक्तम्; 'P. P. ५।१३२-३' इत्यत्र शालि-भद्रस्थाने 'शीलभद्र' इति दर्शितम्, तन्न सुष्टु । सं. ११२२-२५ वर्षे प्रतिक्रमणसूत्रपद-विवृति-रुद्रटालङ्कारटिप्पनकारो नमिसाधुरस्य शिष्यो ज्ञायते ।

सङ्ग्रहणीवृत्तिः ( हारिभद्री ) क. २६८(३)

मूलं प्रागुक्तं तदेव । वृत्तिकारोऽयं कैश्चिच्चतुर्दशशतप्रकरणकारः प्राचीनो हरिभद्रसूरिरित्य-न्यत्रोल्लिखितः, किन्तु सिद्धराजराज्ये विद्यमानो बृहद्गच्छीयमानदेवसूरिशिष्यजिनदेवोपाध्यायस्य शिष्योऽयमपरो हरिभद्रसूरिः सम्भाव्यते । येन सं. ११७२ वर्षे बन्धस्वामित्व-षडशीत्यादि-कर्मग्रन्थवृत्तिः, मुनिपतिचरित-श्रेयांसचरिते, सं. ११८५ वर्षे प्रशमरतिवृत्तिरित्यादि विहितम्; स एवास्या वृत्तिकार इत्यस्मदाकूतम् ।

---

१ 'वस्तुविचारसाराख्यबृहत्षडशीतिकस्य जिनवल्लभस्य वृत्तिः प्राकृता रामदेवी ८०५ ।'—बृ०

२ "स हि भगवान् ( जिनवल्लभसूरिः ) यस्य शिरसि स्वहस्तपद्मं ददाति, स जडोऽपि रामदेवगणिरिव वदनकमलावतीर्णभारतीकोऽत्यन्तदुर्बोधसूक्ष्मार्थसारप्रकरणवृत्तिं विरचयति ।"

—गणधरसार्धशतकवृत्तिः H.

३ "बृहत्सङ्ग्रहणीवृत्तिः ११३९ वर्षे शालिभद्री १८००-२५०० ।'—बृ०

## जैनगणितानुयोगः ।

[1]क्षेत्रसमासवृत्तिः । हरिभद्रसूरिः    क्र. २६८(१) [S. २।८०]

वृत्तिकारोऽयं प्राचीनो हरिभद्रसूरिरित्यन्यत्र दर्शितम्, किन्त्वस्मदभिप्रायेण पूर्वं सूचितः सङ्ग्रहण्यादिवृत्तिकारोऽपरोऽयं सूरिः सम्भाव्यते । सं. ११८५ वर्षे चास्या रचनेति प्रान्त[2]श्लोकार्थः प्रस्फुरत्यस्मच्चित्ते ।

क्षेत्रसमासवृत्तिः    क्र. ४३,२८५(२)

इयं प्राचीना बृहद्वृत्तिरज्ञातकर्तृनामा सिद्धसूरीयैवान्या वेति न निर्णीयते ।

वृ. सं. ११९२    [3]क्षेत्रसमासवृत्तिः । सिद्धसूरिः क्र. २३५ [P. P. ३।१९३]

मूलं जिनभद्रगणिक्ष० कृतं मलयगिरिविरचितवृत्तिसमेतं मुद्रितम् । अयं वृत्तिकार उपकेशगच्छीयदेवगुप्तसूरिशिष्यो गुरुभ्रातृयशोदेवोपाध्यायादधीतशास्त्रं स्वं पर्यचाययत् (पृ. ३९) ।

## जैनचरणकरणानुयोगः ।

पञ्चवस्तुकम् । हरिभद्रसूरिः    क्र. २१९ [P. P. २।७१;५।१६१]

स्वोपज्ञवृत्तिसमेतमेतत् साम्प्रतं मुद्यमाणं श्रूयते ।

साधुप्रतिमाप्रकरणम्    क्र. ८९

अज्ञातकर्तृनामैतद् हरिभद्रसूरिकृतादेतन्नामकपञ्चाशकात् तु विषयेन समपि भिन्नं प्रतिभाति ।

ले. सं. ११६९    अणुव्वयविही    क्र. २८०(१)

प्राकृतभाषामयस्यास्य कर्तृनाम न व्यज्यते ।

ले. सं. ११६९    संज(य)माख्यानकम्    क्र. २८०(४)

इदं पुस्तकं विजयसिंहाचार्याणामिति सूचितम्, कर्ता क इति न ज्ञायते ।

संयममञ्जरी । [महेश्वरसूरिः]    क्र. ३०९(७) [P. P. १।५०]

अपभ्रंशभाषायां लघ्व्यप्यतिमनोहरेयं कृतिरस्या ग्रन्थमालाया भविष्यदत्तकथाग्रन्थस्य पीठिकायां (पृ. ३७) प्रदर्शिता । अस्याश्च वृत्तिर्हेमहंससूरिशिष्यकृता 'P. P. ४।१२१' इत्यत्र सूचिता । अयं महेश्वरसूरिः कदाऽऽसीत् कस्य शिष्यो वेत्यादि न व्यज्यते ।

[वृ. सं. [4]११७६]    पिण्डविशुद्धिवृत्तिः । यशोदेवसूरिः    क्र. २७४

अस्या मूलं जिनवल्लभसूरिकृतम् । वृत्तिकारोऽयं स एव चान्द्रकुलीनचन्द्रसूरिशिष्यो ज्ञायते येन सं. ११७२ वर्षे प्रथमपञ्चाशकचूर्णिः, सं. ११७४ वर्षे ईर्यापथिकी–चैत्यवन्दनः–वन्दनक–चूर्णिविवरणादि, सं. ११८० वर्षे पाक्षिकसूत्रवृत्तिः, सं. ११८२ वर्षे प्रत्याख्यानस्वरूपमित्यादि च प्रणीतम् ।

सं. ११९०    धम्मविही । नन्नसूरिः    क्र. ३३२

---

१ 'लघुक्षेत्रसमासवृत्तिर्हरिभद्रसूरीया ५११ ।'—बृ०

२ "पञ्चाशीतिकवर्षे विक्रमतो व्रजति शुक्लपञ्चम्याम् ।
शुक्रस्य शुक्रवारे पुष्ये शस्ये च नक्षत्रे ॥"—क्षेत्र० S. २।८०

३ 'बृहत्क्षेत्रसमासवृत्तिः सिद्धसूरीया ११९२ वर्षे ३००० ।'—बृ०

४ 'पिण्डविशुद्धिसूत्रं जैनवल्लभम् गाथा १०३ । वृत्तिः ११७६ वर्षे यशोदेवी २८०० ।'—बृ०

अयं दशदृष्टान्तविभूषितो ज्ञानदर्शनगुणविशोधकः प्राकृतग्रन्थः समस्तशास्त्रेभ्य उद्धृत्य विहित इति स्वयं कर्त्राऽत्र दर्शितम् । अस्य रचना-लेखनसमयः प्रायः समान एव विलोक्यते ।

सुखबोधा सामाचारी । श्रीचन्द्रसूरिः क्र. १७ [ P. P. ५।६४ ]

अस्याः कर्तुर्नाम धनेश्वरसूरिरिति दलालेन दर्शितम्, किन्त्वन्यत्र धनेश्वरसूरिशिष्य-श्रीचन्द्रसूरेः कर्तृत्वं प्रदर्शितमुपलभ्यते, तदेव सम्यक् प्रतिभाति । अयं श्रीचन्द्रसूरिः स एव यस्य सामान्यावस्थायां पार्श्वदेवगणिनामासीत् । द्वादशशताब्द्युत्तरार्धे त्रयोदशशताब्दीप्रथमांशे विद्यमानोऽयमत्र ( पृ. २१ ) परिचायितः ।

सामाचारी । तिलकाचार्यः क्र. १८५

इयं पूर्णिमापक्षीया सम्भाव्यते, यतोऽयं तिलकाचार्यश्चन्द्रप्रभसूरिसन्तानीयः पूर्णिमापक्षीय-स्त्रयोदशशताब्द्युत्तरार्धे चतुर्दशशताब्दीप्रारम्भे च विद्यमानो विज्ञायते, यस्यान्ये ग्रन्थाः पूर्वं ( पृ. २० ) सूचिताः । क्र. ७(३) इत्यत्र सूचिता साधुसामाचारी तु कल्पसूत्रसम्बद्धा मुद्रिताऽऽभाति ।

[ वृ. सं. १२७७[2] ] सम्यक्त्वप्रकरणवृत्तिः । चक्रेश्वरसूरि-तिलकाचार्यौ पृ. ५५

मूलं पूर्णिमापक्षप्रकाशयितृ-प्रमेयरत्नकोशादिविनिर्मातृचन्द्रप्रभसूरिविरचितं दर्शनशुद्धीत्य-परनाम्ना प्रसिद्धं देवभद्रसूरिकृतवृत्त्या समेतं मुद्रितं तदेव ज्ञायते । अस्या वृत्तेः प्रारम्भश्चक्रेश्वर-सूरिणा कृतः, किन्तु दैववशादनिर्वाहितायामेवास्यां दिवं गतेऽस्मिन् तत्प्रशिष्यतिलकाचार्येणेयं निर्वाहिता । तिलकाचार्यस्तु पूर्वोक्त एव ।

श्रावकदिनकृत्यवृत्तिः क्र. १५ [ P. P. ११३,४१ ]

तपागच्छीयजगच्चन्द्रसूरिशिष्यदेवेन्द्रसूरेः कृतिरियमित्यन्यत्र तन्निर्मितग्रन्थानां नामावल्यां प्रदर्शिता । यस्य स्वर्गमनं सं. १३२७ वर्षे इति गुर्वावल्यादावुक्तम् ।

सं. १३१३ श्रावकधर्मप्रकरणम् । जिनेश्वरसूरिः क्र. ३०१(६)

अस्य रचना प्रह्लादनपुरे । जावालिपुरे सं. १३१७ वर्षे रचिताऽस्य बृहद्वृत्तिरपि श्रूयते । अयं सूरिवर्यो जिनपतिसूरिशिष्य इति त्वत्र सूचितम् । विशेषवृत्तान्तस्तु सोममूर्तिगणिना

---

१ "सिरिसीलभद्दसूरिधणेसरसूरिसिस्ससिरिचंदसूरिसमुद्धरिया सू(सु)हबोहसमायारी समत्ता ।"

P. P. ५।६४

'सामाचारी सुबोधा सर्वानुष्ठानगोचरा धनेश्वरशिष्यश्रीचन्द्रीया १४५०-१२२१ ।'—बृ०

२ 'सम्यक्त्ववृत्तिः सूत्रकारचन्द्रप्रभसूरिसन्तानीयश्रीतिलकीया १२७७ वार्षिकी ८००० ।'—बृ०

३ "सारवृत्तिदशाः कर्मग्रन्थदीपास्तमोहराः । तस्य प्रवचनावासे भान्ति प्रेष्ठार्थदर्शकाः ॥
नानास्तवनप्रकरणरत्नानि समुद्धृतानि समयाब्धेः । पुरुषोत्तमेन तेनालङ्कृतये शासनस्यासन् ॥
पञ्चाशिका सिद्धविचारवाच्या भाष्याणि वृत्तं च सुदर्शनायाः ।
उपासकानां दिनकृत्यसूत्रवृत्ती च टीकाऽपि च धर्मरत्ने ॥
देवेन्द्राद्या श्राद्धयामाद्यमञ्जिग्रन्थाद्याऽन्याऽप्यस्त्यनेकाऽस्य सृष्टिः ।
एवं नानाग्रन्थसोपानपङ्क्त्या स्वारोऽहं तन्मुक्तिसौधं व्यधात् सः ॥"

—गुर्वावल्यां मुनिसुन्दरसूरिः ।

विहितात् 'जिनेश्वरसूरिदीक्षाविवाहवर्णनरास(गृ.)' ग्रन्थात्, खरतरगच्छपट्टावल्यादेश्चोपलभ्यते। 'सट्ठिसय'नामकप्रकरणविधातुर्मरुकोट्टनिवासिनो नेमिचन्द्रभाण्डागारिकस्यायं पुत्र आसीत्। अस्य जन्म सं. १२४५ वर्षे, दीक्षा सं. १२५५ वर्षे, सूरिपदं सं. १२७८ वर्षे, स्वर्गमनं सं. १३३१ वर्षे ख० दर्शितम्। 'वीरप्रभ'इत्यस्य दीक्षाकालिकं नामात्र (पृ. २) सूचितम्। अस्य जिनप्रबोधसूरि–जिनरत्नसूरि–लक्ष्मीतिलकोपाध्यायाभयतिलकोपाध्याय–चन्द्रतिलकोपाध्याय–देवमूर्त्युपाध्याय–पूर्णकलशगणि–विवेकसमुद्रगणि–सर्वराजगण्याद्योऽनेके विद्वांसो ग्रन्थकाराः शिष्या आसन्। एतैरन्यैश्चैतदाज्ञाधारिभिर्जिनपतिसूरिशिष्यैर्जिनपालोपाध्याय–पूर्णभद्रगणि–सुमतिगण्यादिभिः स्वस्वग्रन्थेषु प्रस्तुतोऽयं सूरिः प्रस्तुतः। अस्य बीजापुरागमनादिवृत्तान्तः सङ्घपुरस्थशिलालेखादभयकुमारचरितप्रान्तप्रशस्तितश्च प्रकटमवगम्यते, विस्तरभयान्नात्र विविच्यते। क्र. १६२(२), १६८(२) इत्यत्र निर्दिष्टं 'सावगधम्म'पुस्तकं तु हरिभद्रसूरीयप्रथमपञ्चाशकाद् भिन्नं न विभाव्यते।

सम्यक्त्वालङ्कारः　　　　क्र. ६१

अस्य कर्ता विवेकसमुद्रगणिरित्यन्यत्र (टी.) सूचितम्। जिनेश्वरसूरेः संस्मरणमकार्यतानेनेति सम्भाव्यते स एव सं. १३३४ वर्षे पुण्यसारकथाकारोऽस्यापि कर्ता।

## जैनोपदेशग्रन्थाः।

उपदेशपदम्। हरिभद्रसूरिः　　क्र. २८,४८,१७७(२) [P. P. १।३४;३।४६]

मुनिचन्द्रसूरिकृतटीकासमन्वितं गुर्जरानुवादसहितमपूर्णरूपमेतन्मुद्रितम्। अयं ग्रन्थकारश्चतुर्दशशतप्रकरणप्रणेतृत्वेन विरहाङ्कत्वेन च सुप्रसिद्धः स एव।

टी. सं. १०५५　उपदेशपदटीका। वर्धमानसूरिः　　क्र. ४८,५१

पूर्वसूचितस्येयं टीका। टीकाकारोऽयं चैत्यवासिविजेतृत्वेन, सं. १०८० वर्षेऽष्टकवृत्त्यादिकर्तृत्वेन च सुप्रसिद्धस्य जिनेश्वरसूरेः, सं. १०८० वर्षे बुद्धिसागरव्याकरणविधातृत्वेन प्रसिद्धस्य बुद्धिसागरसूरेश्च गुरुर्ज्ञायते। उपमितिभवप्रपञ्चानामसमुच्चयः, उपदेशमालाबृहद्वृत्तिश्चास्य कृतिर्ज्ञायते। यस्य वचनादस्याः प्रथमा प्रतिराम्रदेवमुनिनाऽलेखि, येन च वृत्तिकारस्य स्तुतिः प्रान्ते वर्णिता स पार्श्विलगणिर्नागेन्द्रगच्छीयो ज्ञायते; यत्कृतप्रतिमाप्रतिष्ठायाः शकसं. ९१०=वि. सं. १०४५ वर्षीयो लेखः कटीग्रामे उपलभ्यते।

नाणाचि(इ)त्तम्।　　　क्र. ३०९(५) [P. P. १।४८]

एतद् विरहाङ्कहरिभद्रसूरिकृतिगणनायां गण्यते।

ले. सं. १३४५　　धर्मोपदेशमाला　　क्र. २५(२) [P. P. १।४७,५५,
६४,७०;५।८०]

इयं कृष्णर्षिशिष्यजयसिंहसूरिणा विरचितेत्यन्यत्र सभसूचि।

धर्मोपदेशमालाप्राकृतटीका　　　क्र. ११२

धर्मोपदेशमालावृत्तिः। जयसिंहाचार्यः　　पृ. ५३

आराधना　　　　　क्र. २५१(३)

---

१ 'उ(? धर्मो)पदेशमालावृत्तिः प्राकृता कृष्णर्षिशिष्यजयसिंहसूरिकृता ९१३ वर्षे।'—बृ०

२ 'धर्मोपदेशमालालघुवृत्तिः ९१५ वर्षे जयसिंहीया।'—बृ०

प्राचीनगूर्जरकाव्यसङ्ग्रहे मुद्रितायाः भिन्नाऽभिन्ना वेयमिति प्रतिदर्शनं विना निर्णेतुमशक्यम् ।

आराधनाकुलकादिप्रकरणपुस्तिका क्र. १९९

अभयदेवसूरिकृतमाराधनाकुलकं 'P. P. ३।८४' इत्यत्र दर्शितं तदेव सम्भाव्यते, किन्त्वन्ये के ग्रन्था इति विज्ञातुं न साधनम् ।

ले. सं. ११६९ उपदेशकुलकम् क्र. २८०(३)

'P. P. ३।१०' इत्यत्र दर्शितं तदेवैतदथवाऽन्यदिति न ज्ञायते ।

ले. सं. ११६९ जीवोपदेशपञ्चाशिका क्र. २८०(२)

इयं जिनचन्द्रसूरिकृता सम्भाव्यते ।

[सं. ११२५][1] ले. सं. १२०७ संवेगरङ्गशाला । जिनचन्द्रसूरिः क्र. १८३

आराधनेत्यपराह्वेयं नवाङ्गवृत्तिकाराभयदेवसूरेरभ्यर्थनया विरचिता । विरचयिता चायं जिनेश्वरसूरेर्मुख्यः शिष्योऽभयदेवसूरेश्च वृद्धसतीर्थ्यः । पाश्चात्यैरनेकैर्ग्रन्थकारैरस्याः कृतेः संस्मरणमकारि । अयं ग्रन्थः खरतरगच्छीयसंस्थया मुद्राप्यत इति श्रूयते । S. २।२८ इत्यत्र ले. सं. १२०३ दर्शितः । अत्रैव वटपद्रकेऽस्य लेखनमिति प्रान्ते सूचितम् ।

---

१ "विक्कमनिवकालाओ समइक्कंतेसु वरिसाण । एक्कारससु सएसु पणवीससमहिएसु ॥
निप्पत्ति संपत्ता एसाराहण त्ति फुडपायडपयत्था ।"—संवेगरंगशालाप्र० C.
'संवेगरङ्गशाला ११२५ वर्षे नवाङ्गाभयदेववृद्धभ्रातृजिनचन्द्रीया १००५३'—बृ०

२ "सिरिअभयदेवसूरि त्ति पत्तकित्ती परं भवणं ।
जेण कुबोहमहारिउविहम्ममाणस्स नरवइस्सेव ।
सुयधम्मस्स दढत्तं निव्वत्तियमंगवित्तीहिं ॥
तस्सब्भत्थणवसओ सिरिजिणचंदमुणिवरेण इमाण ।
मालागारेण व उच्चिणिवु(उण) वरवयणकुसुमाइं ॥
मूलसुयकाणणाओ गंथित्ता निययमइगुणेण दढं ।
विविहत्थसोरभभरा निम्मवियाराहणामाला ॥ C.

३ "संवेगरंगसाला न केवलं कव्वविरयणा जेण ।
भव्वजणविम्हयकरी विहिया संजमपवित्ती वि ॥"
—महावीरचरिते गुणचन्द्रगणिः ।

"संवेगरंगसाला विसालसालोवमा कया जेण ।
रागाइवेरिभयभीयभव्वजणरक्खणनिमित्तं ॥"—गणधरसार्धशतके जिनदत्तसूरिः ।

"नर्तयितुं संवेगं पुनर्नृणां लुप्तनृत्यमिव कलिना ।
संवेगरङ्गशाला येन विशाला व्यरचि रुचिरा ॥"—पञ्चलिङ्गीविवरणे जिनपतिसूरिः ।

"पश्चाज्जिनचन्द्रसूरिवर आसीद् यस्याष्टादश नाममालाः सूत्रतोऽर्थतश्च मनस्यासन् सर्वशास्त्रविदः । येनाष्टा(?)दशसहस्रप्रमाणा संवेगरङ्गशाला मोक्षप्रासादपदवी भव्यजन्तूनां कृता । येन जावालिपुरे दू(?)तेन श्रावकाणामग्रे व्याख्यानं 'चीवंदणमावस्सय' इत्यादिगाथायाः कुर्वता सिद्धान्तसंवादाः कथितास्ते सर्वे सुशिष्येण लिखिताः शतत्रयप्रमाणो दिनचर्याग्रन्थः श्राद्धानामुपकारी जातः ॥"
—गणधरसार्धशतकवृत्तौ सुमतिगणिः H.

[ वृ. सं. ११६५[1] ] नवपदप्रकरणबृहद्वृत्तिः । [ यशोदेव उपाध्यायः ]
क. ५६ [ P. P. ३।४०; A. ९।१३२ ]

मूलं देवगुप्तसूरिकृतम्, संक्षिप्ता वृत्तिरपि तेनैव विहितेत्यत्र (पृ. ७) सूचितम्। अस्याश्च बृहद्वृत्तेः कर्तुर्नाम-समयादि नात्रोपलभ्यते, तथाप्यन्यतो विज्ञायते। येन सं. ११७४ वर्षे नवतत्त्वविवरणम्, सं. ११७८ वर्षे चन्द्रप्रभचरितम् इत्यादयो ग्रन्था विहिताः, यस्य च पार्श्वे सं. ११९२ वर्षे क्षेत्रसमासवृत्तिकर्ता सिद्धसूरिरधीतवान्[2]; स एवोपकेशगच्छीयदेवगुप्तसूरिशिष्यः पूर्वं धनदेवनामोपाध्यायपदानन्तरं च यशोदेवनामधेयोऽस्याः कर्ता। अस्या रचनाऽणहिल-पाटकपुरे उपकेशीयवीरजिनमन्दिरे समजनि, यत्र चानेनान्याऽपि पूर्वदर्शिता कृतिः कृता।

[ वृ. सं. ११७०[3] ] भवभावनावृत्तिः । मलधारिहेमचन्द्रः क. २४६,२९५

'P. P. १।७८,९६' इत्यत्रास्या मूलं सूचितम्। 'P. P. ३।१५५' इत्यत्र तद्ग्रन्थकर्तृप्रशस्तिश्च प्रदर्शिता। अनेन सूरिवर्येण सं. ११७५ वर्षे विरचिताया विशेषावश्यकवृत्तेः प्रान्ते स्वग्रन्थसूचनायां सवृत्तिकस्यास्यापि नाम समसूचि। सं. ११९१ वर्षे उपदेशमालावृत्तिकर्ता विजयसिंहसूरिः, सं. ११९३ वर्षे मुनिसुव्रतचरित्रकर्ता श्रीचन्द्रसूरिश्चास्यैव शिष्यौ स्वस्वग्रन्थप्रशस्तावपि संसूचयामासतुरेतद्ग्रन्थान्, वर्णयामासतुश्च सिद्धराजादिराजकसत्कृतस्यैतस्य सूरिवर्यस्यावितथगुणानिति तत्रैव ( P. P. ५।१२,९०,९६ ) विशेषतो द्रष्टव्यम्।

---

"संवेगरंगशालागुरुभिः सुरविटपिकुसुममालेव ।
शुचिसरसाऽमरसरिदिव यस्य कृतिर्जयति कीर्तिरिव ॥"
—गड्डपुरमन्दिरशिलालेखः ।

"तस्याभूतां शिष्यौ तत्प्रथमः सूरिराजजिनचन्द्रः ।
संवेगरंगशालां व्यधित कथां यो रसविशालाम् ॥
बृहन्नमस्कारफलं श्रोतृलोकसुधाप्रपाम् ।
चक्रे क्षपकशिक्षां च यः संवेगविवृद्धये ॥"
—अभयकुमारचरित्रे चन्द्रतिलकोपाध्यायः ।

"ततः श्रीजिनचन्द्राख्यो बभूव मुनिपुङ्गवः ।
संवेगरंगशालां यश्चकार च बभार च ॥"—राजगृहशिलालेखे भुवनहितोपाध्यायः ।

1 'एतत्कथाविस्तरस्तु, अस्मत्प्रपञ्चितनवपदवृत्तेरेवावगन्तव्यः ।'
—नवतत्त्वविवरणे ( पृ. ५५ ) यशोदेवोपाध्यायः ।

"उपाध्यायो यशोदेवो धनदेवाख्यनामकः ।
जडोऽपि धार्ष्ट्यतश्चक्रे वृत्तिमेतां सविस्तराम् ॥
एकादशशतसङ्ख्येष्वब्देष्वधिकेषु पञ्चषष्ट्येयम् ।
अणहिलपाटकपुरे सिद्धोकेशीयवीरजिनभवने ॥"
—नवपदवृत्तिप्र० P., A. ९।१३२

'नवपदवृत्तिः ११६५ वर्षे यशोदेवोपाध्यायकृता ९५०० ।'—वृ०

2 "गुरुभ्रातृयशोदेवोपाध्यायज्ञातशास्त्रार्थः ।"—क्षेत्रसमासवृत्तौ सिद्धसूरिः ।

3 'भवभावनावृत्तिः सूत्रकृन्मलधारिहेमचन्द्रीया ११७० वर्षे १३००० ।'—वृ०

उपदेशमालाबृहद्वृत्तिः ( हेयोपादेया ) क्र. २७३,२८९

पृथक् पुस्तकद्वये दर्शिताऽपीयमेकैव ज्ञायते । लेखप्रशस्तिकर्त्रोश्च समयस्त्रयोदश-चतुर्दशशताब्दीरूपः परिगण्यतेऽतो लेखनकालोऽप्यस्याः स एवानुमीयते । मूलमात्रेयं धर्मदासगणिगदिता सिद्धर्षिकृतहेयोपादेयसंज्ञकवृत्तिसमन्विता चैषा मुद्रिता । सिद्धर्षिकृतैव केनापि कथानकैर्योजिताऽन्यत्र च वर्धमानसूरिकृतित्वेन दर्शिता सैवेयं बृहद्वृत्तिः प्रतिभाति ।

[ वृ. सं. १२३८[2] ] उपदेशमालावृत्तिः ( दोघट्टी ) । रत्नप्रभसूरिः

क्र. १३४ [ P. P. ३।१६५;५।१२३ ]

पूर्ववत् [3]सिद्धर्षिवृत्तिमनुसृत्यास्या अपि विशेषवृत्ते रचनेति तत्प्रान्तप्रेक्षणादवगम्यते । वृत्तिकारोऽयं सुप्रसिद्धस्य वादिदेवसूरेः शिष्यः, येन सं. १२३३ वर्षे प्रा. नेमिनाथचरित्रं प्राणायि । यस्य च प्रतिभापटुत्वपटहरूपा कृती रत्नाकरावतारिका सुप्रसिद्धा ।

वृ. सं. १२४३ प्रश्नोत्तररत्नमालावृत्तिः । हेमप्रभसूरिः क्र. ९०(१)

मूलमात्रेयं विमलसूरिकृता, सं. १४२९ वर्षे देवेन्द्रसूरिविरचितया वृत्त्या समेता च मुद्रिता । अयं वृत्तिकारश्चन्द्रप्रभसूरिसन्तानीयः, जयसिंहनृपतिसत्कृतधर्मघोषसूरितः सूरिपदं लब्धवतो यशोघोषसूरेः शिष्यः । हरिपालमन्त्रिविज्ञप्तेश्चास्या रचनेत्यादि स्वयं वृत्तिकर्त्रा प्रान्ते प्रोक्तमेव । अस्या लेखनप्रशस्तिकारो देवमूर्त्युपाध्यायश्चतुर्दशशताब्दीप्रारम्भे आसीदितीयं कागदपत्रात्मिकाऽपि प्रतिः प्राचीना ज्ञायते ।

[ वि. सं. १२९३[4] ] द्वादशकुलकविवरणम् । जिनपालः क्र. २२(१)

धर्मोपदेशमयान्येतानि द्वादश कुलकानि जिनवल्लभसूरिणा विरचितानि । येन पिण्डविशुद्धिप्रकरण–सूक्ष्मार्थसिद्धान्तविचारसार(सार्धशतक)—वस्तुविचारसार( षडशीति )—सङ्घपट्टक-धर्मशिक्षा-प्रश्नोत्तरशतक-चित्रकूटीयप्रशस्ति-स्वप्नाष्टकविचाराजितशान्तिस्तव-भावारिवारणस्तोत्र-

---

१ 'हेयोपादेयेत्यादिकैव केनापि कथाभियोजिता ग्रं. १५००,९५०० ।'—बृ०

"कृतिरियं जिन-जैमिनि-कणभुक्-सौगतादिदर्शनवेदिनः सकलग्रन्थार्थविनिगु(पु)णस्य श्रीसिद्धार्थमहावर्धमानाचार्यस्य । श्रीसिद्धर्षिकृता वृत्तिः कथानकैर्योजिता स्वावबोधार्थम् । प्राक्तनमुनीन्द्ररचितैश्चारुभिरुपदेशमालायाः ॥"—उप० P.

२ "विक्रमाद् वसुलोकार्कवर्षे माघे समर्थिता । एकादश सहस्राणि मानं सार्धं शतं तथा ॥"

—P. P. ३।१६८

'दोघट्टी उपदेशमालावृत्ती रत्नप्रभा सं. १२३८ वर्षे अमूत्रा ११११०, ससूत्रा ११८२९ ।'—बृ०

३ "व्याख्यातृचूडामणिसिद्धनाम्नः प्रायेण गाथार्थ इहाभ्यधायि ।"—P. P. ३।१६८

४ "श्रीमत्सूरिजिनेश्वरस्य सुमुनिव्रातप्रभोः साम्प्रतं

शीघ्रं चारुमहाप्रबन्धकवितुर्वाक्यात् समारम्भि यत् ।

तन्निष्ठामधुना ययौ गुणनवादित्यप्रमाणे वरे

वर्षे भाद्रपदे सिते शुभतरे द्वादश्यहे पावने ॥"—द्वा० कु० वि० P.

पौषधविधिप्रकरण-जिनकल्याणकस्तोत्र-जिनचरित्रमयजिनस्तोत्रादयोऽनेके ग्रन्था जग्रन्थिरे । संवेगरङ्गशाला च (पृ. २१) संशोधिता । जैनग्रन्थावल्यां तीर्थङ्करस्थानप्रकरण-पर्यन्तोपदेश-प्रतिक्रमणसामाचारी-रत्नचूडकथा-जिनभद्रीयसङ्ग्रहणीवृत्त्याद्यपि प्रस्तुतसूरिकृतं सूचितम् किन्तु तत् शङ्कितम् । अनेनाभयदेवसूरिपार्श्वेऽधीत्य चैत्यवासं त्यक्त्वा गृहस्थगेहवसतिः स्वीकृतेति नैकत्रोल्लेख उपलभ्यते (पृ. २)। गणधरसार्धशतकादिग्रन्थकारो जिनदत्तसूरिरस्य शिष्यो गणधरसार्धशतक-चर्चर्यादावस्य भूरिगुणान् प्राशंसत्। सत्तरि-षडशीतिटिप्पनकारो रामदेवगणिरस्य शिष्यः । सट्ठिसयप्रकरणकर्त्रा भां० नेमिचन्द्रेण चित्रकूटीयचामुण्डाऽऽदिप्रतिबोधकस्य प्रस्तुतसूरिवर्यस्य गुणवर्णनगीतानि विहितानि । नागपुरे नेमिनाथजिनालयनिर्माता वैराग्यशतककर्तुः पद्मानन्दकवेर्जनको धनदेवश्रेष्ठी चैत्यवासप्रतिषेधकस्यास्य सूरेर्भक्त आसीत् । गणधरसार्धशतकवृत्त्यादावस्य चरितं विशेषतो दर्शितं द्रष्टव्यम् । अयं सूरिवर्यो द्वादशभिरेतैः कुलकैर्गणदेवश्राद्धेन वाग्जडदेशलोकं प्राबोधयदिति विवृतिकारेण प्रारम्भे प्रोक्तम् । नवाङ्गीवृत्तिकाराभयदेवसूर्यादेशाद् गुणगरिष्ठमेनं सं. ११६७ वर्षे देवभद्राचार्यः (पृ. ४७) सूरिपदे न्यस्तवान् । तदनन्तरं च षण्मासैरस्य स्वर्गमनं श्रूयत इत्येतेषां कुलकानां रचनासमयो द्वादशशताब्द्या उत्तरार्धप्रारम्भरूपोऽथवा पूर्वार्धरूपोऽवसीयते । विवरणकारस्त्वयं जिनपाल उपाध्यायो जिनपतिसूरेः शिष्यः, येन सं. १२६२ वर्षे षट्स्थानकवृत्तिः, सं. १२९३ वर्षे पञ्चलिङ्गीविवरणटिप्पनम्, सं १२९४ वर्षे उपदेशरसायन-चर्चरीविवृती, सनत्कुमारचरित्र-स्वप्नविचाराष्टस्वप्नभाष्यादि विहितम् । विवृतिकर्त्रेदं विवरणं जिनेश्वरसूरिवाक्याद् ( पृ. ४० ) विहितमिति स्वयमत्र समसूचि ।

ले. सं. १३१० हितोपदेशामृतम् । परमानन्दसूरिः क्र. ३०१(५)

प्राकृतभाषायां पञ्चविंशत्यधिकपञ्चशतगाथाप्रमाणमेतत् पत्रसङ्ख्याया आधिक्येन सवृत्तिकं सम्भाव्यते । अयं परमानन्दसूरिः स्वमभयदेवसूरिशिष्यदेवभद्रसूरेः शिष्यत्वेन परिचाययति स्म । श्रीधरभाण्डारकरेणास्य लेखनसमयो रचनासमयत्वेन निर्दिष्टो न सम्यग् । 'हितोपदेशमालावृत्तिः सूत्रकारप्रभा(?)नन्दभ्रातृपं० परमानन्दीया १३०४ वर्षे ९५००।'—बृ० इत्युल्लेखोऽस्य वृत्तिविषयकः प्रतिभाति ।

---

१ "धर्मोपदेशकुलकाङ्कितसारलेखैः श्राद्धेन बन्धुरधियो गणदेवनाम्ना ।
प्राबोधयन् सकलवाग्जडदेशलोके सूर्योऽरुणेन कमलं किरणैरिव स्वैः ॥
तानि द्वादश विस्तृतानि कुलकान्यम्भोधिवद् दुर्गमा-
न्यत्यन्तं च गभीरभूरिसुपदान्युन्निद्रितार्थानि च × × "—द्वा० कु० वि० P.

निमज्जज्जन्तुजातोद्धरणाय गुणः संवेगरससारद्वादशकुलकादिरूपा रज्जुर्येन दत्ता ।'
—गणधरसार्धशतकवृत्तौ सुमतिगणिः H.

२ "एवं श्रीजिनवल्लभस्य सुगुरोश्चारित्रिचूडामणे-
र्भव्यप्राणिविबोधने रसिकतां वीक्ष्याद्भुतां शाश्वतीम् ।
आदेशाद् गुणविन्नवाङ्गविवृतिप्रस्तावकस्यादरात्
प्रादात् सूरिपदं मुदञ्चितवपुः श्रीदेवभद्रप्रभुः ॥—द्वा० कु० वि० P.

[वृ. सं. १५१२][1] पुष्पमालावृत्तिः। साधुसोमः पृ. ५८

उपदेशमालेत्यपराह्वेयं मूलमात्रा मलधारिहेमचन्द्रसूरिविनिर्मिता गूर्जरानुवादसहिता मुद्रिता। क्र. ३०१(४) इत्यत्र मूलमात्रा दर्शिताऽपि पत्रसङ्ख्याया आधिक्येन सवृत्तिकाऽनुमीयते। अस्याश्च चतुर्दशसहस्रश्लोकप्रमाणा बृहद्वृत्तिः स्वयमेव मूलग्रन्थकर्त्रा सं. ११७५ वर्षे विहिताऽस्त्येव। संक्षिप्ताया अस्यास्तु वृत्तेर्विरचयिता साधुसोमः खरतरगच्छीयजिनभद्रसूरि (पृ.११) शिष्यसिद्धान्तरुचेः शिष्यः, येन सं. १५१९ वर्षे चरित्रपञ्चकवृत्तिरपि विहिता (पृ. १३)।

धर्मोपदेशः। [लक्ष्मी]वल्लभः पृ. ५६

यद्यपि दलालेनास्य कर्तुर्नाम वल्लभ इति १०७ श्लोकप्रमाणं च दर्शितम्, किन्तु खरतरगच्छीयलक्ष्मीकीर्तिशिष्यलक्ष्मीवल्लभगणिरस्य कर्ता ज्ञायते; यत्कृतोत्तराध्ययन-कल्पसूत्रवृत्तिः प्रसिद्धा। ॐकारादारभ्याक्षकारमेकादशोत्तरशतकाव्यपरिमितस्य द्वादशप्रक्रमपरिच्छिन्नस्यास्य स्वोपज्ञा पञ्चदशशतश्लोकदेशीया सं. १७४५ वर्षे विरचिता वृत्तिरत्र H. वर्तते[2]। सप्तदशशताब्द्युत्तरार्धे विद्यमानो ज्ञानविमलपाठकशिष्यो वल्लभोपाध्यायोऽस्माद् भिन्नः।

[सं. १८४७] सूक्तरत्नावलीवृत्तिः। क्षमाकल्याणः पृ. ६० [A. ९।८३]

आधुनिकोऽयं विद्वान्, अनेन सं. १८३० वर्षे खरतरगच्छपट्टावली, सं. १८३३ वर्षे आत्मप्रबोधः (संशोधनम्), सं. १८३५ वर्षे चातुर्मासिक-होलिकाव्याख्यानम्, सं. १८३८ वर्षे साधु-श्रावकविधिप्रकाशः, सं. १८३९ वर्षे यशोधरचरितम्, सं. १८५० वर्षे जीवविचारवृत्तिः, सं. १८२९-५२ वर्षे गौतमीयकाव्यव्याख्या, सं. १८५४ वर्षे तर्कसङ्ग्रहफक्किका, सं. १८६० वर्षे मेरुत्रयोदश्यक्षयतृतीया-ऽष्टाहिकाव्याख्यानम्, सं. १८६९ वर्षे श्रीपालचरित्रव्याख्या, चतुर्विंशतिजिनचैत्यवन्दन-परसमयसारविचारसङ्ग्रह-विचारशतकबीजक-समरादित्यचरित-स्वाध्यायादयश्चानेके संस्कृत-गूर्जरग्रन्था निर्मिताः।

## जैनधर्मकथा-चरितानुयोगः।

वसुदेवहिण्डी (प्रथमखण्डः)। [सङ्घदासवाचकः][3] पृ. ५३,५६.

[P. P. १।४;३।१८४,१९६]

प्राकृतभाषायामेतादृग् विस्तृतं वसुदेवचरित्रं नान्यद् विलोक्यते। कथावस्तुसंक्षेपः 'त्रि. श.पु. पर्व ८। सर्ग ३-४' इत्यादौ द्रष्टव्यः। येन महत्पञ्चकल्पभाष्यं विरचितम्, स एव सङ्घदासक्षमाश्रमणोऽस्याः कर्ता ज्ञायते। विरहाङ्कहरिभद्रसूरितोऽप्यस्य प्राचीनत्वं तदीयग्रन्थदर्शनादवगम्यते।

कुवलयमाला। दाक्षिण्यचिह्नसूरिः क्र. २२९

[शकसं. ७००=वि. सं. ८३५][4] ले. सं. ११३९।

सकलकथा-खण्डकथोल्लापकथा-परिहासकथा-वरकथासञ्ज्ञकानां पञ्चानां कथानां लक्षण-

---

१ वर्षेऽर्कबाणचन्द्रे वृत्तिः श्रीक्षीमराजशालायाम्।
द्वीन्द्रियशतमितिरेषा समर्थिताऽहम्मदावादे॥ M.

२ संवत्पांडव-पाठक-मुनि-भूमिमिते च माघवे मासि।
शुक्लायां तृतीयायां संपूर्णा वृत्तिरेषाऽभूत्॥ H.

३ 'वसुदेवहिण्डिप्रथमखण्डं सङ्घदासवाचककृतम् ११०००'—बृ०

४ सगकाले वोलीणे वरिसाण सएहिं सत्तहिं गएहिं।
एगदिणेणूणेहिं एस समत्ता वरण्हम्मि॥—कु० प्रान्ते
'कुवलयमाला प्रा० मु० ८३५ वर्षे उद्योतनसूरीया १३०००'—बृ०

धरा सङ्कीर्णकथाऽत्र प्रतिपादिता । यद्यप्यत्र प्राकृतभाषाया मुख्यता तथापि संस्कृतापभ्रंश-पिशाचीभाषायामपि वर्णनं क्वचित्क्वचिन्निबद्धम् । अस्याः कथाया संक्षेपः संस्कृतभाषायां वि० चतुर्दशशताब्दीप्रारम्भे परमानन्दसूरिशिष्यरत्नप्रभसूरिणा विरचितः, स च आत्मानन्दसभाह्वया संस्थया मुद्रापितः । कथास्वरूपं तत्रैव द्रष्टव्यम्, तत्प्रस्तावनायां चास्याः प्रारम्भप्रान्तभाग उद्धृतोऽतो नात्रावतार्यते । ग्रन्थकारः स्वकीयमुद्योतन इत्यपरनाम, 'तत्त्वाचार्य' इति गुरोर्नाम च प्रादर्शयत् । ही. S. २।२८ इत्यत्र चास्याः कर्ता हरिभद्रसूरिर्निर्दिष्टो न सम्यग्[1] । वीरभद्राचार्य-हरिभद्रौ तु स्वविद्यागुरुत्वेन वर्णितावनेन ग्रन्थकर्त्रा[2] । अयं कविः पादलिप्त-शातवाहन-षट्पर्णक-वाल्मिकि(?)-बाण-विमलाङ्क-देवगुप्त-प्रभञ्जन-भवविरह(हरिभद्र) प्रभृतिपूर्वकवीनस्मार्षीत् । सुप्रसिद्धहेमचन्द्रसूरिगुरुदेवचन्द्रसूरिः स्मरति स्मैनं ग्रन्थकारम्[3] ।

[सं. ९२५] ले. सं. १२२७ महापुरिसचरियम् । शीलाचार्यः[4] क्र. ३११

अत्र चतुःपञ्चाशन्महापुरुषाणां चरितं प्राकृतभाषायां वर्ततेऽतोऽस्य 'चउप्पन्नमहापुरिसचरियं'[5] इत्यपि नाम विलोक्यते । चरितवस्तु हेमचन्द्रसूरीयत्रिषष्टिशलाकापुरुषचरिते दर्शितं तदेव । अयं

---

१ सीसेण तस्स एसा हिरिदेवीदिन्नदंसणमणेण ।
रइया कुवलयमाला विलसिरदक्खिन्नइंधेण ॥
राया खत्तियाणं वंसे जाओ वडेसरो नाम
तस्सुज्जोयणनामो तणओ अह विरइया तेण ॥
कृतिः श्रीश्वेतपटनाथमुनेर्दाक्षिण्यलाञ्छनस्योद्योतनसूरेः ।— कुवलयमाला.

दाक्षिण्यचिह्नमुनिपेन विनिर्मिता या
प्राक् प्राकृता विबुधमानसराजहंसी ।
तां संस्कृतेन वचसा रचयामि चम्पूं
सद्यः प्रसद्य सुधियः प्रविलोकयन्तु ॥—रत्नप्रभसूरिः ।

२ दिन्नजहिच्छियफलओ बहुकित्तीकुसुमरेहिराभोओ ।
आयरियवीरभद्दो अवावरो कप्परुक्खो व्व ॥
सो सिद्धंतम्मि गुरू पमाणनाएण जस्स हरिभद्दो ।
बहुगन्थसत्थवित्थरपयड[सम्मत्तसुअ]सच्चत्थो ॥—कुवलयमाला.

३ 'दक्खिन्नइंधसूरिं नमामि वरवण्णभासिया सगुणा ।
कुवलयमाल व्व म(सु)हाकुवलयमालाकहा जस्स ॥'
—शान्तिनाथचरितप्रारम्भे । P. P. ५।७३

४ 'महापुरुषचरित्रं प्रा० मु० शलाकापुरुषवृत्तवाच्यं ९२५ वर्षे शीलाचार्यैः कृतम्
१००००'—बृ०

५ चउप्पण्णमहापुरिसाण एत्थ चरियं समप्पए एयं ।
सुयदेवयाए पयकमलकंतिसोहाणुहावेण ॥—महा० H. P.

शीलाचार्यो [1]निर्वृतिकुलीनमानदेवसूरेः शिष्यः। आचाराङ्ग-सूत्रकृताङ्गवृत्तिकारः शीलाचार्योऽस्माद् भिन्नो ज्ञायते। जीवसमासटीकाऽस्य शीलाचार्यस्य कृतिर्वाऽपरस्येति न निश्चित्य वक्तुं शक्यते। अस्य लेखनं सं. १२२७ वर्षे कुमारपालराज्ये स्पष्टं सूचितमतः ही. S. २।२८ इत्यत्र च निर्दिष्टः सं. ११२७ रूपो लेखनसमयो भ्रान्तिभवो ज्ञायते।

ले. सं. ११०९ पञ्चमीकहा। महेश्वरसूरिः पृ. ५२

अस्मादेवादर्शात् सं. १६५१ वर्षे लिखिते पत्तनीयपुस्तके 'सं. १००९ वर्षे' लेखनमस्य प्रादर्शि। ग्रन्थकारस्य प्राचीनताऽतः स्फुटमवगम्यते। समयनिर्णयस्तु दुःशकः। ग्रन्थकारेण स्वपरिचये केवलं सज्जनोपाध्यायशिष्यत्वं [2]समसूचि। अस्य ग्रन्थस्य पञ्चमीमाहात्म्यवर्णनपरत्वात् 'पंचमीमाहप्पं' इत्यपरं सुसम्बद्धं नाम दृश्यते। प्राकृतभाषायां सहस्रद्वयपरिमितासु गाथासु [3]दश कथानकान्यत्र वर्तन्ते। तत्रापि प्रथमा जयसेनकथा पञ्चशतगाथासु, दशमी भविष्यदत्तकथाऽपि तावन्मितासु गाथासु। शेषा अष्ट कथाः प्रत्येकं सपादशतगाथाप्रमाणत्वात् सहस्रगाथासु समांशेन विभक्ताः। साम्प्रतं प्रसिद्धा धर्कटवणिग्वंशोद्भवधनपालनिर्मिता अनया संस्थया प्रकाशिताऽपभ्रंशा भविस्सयत्तकहा (पंचमीकहा) अस्या एव प्रान्तकथायाः प्रपञ्चरूपा। पूर्वोक्ताया जयसेनकथाया अस्मत्कृतो गूर्जरानुवादो जैनधर्माभ्युदयग्रन्थमालायां मुद्रितः। P. P. ११६७ इत्यत्र 'महेन्द्रसूरिकृतं भविदत्ताख्यानं' दर्शितं तदप्येतदेव महेश्वरसूरिरचितं भविष्यदत्तकथावसानं पञ्चमीमाहात्म्यं सम्भाव्यते। लेखकस्खलनातः प्रेक्षकस्यापि स्खलना परम्परयाऽन्यत्रावतीर्णा प्रेक्ष्यते।

ले. सं. १२२२ शालिभद्रचरित्रम् (प्रा०) क्र. २४९(३) [P. P.१।७३,८६,९५]

कर्तुर्नाम नोपलभ्यते। चरित्रवस्तुजिज्ञासा पं० धर्मकुमारकृतात् शालिभद्रचरित्रात् पूरयितुं शक्यते।

जम्बूचरित्रम् (प्रा०) क्र. २२८

चरित्रकारस्य नाम न ज्ञायते। कर्त्रा स्वस्य प्रद्युम्नसूरिपट्टधरवीरभद्राचार्यशिष्यत्वं तु स्वयमत्र सूचितम्। 'गुणपालणेक्कनिट्ठेण साहुणा पवयणभत्तेण। सीसेण तस्स रइयं चरियमिमं जंबुनामस्स ॥' इति प्रान्ते दर्शनाद् 'गुणपाल' इति कर्तुर्नाम ही. निर्दिष्टं सम्भवेत्। चरितवस्तुज्ञानार्थं हेम. परिशिष्टपर्व जयशेखरसूरिकृतं जम्बूचरित्रं वा द्रष्टव्यम्।

---

१ आसि जसुज्जजोण्हाधवलियनेव्वुयकुलंबराभोओ।
तुहिणकिरणो व्व सूरी इहइं सिरिमाणदेवो त्ति ॥
सीसेण तस्स रइयं सीलायरिएण पायडफुडत्थं।
सयलजणबोहणत्थं पाययभासाए सुपसिद्धं ॥—महा० H. P.

२ दोपक्खुज्जोयकरो दोसासंगेण वज्जिओ अमओ।
सिरिसज्जणउज्झाओ अउव्वचंदु व्व अक्खत्थो ॥
सीसेण तस्स रइया दसवि कहाणाइ [इ]मे उ पंचमिए।
सूरिमहेसरएणं भवियाणं बोहणट्ठाए ॥ P.

३ 'पञ्चमीकथा दशकथानकात्मिका प्रा० महेश्वरसूरीया २००४'—बृ०

**सं. ११२३        विलासवईकहा । साधारणः        क्र. १३१,१६७**

साधारणाङ्का एकादशसन्धिमयाऽपभ्रंशभाषानिबद्धेयं कथा 'समराइच्चकहा'नाम्ना सुप्रसिद्धायाः कथाया उद्धृतेति स्वयमत्र कविना प्रोक्तम् । कथावस्तुज्ञानार्थं समरादित्यकथायाः पञ्चमभववर्णनं विलोकनीयम् । ग्रन्थकारः स्वस्य कोटिकगण-वज्रशाखाभवबप्पभट्टिसूरिसन्तानीयत्वं यशोभद्रसूरिगच्छीयत्वं च समदर्शयत् । कविः 'साधारण' इति नाम्ना पूर्वं सुप्रसिद्ध आसीत्, तन्नाम्नैव चानेन विनिर्मितानि बहुविधानि स्तुतिस्तोत्राणि देशेषु पठ्यमानान्यासन् । पश्चात् तु सिद्धसेनसूरिरिति नाम प्रतिष्ठितमित्यस्याः प्रान्तोल्लेखदर्शनेन ज्ञायते ।

**[ सं. ११३९[1] ] ले. सं. १२४२ महावीरचरियम् । गुणचन्द्रगणिः**

**क्र. ३०५ [ P. P. ३।३०५;५।३२ ]**

अष्टप्रस्तावयुक्तं प्राकृतभाषानिबद्धं द्वादशसहस्रश्लोकसङ्ख्यमेतादृग् महन्महावीरचरितं नान्येन कविना रचितं दृश्यते श्रूयते वा । चरितकारोऽयं कविः सुमतिवाचकस्य शिष्यः । नवाङ्गवृत्तिकाराभयदेवसूरिशिष्यप्रसन्नचन्द्रसूरिवचनेनास्य रचनेत्यादि विस्तृतया प्रान्तप्रशस्त्या प्रकटमवगम्यते । अनेन गुणचन्द्रगणिना संवेगरङ्गशालाप्रतिः संस्कृताऽऽसीदिति तत्प्रान्तोल्लेखाज्ज्ञायते ।

**[ सं. ११६०[3] ] ले. मं १३३९ आदिनाथचरित्रम् । वर्धमानाचार्यः**

**क्र. ३३४ [ P. P. ५।८१ ]**

स्तम्भतीर्थेऽस्य रचना । एकादशसहस्रश्लोकप्रमाणं पञ्चावसरविभक्तं प्राकृतभाषानिबद्धमेतत् । एतादृग् विस्तृतं प्रथमजिनचरितं नान्यकविकृतं दृष्टं श्रुतं वा । मध्ये चात्र क्वचित् क्वचिदपभ्रंशभाषाऽपि प्रयुक्ता दृश्यते । अयं वर्धमानाचार्यो नवाङ्गीवृत्तिकाराभयदेवसूरेः शिष्यः, येन सं. ११४० वर्षे निर्मितमपरं प्रा० मनोरमाचरित्रं श्रूयते, सं. ११७२ वर्षे निर्मिता धर्मरत्नकरण्डवृत्तिश्च प्रसिद्धा ।

---

१ नंदसिहिरुद्दसंखे वोक्कंते विक्कमाउ कालम्मि ।
जेट्ठस्स सुद्धतईयातिहिम्मि सोमे समत्तमिमं ॥—महा० प्र० P. P. ५।३६

२ 'वीरचरित्रं प्रा० ११३९ वर्षे गुणचन्द्रगणिकृतम् १२०००'—बृ०

३ विक्कमनिवकालाउ सएसु एक्कारसेसु सट्ठेसु ।
सिरिजयसिंहनरिंदे रज्जं परिपालयंतम्मि ॥
खंभाइत्थट्ठिएहिं सियपक्खे चित्तविजयदसमीए ।
पुस्सेणं सुरगुरुणो समत्थियं चरियमेयं ति ॥ P. P. ५।८१

४ 'श्रीआदिनाथचरित्रं प्राकृतं जयसिंहदेवराज्ये ११६० वर्षे वर्धमानसूरिरचितम् ११०००'—बृ०

५ "सत्तर्कन्यायचर्चार्चितचतुरगिरः श्रीप्रसन्नेन्दुसूरिः
सूरिः श्रीवर्धमानो यतिपतिहरिभद्रो मुनिर्देवभद्रः ।
इत्याद्याः सर्वविद्यार्णवकलशभुवः संचरिष्णूरुकीर्ति-
स्तम्भायन्तेऽधुनाऽपि श्रुतचरणरमाराजिनो यस्य शिष्याः ॥"
—चित्रकूटीयवीरजिनचैत्यप्रशस्तौ जिनवल्लभसूरिः ।

[ सं. ११६०[1] ] शान्तिनाथचरित्रम् । देवचन्द्रसूरिः क्र. ९७ [P. P. ५।७२]

प्राकृतभाषायां द्वादशसहस्रश्लोकप्रमाणमेतत् । नापरं शान्तिचरितमेतादृग् बृहद् दृष्टि-गोचरीक्रियते । ग्रन्थकारोऽयं पूर्णतल्लगच्छीययशोभद्रसूरि–प्रद्युम्नसूरि–गुणसेनसूरेः शिष्यः, सुप्रसिद्धहेमचन्द्राचार्यस्य च गुरुः। [2]हेमसूरिः, सं. १२१४ वर्षे [3]श्रीचन्द्रसूरिः, सं. १२४१ वर्षे [4]सोमप्रभाचार्योऽन्येऽपि चैनं निजनिजग्रन्थे स्मृतवन्तः । [5]मुनिदेवसूरिकृतं सं० शान्तिचरितमस्यैव संक्षिप्तस्वरूपम् । ग्रन्थकारस्यान्या कृतिः स्थानकवृत्तिर्वर्तते, तदतिरिक्ता नाद्यावध्युपलब्धा ।

[ सं. ११६१[6] ] पृथ्वीचन्द्रचरित्रम् । शान्तिसूरिः क्र. १४६ [ P. P. ५।११७ ]

ले. सं. १२२५ । 'अस्य कर्ता नेमिचन्द्रसूरिः, रचना च सं. ११३१ वर्षे' इति ही. श्रीधरभाण्डारकरेण च S. २।२७ इत्यत्र प्रादर्शि; किन्तु भ्रान्तिरियं प्रतिभाति यतो ग्रन्थकर्ता शान्तिसूरिः, रचना च वीरनि० सं. १६३१=वि. सं. ११६१ वर्षे इति ग्रन्थप्रान्तेऽन्यत्र च

---

१ 'शान्तिचरितं प्रा० गद्यपद्यमयं ११६० वर्षे हेमसूरिगुरुदेवचन्द्रसूरीयम् १२१००'—बृ०

२ "कृत्वा स्थानकवृत्ति–शान्तिचरिते प्राप्तः प्रसिद्धिं परां
सूरिर्भूरितपःप्रभाववसतिः श्रीदेवचन्द्रोऽभवत् ॥
आचार्यो हेमचन्द्रोऽभूत् तत्पादाम्भोजषट्पदः ।
तत्प्रसादादधिगतज्ञानसम्पन्महोदयः ॥"—त्रि. श. पु. प्र.

३ जिणसंतिचरित्तामयपीणियनरदेवपाणिनिवहेण ।
सिरिदेवचंदगुरुणा स दुद्धसिंधू धुवं विजिओ ॥—सनत्कुमारचरिते

४ "कयसुकयकुमुयबोहा चउर–चउरप्पमोयसंजणणी ।
संतिजिणचरित्तकहा जुण्ह व्व वियंभिआ जत्तो ॥"—कु. १ प्रस्तावे

५ "वन्दे श्रीदेवचन्द्रं तं यत्कृतं प्राकृतं बृहत् ।
श्रीशान्तिवृत्तं संक्षिप्य संस्कृतं क्रियते मया ॥
अमानं महिमानं कस्तस्य स्तौतु गणेशितुः ।
शिष्यो यस्योदितो हेमचन्द्रसूरिर्जगद्गुरुः ॥"—शान्तिनाथचरिते मुनिदेवसूरिः ।

६ इगतीसाहियसोलससएहिं वासाण निव्वुए वीरे ।
कत्तियचरमतिहीए कित्तियरिक्खे परिसमत्तं ॥
जो सव्वदेवमुणिपुंगवदिक्खिएहिं साहित्त–तक्क–समएसु सुसिक्खिएहिं ।
संपाविओ वरपयं सिरिचंदसूरिपुज्जेहिं पक्खमुवगम्म गुणेसु भूरि ॥
संवेगबुनिवा(या)णं एयं सिरिसंतिसूरिणा तेण ।
वज्जरियं वरचरियं मुणिचंदविणेयवयणाओ ॥ P. P. ५।११७

७ 'सिरिसंतिसूरिवाणी विलासिणी विविहभंगभावेहिं ।
पुहवीचंदसुरंगे रंजइ हिययाइ नचंती ॥'—सनत्कुमारचरिते श्रीचन्द्रसूरिः ।
'वादीन्द्रः कविपुङ्गवैकतिलकः साक्षात् त्रिलोकीसरः–
क्रोडक्रीडदशेषसज्जनमहो चारित्रिचूडामणिः ।
नन्द्यादद्भुतभाजनं स भगवान् श्रीशान्तिसूरिप्रभुः

स्पष्टमुपलभ्यते। सं. १५३४ वर्षे सत्यराजगणिना कृतं पृथ्वीचन्द्रचरितं गद्य-पद्य-भङ्ग-श्लेषमय-मिदमुपजीव्य विरचितमिति तत्रत्याव्यक्तोल्लेखेनानुमीयते।

रत्नचूडकथाविषमपदविवरणटिप्पणकम् क्र. २२(२)

'सहस्रत्रयश्लोकप्रमाणा गद्यकथेयं जिनवल्लभसूरिविहिता सटिप्पना १५८ जीर्णताडपत्रेषु वर्तते' इत्यन्यत्र (ही.) सूचितं सन्दिग्धं प्रतिभासते।

[सं. ११६८[2]] पार्श्वनाथचरित्रम्। देवभद्रसूरिः क्र. २९६ [P. P. ३।६४]

प्राकृतभाषायां नवसहस्रश्लोकसङ्ख्याकमेतच्चरितं[3] नवाङ्गवृत्तिकाराभयदेवसूरिशिष्यप्रसन्नचन्द्र-सूरिसेवकेन सुमत्युपाध्यायशिष्येण देवभद्रसूरिणा भृगुकच्छे निर्मितम्। अन्याऽप्यनेन संवेग-रङ्गमालाऽऽराधनाशास्त्र-वीरचरित-कथारत्नकोशसंज्ञका ग्रन्थत्रयी विरचितेति प्रशस्तिदर्शना-देन्यैरन्यत्रोक्तत्वाच्च विज्ञायते[4]।

[सं. ११७०] ले. सं. १२४५ नेमिचरितम्। मलधारिहेमचन्द्रः क्र. १३८(१)

ग्रं. ५१०२[5]। भवभावनावृत्त्यन्तर्गतत्वात् तन्निर्माणसमय एवास्यापि रचनासमयः। P. P. ५।२४ इत्यत्र निर्दिष्टस्यास्य च नेमिचरितस्य प्रारम्भगाथा श्लोकसङ्ख्या च समानैव दृश्यते; तथापि तत्प्रान्ते 'सव्वुत्तमरयणगुणे वल्लवो भणइ नूणं' इत्यादि दर्शनात् प्रॉ. पीटर्सनेन तत्कर्ता गुणवल्लभो दर्शितः, किन्तु भवभावनावृत्त्यन्तर्गतत्वादस्य चरितस्य तत्कर्ता (पृ. ३९) मलधारिहेमचन्द्रसूरिरस्य कर्तेति स्पष्टं प्रतिभाति।

---

पृथ्वीचन्द्रचरित्रसत्रमकरोद् यो विश्वदत्तोत्सवः॥'

—गुरुस्तुतौ धर्मप्रभसूरिः P. P. ५।१२५

'पृथ्वीचन्द्रचरितं प्रा० मुख्यं गाथादिमयं ११७(६)१ वर्षे शान्तिसूरिभिः कृतम् ७५००'—बृ०

१ "प्राकृतबन्धेनैतच्चरितं रचितं हि पूर्वकविवर्यैः।
मुग्धावबोधकृतये व्यधामिहानुष्टुबादिविधिम्॥"—पृ० सत्यराजगणिः।

२ 'काले वसुरसरुद्दे विक्कमाउ सिद्धमिमं।'—P. P. ३।६५

३ 'पार्श्वचरितं प्रा० ११६८ वर्षे नवाङ्गअभयदेवप्रथमशिष्य(?)देवभद्राचार्यैः कृतम् ९००० '—बृ०

४ 'पहुदेवभद्दकित्ती चउसंखपबंधविरयणविढत्ता।
अज्ज वि अखलियपसरा अविरामं भमइ भुवणंमि॥'

—सनत्कुमारचरिते श्रीचन्द्रसूरिः।

'श्रीदेवभद्रसूरीणां धर्मशास्त्रचतुष्टयी।
पुरुषार्थ-गति-ध्यान-शब्द-धर्मोपलब्धिकृत्॥'—कुन्थुनाथचरिते पद्मप्रभसूरिः।

"चक्रे श्रीजिनचन्द्रसूरिगुरुभिर्धुर्यः प्रसन्नाभिध-
स्तेन ग्रन्थचतुष्टयीस्फुटमतिः श्रीदेवभद्रप्रभुः।"—मुनिसुव्रतचरित्रे पद्मप्रभसूरिः।

"तथा देवभद्राचार्येणापि तुष्टेन......दत्तं येन महावीरचरित-पार्श्वचरितादीनि चत्वारि कथाशास्त्राणि पट्टिकायां लिखितानि॥"—गणधरसार्धशतकवृ० सुमतिगणिः।

५ 'नेमिचरितं प्रा० भवभावनावृत्त्यन्तर्गतमन्तरङ्गवक्तव्यतामिश्रम् ५१०२'—बृ०

ले. सं. १२४६ जिनदत्ताख्यानम् । सुमतिगणिः क्र. १३८(२)

'जिनदत्तकथा १२००' इति बृ० निर्दिष्टा कथाऽस्माच्चरितात् पृथक् प्रतिभासते । P. P. ५।६२,१०८ इत्यत्र निर्दिष्टमेतन्नामकं चरितमप्यस्माद् भिन्नं प्रतिभाति । ग्रन्थकारोऽयं पाडिच्छयगच्छीयनेमिचन्द्रसूरेः शिष्यः । अयं नेमिचन्द्रसूरिः सर्वदेवसूरिणोत्तमपदे (सूरिपदे) स्थापित आसीदिति वर्णितं वर्णनीयेन वर्णिनाऽनेन गणिना । प्रा० जिनदत्तमहर्षिचरितं नान्यत्र दृश्यते ।

सं. ११७८, ले. सं. १२१७ चन्द्रप्रभचरित्रम् । यशोदेव उपाध्यायः क्र. २५६

विजयसिंहसूरिसत्कमेतत् प्राचीनपुस्तकम् । अयं ग्रन्थकारो देवगुप्तसूरेः शिष्योऽस्य 'धनदेव' इति पूर्वनाम, उपाध्यायपदे प्राप्ते च यशोदेव इति नाम जातमासीत् । उपाध्यायपदानन्तरं चाशावल्लीपुर्यां धवलभाण्डशालिककारिते पार्श्वजिनभवने एतच्चरितं प्रारभ्याणहिल्लवाडपत्तने वीरजिनमन्दिरे सिद्धराजजयसिंहराज्ये पूर्णीकृतमित्यत्र स्वयं ग्रन्थकारेण वर्णितं विलोक्यतेऽन्यत्रापि[1] च यशोदेवकृतित्वेनेदं सूचितम्, तथापि S. २।२८ ही. इत्यत्र च सं. ११९२ वर्षे बृहत्क्षेत्रसमासवृत्तिकर्तृगुरोर्गुरुः सिद्धसूरिरस्य कर्ता सम्भावितः, रचना चास्य सं. ११३८ वर्षे सूचिता तत्तु सुसमीक्षणाभावादिति तर्कये । सिद्धसूरेस्त्वयं सतीर्थ्यो विद्यागुरुरपि[2] । अनेनोपाध्यायेन सं. ११६५ वर्षे नवपदप्रकरणबृहद्वृत्तिः, सं. ११७४ वर्षे च नवतत्त्वप्रकरणवृत्तिरपि विनिर्मिता ।

सं. ११८७ नर्मदासुन्दरीकथा । महेन्द्रसूरिः पृ. ५४ [बृ०]

सूरिणेयं प्राकृतकथा स्वशिष्याभ्यर्थनया विरचिता । प्रथमा प्रतिश्च प्रथमाचार्यस्य शिष्येण गणिशीलचन्द्रेण लिखिता । शीलमाहात्म्यमत्र वर्णितम् । कथावस्तु शीलोपदेशमालावृत्त्यादौ ( शीलत० पृ. २९८-३१६ ) दर्शितं तदेव ।

सं. १२१६ नेमिनाथचरित्रम् । हरिभद्रसूरिः क्र. २३२

अष्टसहस्र[3]श्लोकपरिमितं प्राकृतापभ्रंशभाषानिबद्धमेतच्चरितं कुमारपालराज्येऽणहिल्लपाटके नगरे वटगच्छीयजिनचन्द्रसूरिशिष्यश्रीचन्द्रसूरिशिष्येण हरिभद्रसूरिणा व्यरचीति स्वयमत्र समसूचि । अयं सूरिवर्योऽन्यत्र स्वस्य चतुर्विंशतिजिनचरितर[4]चयितृत्वं प्रतिपादयति स्म । तन्मध्यात् मल्लिचरितं, चन्द्रप्रभचरित्रं चोपलभ्यतेऽपि तत् तु पत्तनसूचिपत्रे सूचयिष्यते ।

[ सं. १२७६ ] पार्श्वनाथचरित्रम् । माणिक्यचन्द्रः क्र. ३३ [P. P. ३।१५७]

राजगच्छीयसागरेन्दुसूरिशिष्यः प्रौढप्रतिभोऽयं सूरिरिदं भिन्नमालवंशीयश्रेष्ठिदेहडस्य प्रार्थनया प्रणिनाय ।

---

१ 'चन्द्रप्रभचरितं प्रा० याशोदेवम् ६४००'—बृ०

२ 'गुरुभ्रातृयशोदेवोपाध्यायज्ञातशास्त्रार्थः'—क्षेत्रस. वृ. सिद्धसूरिः ।

३ 'नेमिचरितं प्रा० १२१६ वर्षे हरिभद्राचार्यैः कृतम् ८०३२'—बृ०

४ "पसरियजसपडहारवनच्चावियकित्तितरुणिरयणस्स ।
असरिसगुणमणिनिहिणो पहुणो सिरिचंदसूरिस्स ॥
चउवीसइजिणपुंगवसुचरियरयणाभिरामसिंगारो ।
एसो विणयदेसो जाओ हरिभद्दसूरि त्ति ॥"—प्रा० चन्द्रप्रभचरित्रप्र०

५ 'पार्श्वचरितं सं. माणिक्यचन्द्रसूरिकृतं १२७६ वर्षे ५२७८'—बृ०
"रसर्षिरविसङ्ख्यायां समायां दीपपर्वणि ।
समर्थितमिदं वेलाकूले श्रीदेवकूपके ॥"—P. P. ३।१६३

नलायनम् (?) माणिक्यसूरिः　　　प्र. ५५ [ P. P. ३।३५७ ]

नलायनमेतद् य. वि. ग्रन्थमालायां मुद्राप्यमाणं श्रूयते । कुबेरपुराणेत्यपराह्वस्य दशसु स्कन्धेषु विभक्तः शतसर्गैरुपेतस्यास्य महाकाव्यस्य प्रणेताऽयं सूरिवर्योऽत्र (५,२,३,७,९,१० स्कन्धे) स्वं वटगच्छनभोमृगाङ्कत्वेन, मुनिमनोहरयोर्विधातृत्वेन यशोधरचरितानुभवसार–सेतु-नाटक–साहित्यसारादिस्रष्टृत्वेन चोपालक्षयति स्मातो राजगच्छीयो माणिक्यसूरिरस्मात् पृथक् प्रतिभाति, येन सं. १२१(४)६ वर्षे काव्यप्रकाशसङ्केतः, सं. १२७६ वर्षे पार्श्वनाथचरितम्, शान्तिनाथचरितादिकं च रचितम् ।

सं. १२८२　अतिमुक्तचरित्रम् । पूर्णभद्रगणिः　क्र. १०(२)

स्थानाङ्ग–भगवती–ऋषिस्तवेभ्य उद्धृत्यैतच्चरित्रं जिनपतिसूरिशिष्येण पूर्णभद्रगणिना प्रह्लाद-नपुरे प्राणायि; येन सं. १२७५ वर्षे दशश्रावकचरित्रम्, सं. १२८५ वर्षे च धन्यशालिभद्र-चरित्र–कृतपुण्यचरित्राद्यपि विनिर्मितमत्र दृष्टिपथपान्थीभवति ।

सं. १२८५　धन्यशालिभद्रचरित्रम्[1] । पूर्णभद्रगणिः　क्र. १०(१),२६३(१)

दलालेनास्य कृतपुण्यचरित्रं धन्यचरित्रमिति नाम निर्दिष्टक्रमाङ्कयोर्निरदेशि, किन्त्वेतदेव तद् द्वयं प्रतिभाति । उपरि परिचायितोऽयं कविवर्यः षट्परिच्छेदात्मकमेतत् सं. चरित्रं जेसलमेरुदुर्गेऽकृत, शोधनं तु स सूरप्रभवाचकश्चकार, वादियमदण्डदिगम्बरेशजेता कालस्व-रूपकुलकवृत्तिकर्ता यश्चन्द्रतिलकोपाध्यायं विद्यानन्दं[2] पाठितवान् । चरित्रकारेणात्र स्वगुरुपरम्परा-सूचिका विस्तृता प्रशस्तिर्निबद्धा ।

[ सं. १२८५ ? ]　कृतपुण्यचरित्रम् । पूर्णभद्रगणिः　क्र. २६३(१)

चरित्रकारः पूर्वोक्त एव । दलालेन क्र. १०(१) निर्दिष्टं तु तत्प्रशस्तिनिरीक्षणेन धन्य–शालि-भद्रचरित्रमिति स्पष्टं प्रतिभाति । चरित्रवस्तु चारित्ररत्नस्य दानप्रदीपे (१२ प्र० पृ. १९०–१९४) द्रष्टव्यम् ।

कालकाचार्यकथा(प्रा०)　　क्र. ७(२),२३६(२),२६६(२)

एतत् पञ्चमीतश्चतुर्थ्यां पर्युषणापर्व प्रचारयितुश्चरितम् । पर्युषणाकल्पसूत्रप्रान्ते प्रभावक-चरित्रादौ च संस्कृते निर्दिष्टा कथाऽस्या रूपान्तररूपा । अज्ञातकर्तृनामधेया P. P. १।३,१७, १८,२९,३०,५१,६९; ३।२६,२२५; ५।५३ इत्यत्र सूचितासु केयमिति स्फुटं न ज्ञायते ।

सं. १२९४　मुनिसुव्रतचरित्रम् । पद्मप्रभसूरिः क्र. ८५,२३१,२३९.
[ P. P. ३।३०२ ]

ग्रन्थकारोऽयं चान्द्रकुलीनविबुधप्रभसूरिशिष्यः, येन कुन्थुनाथचरितमपि प्रणीतम् । क्र. २३१ निर्दिष्टपुस्तकप्रान्ते सं. १३०४ वर्षे याऽस्य परिपूर्णता प्रादर्शि, सा लेखनेनेति प्रतिभाति; ग्रन्थरचना तु सं. १२९४ रूपा स्वयं ग्रन्थकारेण प्रतिपादिता । पार्श्वस्तव–भुवनदीपकादि-ग्रन्थकारोऽयमेव वाऽन्य इति न निश्चीयते ।

---

१ 'धन्यशालिभद्रचरित्रं पूर्णभद्रगणिना १२८५ वर्षे कृतं श्लोकाः १४६०'—बृ०

२ "सूरिं जिनेश्वरगुरुं जिनतीर्थयात्राऽभ्यायातसङ्घसहितं समरञ्जयद् यः ।
श्रीस्तम्भतीर्थनगरे वरजल्पकेलौ निर्जित्य वादियमदण्डदिगम्बरेशम् ॥
स श्रीसूरप्रभसमभिधो बुद्धिधामाऽभिषेको
ज्ञाता नाम स्वमिव निखिला लक्षणाद्याश्च विद्याः ।
स्फायज्ज्यायस्त्वरितकवितानिर्मितौ ब्रह्मकल्पो
विद्यानन्दं शिशुमिव भृशं हेलयाऽभाणयन्माम् ॥—अभयकुमारचरित्रप्रशस्तिः ।

[ वृ. सं. १२९५ ] गणधरसार्धशतकवृत्तिः । सुमतिगणिः क्र. ३१३,३१५
[ R. १८८२–८३ पृ. ४५ ]

गणधरस्तुतिरूपत्वात् सार्धशतकगाथाप्रमाणत्वेन च 'गणधरसार्धशतक' नाम्ना प्रतिष्ठितमेतन्मूलं प्रा० जिनदत्तसूरिणा विहितम्। अयं सूरिर्जिनवल्लभसूरेः शिष्यो जिनचन्द्रसूरि–जिनरक्षित–ब्रह्मचन्द्रगणि–स्थिरचन्द्रगण्यादीनां च गुरुः। अवस्थाकुलक–उपदेशरसायन–कालस्वरूपकुलक–गणधरसप्तति–सिग्घमवहरउ–तं जयउ–गुरुपारतन्त्र्यादिस्तव–चर्चरी–चैत्यवन्दनकुलक–सन्देहदोलावली–विंशिकाऽऽदीनां प्रणेतुरस्य सं. ११३२ वर्षे जन्म, सं. ११४१ वर्षे दीक्षा, सं. ११६९ वर्षे सूरिपदम्, सं. १२११ वर्षे च स्वर्गमनमित्याद्यत्र वृत्तौ दर्शितम्। चित्तचमत्कृतिकृच्चरितस्य खरतरगच्छे पितामहपदेनातीवपूज्यस्यास्यौपवस्त्रमद्यापि जेसलमेरूपाश्रये प्रदर्श्यते। मूले सूचितानां गणधराणामाचार्याणां चरितानि द्वादशसहस्रश्लोकप्रमाणायामेतस्यां बृहद्वृत्तौ संस्कृत–प्राकृतभाषया रचितानि। एतामुपजीव्य सर्वराजगणिना विहिता लघुवृत्तिः प्रसिद्धा, चरितादिस्वरूपं तत एव ज्ञातव्यम्। इयं बृहद्वृत्तिः स्तम्भतीर्थे प्रारभ्य धारापुरी–नलकच्छकादिविहारक्रमेण मण्डपदुर्गे समर्थितेति जैनविदुषा जल्हणेनैतत्पुस्तकं लिखितमिति च प्रान्तदर्शनेन स्पष्टमवगम्यते। अयं वृत्तिकारो जिनपतिसूरेः शिष्यो जिनहितोपाध्यायात् काव्यालङ्कारचातुरीमधिगतवान्, कुण्डलितकाव्यानि च कृतवान्। प्रथमादर्शं तु जिनेश्वरसूरिशिष्यः कनकचन्द्रो लिखितवान्।

लीलावतीसारमहाकाव्यम् [ जिनरत्नाचार्यः ] क्र. ३४७

वर्धमानसूरिशिष्यजिनेश्वरसूरिविरचिताया निर्वाणलीलावतीकथाया इतिवृत्तोद्धाररूपं जिनाङ्कं संस्कृतमेकविंशत्युत्साहसमुपेतं निर्वाणलीलावतीकथेत्यपरनामकमिदं महाकाव्यं जिनपतिसूरिशिष्यजिनेश्वरसूरिशिष्येण जिनरत्नाचार्येण विरचितमिति प्रान्तावलोकनादवगम्यते। पत्तने दुर्लभराजसंसदि चैत्यवासिविजेत्रा वसतिमार्गप्रकाशकेन(पृ.२) सं. १०८० वर्षेऽष्टकवृत्तिकृज्जिनेश्वरसूरिणा विरचिता चैषा कथा सं. १०९५ वर्षात् प्राक् (सं. १०९२ वर्षे?) प्रादुर्भूतेति प्रा० सुरसुन्दरीकथायामस्या वर्णनदर्शनादवबुध्यते। सं. १२९५ वर्षे सुमतिगणिना, सं. १३१२ वर्षे चन्द्रतिलकोपा-

१ "शर–निधि–दिनकरसङ्ख्ये विक्रमवर्षे गुरौ द्वितीयायाम्।
राधे पूर्णीभूता वृत्तिरियं नन्दतात् सुचिरम्॥"—H.

२ "जिनेश्वरयतीश्वरस्तदनु भाग्यदुग्धोदधिर्बभूव।
जिनरत्नमुख्यमुनिरत्नराजीनिधिः॥"—चैत्यवन्दनकुलकवृत्तिप्र० जिनकुशलसूरिः।

३ "जस्स य अइवसुललियपयसंचारा पसन्नवाणी य।
अइकोमला सिलेसे विविहालङ्कारसोहिल्ला॥
लीलावइ त्ति नामा सुवन्नरयणोहहारिसयलंगा।
वेस व्व कहा वियरइ जयम्मि कयजणमणाणंदा॥"—साधुधनेश्वरः।

४ "श्रीजिनेश्वरसूरय आशापल्ल्यां विहृतास्तत्र च व्याख्याने विचक्षणा उपविशन्ति। ततो विदग्धमनःकुमुदचन्द्रिकासहोदरी संविग्नवैराग्यवर्धनी लीलावत्यभिधाना कथा विदधे श्रीजिनेश्वरसूरिभिः॥"—गणधरसार्धशतकबृहद्वृत्तौ।

५ "निर्वाणाध्वरविं कथां नवरसां निर्वाणलीलावतीं
सूत्रं वृत्तियुतं कथानकमहाकोशस्य संवेगकृत्।
तर्कन्यायविलासनैकचतुरं सन्नीतिरत्नाकरं
तर्कं यो विदधे धियां जलनिधिः संविग्नचूडामणिः॥"—अभयकुमारचरितप्र०

ध्यायेनाप्यस्याः संस्मरणमकारि । तस्याः प्राकृतकथायास्तु दर्शनं न कुत्रचिद् भवति, तत्साररूप-काव्यदर्शनेनापि सन्तुष्यते । सारकर्ता जिनरत्नाचार्योऽप्यतीव विद्वान् प्रतिभाति, सं. १३०७ वर्षे प्राकृतद्व्याश्रयवृत्तिविनिर्माता पूर्णकलशगणिरस्य निकटेऽधीतवान् । अग्रे उपलक्ष्यमानलक्ष्मी-तिलकोपाध्यायेनाप्यस्य पार्श्वेऽधीतम् । अनेन जिनरत्नाचार्यसमयस्त्रयोदशशताब्द्युत्तरार्धरूपः स्फुटमवगम्यते । एतद्ग्रन्थरचनाऽपि त्रयोदशशताब्द्यन्तरूपा विज्ञायते ।

[ सं. १३११ ] प्रत्येकबुद्धचरित्रम् । लक्ष्मीतिलकः　　क्र. २०३

करकण्डु–द्विमुख–नमि–नग्गतिनाम्नां चतुर्णां प्रत्येकबुद्धमहाराजर्षीणां चरितरूपं जिन-लक्ष्म्यङ्कं सप्तदशसर्गात्मकमेतत् महाकाव्यं वर्तते । तत्प्रान्तपत्रे 'रुद्राग्नीन्दुशरत्' इति दर्शनादस्य रचना सं. १३११ वर्षे सूच्यते । अयं कविर्जिनपतिसूरिपट्टभूषणजिनेश्वरसूरेः शिष्यः[3], पूर्णकलश-गण्यादीनां च सतीर्थ्यः । सं. १३०७ वर्षे पूर्णकलशगणिकृता प्राकृतद्व्याश्रयवृत्तिरनेन[4] संशोधिता । अभयतिलकोपाध्यायेन न्यायशास्त्राध्ययनमस्यैव विदुषः पार्श्वेऽकारि । सं. १३१२ वर्षे अभयतिलकोपाध्यायकृता सं. द्व्याश्रयवृत्तिर्न्यायालङ्काराख्या पञ्चप्रस्थानन्यायतर्कविषमपदव्याख्या[6]

---

१ "नासिद्धं न विपक्षगामि च न वा नैकान्तिकं साधनं
　येषां सत्प्रतिपक्षकं न विषये सोवेऽपि नो बाधितम् ।
जात्युद्भावन–निग्रह–च्छलपरव्याघातविश्राणकं
　दृष्ट्वा यानपरे श्रयन्ति समितौ भीता व्रताज्ञापराः ॥
दत्तो मुदा तैर्जिनरत्नसूरिक्ष्माधिपैर्बोधमणिप्रदीपः ।
श्रीप्राकृतद्व्याश्रयगेहगर्भस्थितं य आदर्शयदर्थजातम् ॥"—प्रा. द्व्या० वृत्तिप्र०

२ "तस्य श्रीजिनरत्नसूरिचरणाम्भोजान्तिकेऽधीतिनः
　श्रीलक्ष्मीतिलकाभिषेकनृपतेर्नानार्थरत्नैर्ललत् ।"—न्यायालङ्कारटीका

३ 'सूरिर्जिनरत्न इह बुद्धिसागरसुधीरमरकीर्तिः कविः पूर्णकलशो बुधः ।
श्री प्रबोधेन्दुगणि–लक्ष्मितिलकौ प्रमोदादिमूर्त्यादयो यद्विनेयोत्तमाः ॥'
　　—सं० द्व्याश्रयवृत्तिप्र०

४ "साहित्य–तर्कागम–शब्दविद्याशाणानिशातीकृतबुद्धिधारः ।
निरच्छेद् लक्ष्मीतिलको गणिर्मे सब्रह्मचारी स्खलितोक्तिवल्लीः ॥"—प्राकृतद्व्याश्रयवृत्तिप्र०

५ 'चिन्तारत्नमथाप्य लक्ष्मीतिलकोपाध्यायगीःस्वर्गवीम् ।'
'श्रीलक्ष्मीतिलको मुदेऽस्तु भगवान् श्रीन्यायतूर्याग्रिमा-
　ध्याये भूमिगृहे स्थितानपि रहस्यार्थान् ममाद्योतयत् ।
येयःस्नेहभराक्षपो न च मनाक्कम्पोऽपि दुर्वादिवाग्-
　वातैरव्ययसदृशः खलु नवो यद्गीःप्रदीपोदयः ॥—न्याया० ( पृ. ४७ )

६ "आम्नाती सर्वविद्यास्वविकलकविताकेलिकेलीनिवासः
　कीर्त्याऽब्धेः पारदृश्वा त्रिभुवनजनतोपक्रियास्वात्तदीक्षः ।
निःशेषग्रन्थसार्थे मम गुरुरिह तु द्व्याश्रयेऽतिप्रकामं
　टीकामेतां स लक्ष्मीतिलककविरविः शोधयामास सम्यक् ॥"
　　—द्व्याश्रयवृत्तिप्र० अभयतिलकगणिः ।

७ प्राक् संहत्य सुरासुरेण जलधिं व्यालोड्य हेमाद्रिणो-
　द्भूतं सारमुपाददे स्वयमहो एकांगमल्लस्तु यः ।

चानेन संशोधिता; सं. १३१२ वर्षे चाभयतिलकोपाध्यायेन सार्धं चन्द्रतिलकोपाध्यायस्याभयकुमारचरित्रमपि समशोधि। सं. १३१७ वर्षेऽनेन निजगुरुनिर्मितश्रावकधर्मप्रकरणस्य वृत्तिर्विरचिता। सं. १३२२ वर्षे धर्मतिलककृता जिनवल्लभीयाजितशान्तिस्तववृत्तिश्च संशोधिता। सं. १३२८ वर्षे कातन्त्रदुर्गपदप्रबोधकारः प्रबोधमूर्तिगणिः स्वग्रन्थशोधकत्वेन काव्यकृत्वेन चेमं स्मरति स्म। अस्य विद्यागुरुर्जिनरत्नसूरिरित्यन्यत्र दर्शितम्।

[ सं. १३२२ ] शान्तिनाथचरित्रम्। मुनिदेवसूरिः पृ. ४९ [ P. P. ११४ ]

देवचन्द्रसूरिकृतं बृहत्प्राकृतशान्तिनाथचरित्रं संक्षिप्येदं चरित्रं विरचितमिति स्वयमत्रानेन सूरिणा प्रोक्तमस्ति (पृ.४६)। संशोधनं तु स प्रद्युम्नसूरिवर्योऽकार्षीद् येन तदानीन्तनानामुदयप्रभ-

---

न्यायाम्भोधिममुं विगाह्य परितो बुद्ध्या कुशाग्रीयया
सामस्त्येन महार्थसारमचिराल्लात्वा व्यतारीन्मम ॥
तस्य श्रीजिनरत्नसूरिचरणाम्भोजान्तिकेऽधीतिनः
श्रीलक्ष्मीतिलकाभिषेकनृपतेर्नानार्थरत्नैर्ज्वलन्।
कुर्वाणाऽत्र सुवर्णदण्डरुचिरा दुर्गार्थवृत्तेश्छला-
देतैस्या मयकोत्थितोज्ज्वलयशःश्रीवैजयन्त्युच्चकैः ॥
'श्रीलक्ष्मीतिलकोपाध्यायैः संशोधितेयमतिनिपुणम्।'—न्यायालङ्कार० अभयतिलकः।

१ "वाग्मी तर्कज्ञवैयाकरणगणमणिः पीतसिद्धान्तसिन्धुः
साहित्याध्वाध्वनीनो निरुपमकवितानर्तकीरङ्गभूमिः।
व्याख्याताऽत्राश्रुतद्व्याश्रयविषममहाकाव्ययुग्मस्य नाना-
ग्रन्थस्रष्टा च लक्ष्मीतिलकगणिमुनिर्वाचनाचार्यवर्यः ॥
द्व्याश्रयटीकाकारी द्विव्याकरणः सुदृष्टसाहित्यः।
सुकविरभयतिलकगणिश्चाशोधयतामिदं शास्त्रम् ॥—अभयकुमारचरिते।

२ विचक्षणैर्ग्रन्थसुवर्णमुद्रिका विचित्रविच्छित्तिमितो विनिर्मिताः।
यदीयनेत्रोत्तमरत्नयोगतः श्रियं लभन्ते कृतिमण्डले पराम् ॥
तैः श्रीमल्लक्ष्मीतिलकोपाध्यायैः परोपकृत(ति)दक्षैः।
विद्वद्भिर्वृत्तिरियं समशोधितरां प्रयत्नेन ॥
नगन–कर–शिखीन्दुमिते विक्रमवर्षे तपस्यसितषष्ठ्याम्।
वृत्तिः समर्थिताऽस्या मानं च सविंशतित्रिशती ॥—अजित० वृत्तौ धर्मतिलकः।

३ "पद्वतर्कागमशब्दलक्ष्मसुखसद्विद्याब्धिकुम्भोद्भवै-
र्यैः काव्यं मुखशुक्तिजं कृतधियां निर्दूषणं सद्गुणम्।
दीर्घं चापि कृतं सतामधिहृदं हारायते तैरसौ
श्रीलक्ष्मीतिलकाभिषेकतिलकैर्ग्रन्थो व्युदजल्प्यत(?) ॥"—का. दु. प्र०

४ द्विद्विव्येकसमासु मासि सहसि श्वेतद्वितीयाबुधे।
द्वेधाऽप्यत्र यदाश्रयं श्रितवता काव्यं मयेदं कृतम्।
श्रीप्रद्युम्नमुनीश्वरः स विशदं सद्यः प्रसद्य व्यधात्
ज्ञैरन्यैरपि शोधनीयमसमं धृत्वा ममत्वं मयि ॥—शां० प्र०
'शान्तिचरितं सं. १३२२ वर्षे मौनिदेवम् ४८८५।'—बृ०

देवेन्द्र–धर्मकुमार–प्रभाचन्द्र–बालचन्द्र–मानतुङ्ग–मुनिदेव–रत्नप्रभ–विनयचन्द्रादीनां कवीनां नैककाव्यानि विशदीकृतानि, सं. १३२४–३८ वर्षे समरादित्यसंक्षेप–प्रव्रज्याविधानवृत्त्यादीनि[3] नैकग्रन्थरत्नानि च स्वयं प्रणीतानि। P. P. ११४ इत्यत्रास्य काव्यस्य कर्ता देवसूरिर्निर्दिष्टः, तमुल्लेखं दृष्ट्वा भ्रान्त्याऽन्यैरपि तथैवान्यत्र दर्शितम्, किन्तु न तत् समीचीनम्; नात्र मुनिपदं विशेषणरूपम्, एतद्ग्रन्थकृतोऽन्यकृतौ[1] तथाऽन्यैरपि तत्समकालीनपाश्चात्त्यविद्वद्भिरस्य 'मुनिदेव' इत्येव नाम प्रादर्शि। एतदद्भुतं काव्यं दृष्ट्वा सं. १४१० वर्षे मुनिभद्रसूरिणा नूतनं शान्तिचरितकाव्यं रचितम्[2]। ग्रन्थकारोऽयं वादिदेवसूरिसन्तानीयमदनचन्द्रसूरिशिष्यः[3]। अनेन धर्मोपदेशमालावृत्त्यादयो नैके ग्रन्था विरचयाञ्चक्रिरे। प्रद्युम्नसूरिकृतायाः प्रव्रज्याविधानवृत्तेः प्रथमा प्रतिरनेनालेखि[3]।

सं. १३३४	पुण्यसारकथानकम्। विवेकसमुद्रगणी	पृ. ५६

अल्पीयान् दानविषयकोऽयं कथाग्रन्थः। कथाकारोऽयं जिनपतिसूरिपट्टधरजिनेश्वरसूरेः शिष्यः। सं. १३८३ वर्षे रचितायां चैत्यवन्दनकुलकवृत्तौ जिनकुशलसूरिरिमं स्वविद्यागुरुत्वेन वर्णयति स्म[4]। जैनग्रन्थावल्यामस्य तपागच्छीयसोमसुन्दरसूरिशिष्यता षोडशशताब्दीप्रारम्भे च सूचिता सत्ता विचारासहा प्रतिभाति। जिनप्रबोधसूरिणेयं कथा विशोधितेत्यत्र प्रोक्तम्। सं. १३२८ वर्षे येन कातन्त्रवृत्तिदुर्गपदप्रबोधो विनिर्मितः, पूर्वं प्रबोधमूर्तिनामा स एव जिनप्रबोधसूरिरत्राभिज्ञायते। अन्यत्र ही. H. सू० सम्यक्त्वालङ्कारग्रन्थस्य कर्तृत्वेनास्य नाम निरदेशि।

त्रिषष्टिशलाकापुरुषचरित्रम् (गद्यम्)	क्र. १७४

एतत् केन कृतमिति स्पष्टं न ज्ञायते। शान्तिनाथचरित्रावधि खण्डरूपमेतत्। सुप्रसिद्धहेमसूरिकृतपद्यत्रिषष्टिचरितमनुसृत्यास्य निर्माणमित्येतत्प्रारम्भश्लोकविलोकनेन स्पष्टं व्यज्यतेऽतो ग्रन्थकर्तुरस्य समयस्तदनन्तरमिति स्फुटम्। 'कर्पूरप्रकर'नाम्ना सुप्रसिद्धायाः सूक्तावल्याः कर्ता हरिकवीश्वरः स्वग्रन्थप्रान्ते निजगुरुं वज्रसेनसूरिं त्रिषष्टिसारप्रबन्धकर्तृत्वेन स्मरति स्म[5]। अयं वज्रसेनसूरिर्नागपुरीयतपागच्छीयश्चतुर्दशशताब्द्यामासीदिति पट्टावल्या समुपलब्धशिलालेखादिना च ज्ञायते। वज्रसेनसूरिकृतमेतदथवाऽन्यकर्तृकमिति न निश्चीयते।

---

१ 'श्रीशान्तिवृत्तचैत्यस्थपतिर्धर्मोपदेशमालायाः।
एतां रचयति विवृतिं श्रीमान् मुनिदेवमुनिदेवः॥"—धर्मोपदेशमालाप्र० मुनिदेवसूरिः।

२ 'पूज्यश्रीमुनिदेवसूरिरचितश्रीशान्तितीर्थेश्वर-
प्रख्याताद्भुतकाव्यदर्शनतया काव्यं मयेदं कृतम्'—शान्ति० मुनिभद्रसूरिः।

३ "श्रीदेवानन्दशिष्यश्रीकनकप्रभशिष्यकः।
समरादित्यसंक्षेपकर्ता वृत्तिमिमां व्यधात्॥
वादीन्द्रदेवसूरेर्वंशे श्रीमदनचन्द्रगुरुशिष्यः।
प्रथमादर्शेऽदर्शयदेतां मुनिदेवमुनिदेवः॥"—प्रव्रज्याविधानवृत्तिः।

४ "सन्मौक्तिकस्तबकसेव्यपदोऽनुवेलमस्ताघसंवरधरः कुपथप्रमाथी।
विद्यागुरुर्मम विवेकसमुद्रनामोपाध्याय इद्धतररत्ननिधिर्बभूव॥"
—चैत्यवन्दनकुलकवृत्तिप्र०

५ "श्रीवज्रसेनस्य गुरोस्त्रिषष्टिसारप्रबन्धस्फुटसद्गुणस्य।
शिष्येण चक्रे हरिणेयमिष्टा सूक्तावली नेमिचरित्रकर्त्रा॥"—कर्पूरप्रकरप्र०

ले. सं. १३८० ऋषिमण्डलवृत्तिः क्र. १२६

'महरिसिकुलक' इत्यपरनामकं मूलमात्रमेतद् धर्मघोषसूरिकृतं P. P. ११९३; ३।१२८ इत्यत्र दर्शितम्, तदेव। गुर्वावल्यां (पृ. १७-२१) वर्णितः सं. १३५७ वर्षे स्वर्गामी सङ्घाचारवृत्त्यादिविधाताऽयं सूरिर्न प्रतिभाति, किन्तु सिद्धराजसमकालीनोऽन्यो वा (पृ. १०) सम्भाव्यते। वृत्तयोऽस्य ग्रन्थस्य बह्व्यो वर्त्तन्ते, किन्तु तासु प्राचीनाऽञ्चलगच्छीयभुवनतुङ्गसूरिकृता, या बृहट्टिपनिकायां दर्शिता,[1] भुवनतुङ्गसूरेर्विद्यमानता चतुर्दशशताब्द्यामासीदित्यञ्चलगच्छपट्टावल्यादितो ज्ञायतेऽत इयं वृत्तिस्तत्कृतैव सम्भाव्यते, येनातुरप्रत्याख्यान-चतुःशरणवृत्त्याद्यपि निर्मितम्। मूले दर्शितानां जैनमहर्षीणां चरित्राणि वृत्तौ प्रदर्शितानि॥

सं. १४०६ अञ्जणासुन्दरीचरियम्। गुणसमृद्धिमहत्तरा पृ. ४९

चरितस्यास्य रचना जेसलमेरपुरे। ग्रन्थकर्त्री चेयं खरतरगच्छीय जिनचन्द्रसूरिशिष्यः। सम्भ्रमात् ही. सूच्यां सं. १४७७ वर्षेऽस्या रचना सूचिता। अयं जिनचन्द्रसूरिः जिनलब्धिसूरिशिष्यः; जिनोदयसूरेः, सं. १४११ वर्षे कातन्त्रवृत्तिपञ्जिकालेखयितुः सोमकीर्तेश्च गुरुः सं. १४१५ वर्षे स्वर्गभाग् ज्ञायते। चरितवस्तुज्ञानार्थं शीलोपदेशमालावृत्तौ (पृ. २८१-२९८) द्रष्टव्यम्।

सं. १५०३ पृथ्वीचन्द्रचरित्रम्। जयसागरगणिः पृ. ५६

एकादशप्रस्तावविभूषितस्यास्य चरित्रस्य रचना प्रह्लादनपुरे समजायत।[2] चरित्रकारस्यास्य जिनराजसूरिर्दीक्षागुरुः, जिनवर्धनसूरिर्विद्यागुरुः, जिनभद्रसूरिश्चोपाध्यायपदप्रदाताऽऽसीत् (पृ. ५७)। सत्यरुचिनाम्नः शिष्यस्याभ्यर्थनया रचितेऽस्मिंश्चरित्रे गणिरत्नचन्द्रः सहायकोऽभवत्। सत्यरुचि-रत्नचन्द्रावस्य शिष्यावास्तामिति दर्शितमेतत्कृतायां विज्ञप्तित्रिवेण्याम् (पृ. १७, २१,५५)। सं. १४७३ वर्षे जेसलमेरौ पार्श्वजिनालयप्रशस्तिरनेन गणिना शोधिता (पृ. ६४), शान्तिजिनालयस्य प्रशस्तिश्च विरचिता (पृ. ६६)। सं. १४९७ वर्षे जे० सम्भवजिनालयस्य प्रशस्तिकर्ता वा० सोमकुञ्जरोऽस्य शिष्यः (पृ. ६९); एतदतिरिक्ता मेघराज-स्थिरसंयमादयो नैके शिष्टशिष्या अस्याभवन्। सं. १४७८ वर्षे पर्वरत्नावलीकथा, सं. १४८४ वर्षे विज्ञप्तित्रिवेणिः, तीर्थराजीस्तवनम्, सं. १४८७ वर्षे चैत्यपरिपाटिः, उपसर्गहरस्तोत्रवृत्तिः, जिनदत्तसूरीयगुरुपारतन्त्र्यादिस्तववृत्तिः, भावारिवारणवृत्तिः, सं. १४९५ वर्षे सन्देहदोलावलीलघुवृत्तिः इत्यादिकाऽस्य विदुषः कृतिः समुपलभ्यतेऽनेनास्य पञ्चदशशताब्द्युत्तरार्धे षोडशशताब्दीप्रारम्भे च विद्यमानता परिस्फुरती प्रौढविद्वत्ता च सम्यग् ज्ञायते। आशापल्लीकोशार्थं सं. १४९५-९७ वर्षेऽनेन लेखितं व्यवहारचूर्ण्यादिपुस्तकमुपलभ्यते। जिनभद्रसूरेर्ग्रन्थसङ्ग्रहालये चानेनापि ग्रन्थलेखनादिना सुसहायताऽकारि।[3]

सं. १६२४ परमहंससम्बोधचरितम्। नयरङ्गः पृ. ५७ [A. S. ८।११२]

अष्टप्रस्तावोपेतस्यास्य चरितस्य विरचयिता नयरङ्गो खरतरगच्छीयजिनभद्रसूरिसन्तानीयवा० गुणशेखरस्य शिष्यः। रचनास्थलं बालपताकापुरीति निर्दिष्टमेवात्र। कथावस्तु त्वत्र जयशेखरसूरिरचितस्य प्रबोधचिन्तामणिग्रन्थस्य प्रतिभाति।

---

१ "भत्तिब्भर इति ऋषिमण्डलसूत्रम् २०८। अस्य वृत्तिराञ्चलिकभुवनतुङ्गीया।"—बृ०

२ एतस्य पठनार्थं सं. १५०१ वर्षे जयसागरोपाध्यायलिखितः क्रियारत्नसमुच्चयः अस्योपदेशेन च सं. १५२१ वर्षे लेखितः सिद्धहैमलक्षणबृहद्वृत्तिकक्षापटग्रन्थः पत्तनभाण्डागारे विद्यते।

३ एतत्कृतानि जिनभद्रसूरिस्तुतिपराणि नैकानि चित्रकाव्यानि विज्ञप्तित्रिवेण्यां (पृ. ६१-६३) दर्शितानि। सं. १४९५ वर्षेऽनेन स्वगुरुकृतायाः सन्देहदोलावलीवृत्तेः प्रथमा प्रतिर्लिखिताऽऽसीत्॥

सं. [१६?]६२  शीलवतीकथा । आज्ञासुन्दरः  पृ. ५५

एतत्कथाकर्ता रुद्रपल्लीयगच्छीयः सप्तदशशताब्द्यां सम्भाव्यते । कथावस्तु शीलतरङ्गिण्यां (पृ. ४१३-४३४) विलोकनीयम् ।

[सं. १८६९]  श्रीपालचरित्रव्याख्या । क्षमाकल्याणः  पृ. ५६ [A. ९।८४]

अस्या मूलं सवृत्तिकक्षेत्रसमास-गुणस्थानक्रमारोह-गुरुगुणपट्त्रिंशत् पट्त्रिंशिकादिविधात्रा बृहद्गच्छीयवज्रसेनसूरिपट्टधरहेमतिलकसूरिशिष्येण रत्नशेखरसूरिणा सङ्कलितम्, सं. १४२८ वर्षे तच्छिष्यहेमचन्द्रसाधुना च लिखितमासीत् । उनविंशतिशताब्द्यां विद्यमानोऽयं व्याख्याकार इति सूचितमस्यान्यग्रन्थ—सूक्तरत्नावलीपरिचये ।

## जैनेतरकथा ।

ले. सं. १२६५  लीलावतीकथा (प्रा०) । भूषणभट्टतनयः  क्र. २३७

कर्तुर्नाम नोपलभ्यते । कथाकारस्य पितामहो बहुलादित्यः । एतत्कथारत्नं विद्वद्भिरज्ञातपूर्वमेव ज्ञास्यते । एकं जेसलमेरुनगरेऽपरं च पत्तने एवमस्य प्राचीनमादर्शद्वयमेव भारतवर्षे विद्यते इति प्रतिभात्यस्माकम् । कविना कथावस्तु त्वतिमनोहरया वाण्या दुःखिनामुद्धारकत्वेन कवीनामाश्रयदातृत्वेन, गाथासप्तशतीप्रणेतृत्वेन च सुप्रसिद्धस्य प्रतिष्ठानपुरविभूषणस्य सालाहण(सातवाहन)नृपस्य सिंहलद्वीपराजपुत्रीलीलावतीसंयोगमनुसृत्य निबद्धम् । लघीयस्यपि सुललितेयं प्राकृता कथा वाणभट्टस्य कादम्बर्यै स्पर्द्धते । हेमकाव्यानुशासने 'धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा' इत्येतत्सूत्रव्याख्यायां 'काचित् पद्यमयी यथा लीलावती' इत्युदाहरणेनेयं स्मर्यते वा जिनेश्वरसूरिरचिताऽन्या लीलावती कथा इति स्पष्टं नावबुध्यते तथाप्यस्या निर्माणं द्वादशशताब्द्यामथवा ततोऽपि पूर्वं सम्भावयितुं शक्यते ।

शृङ्गारमञ्जरी । भोजः  क्र. ३२५(१)

कथासङ्ग्रहमयीयं सुरसा कथा संस्कृतभाषायां संस्कृतभाषाजीवातुना सरस्वतीकण्ठाभरणादिप्रणेत्रा महाराजभोजदेवेन विरचितेति तदन्तर्गतैकपत्रे उल्लेखदर्शनादवगम्यते ।

## व्याकरणग्रन्थाः ।

सं १०८०  पञ्चग्रन्थी (बुद्धिसागरव्याकरणम्) । बुद्धिसागराचार्यः  क्र. १७६

अस्य रचना जावालिपुरे इत्याद्येतत्प्रान्ते दर्शितमेव । एतद्व्याकरणनिर्माणस्य समसमयस्थानयोः (सं. १०८० वर्षे, जावालिपुरे) अष्टकवृत्त्यादिविरचयित्राऽस्य सहोदरेण जिनेश्वरसूरिणा दुर्जनवाक्यान्येतद्व्याकरणनिर्माणे हेतुभूतानि दर्शितानि । पञ्चग्रन्थी इत्यस्यापरा संज्ञा ज्ञायते ।

---

१ 'लीलावतीकथा भूषणभट्टसुतकृताऽऽर्यरसमिश्रिता च परसमयगता गाथाः १४३९'—बृ०

२ "हियए चिय विलीयंति सुइरपरिचिन्तिया वि सुकईण ।
जेण विणा दुहियाण च मणोरहा कव्वविणिवेसा ॥"—लीलावती ।

३ इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारमञ्जरीकथायां देवदत्ताकथानिका पञ्चमी । अन्यच्च पुत्रि ! महासत्त्वं महासाहसिकत्वं च सम्यगुपलभ्य आत्मत्यागेनाप्यर्थ साधयतां न दुरापाः स्वार्थसिद्धय इति यत्पूर्वमुक्तं तदपि ते कथयामि । अस्त्यत्र भुज(भू)तलप्रसिद्धमतिविभववणिग्व्यवहकवच्च(?)प्रभृतिभिर्महा[ज]नैरधिष्ठितमहिच्छत्रं नाम नगरम् ।—एकत्र पत्रे ।

४ "तैरवधीरिते यत्तु प्रवृत्तिरावयोरिह । तत्र दुर्जनवाक्यानि प्रवृत्तेः सन्निबन्धनम् ॥
कीदृशानि दुर्जनवाक्यानीत्याह—
शब्दलक्ष्म प्रमालक्ष्म यदेतेषां न विद्यते । नादिमन्तस्ततो ह्येते परलक्ष्मोपजीविनः ॥
तथा च किं जातमित्याह—
श्रीबुद्धिसागराचार्यैर्वृत्तैर्व्याकरणं कृतम् । अस्माभिस्तु प्रमालक्ष्म वृद्धिमायातु साम्प्रतम् ॥

सं. १०९५ वर्षे धनेश्वरसाधुः पञ्चग्रन्थीनामधेयामेतां कृतिं प्राशंसत् । श्रीधरभाण्डारकरेण शब्दलक्ष्मलक्षणनाम्नैतत् समसूचि । 'शब्दलक्ष्म' 'पञ्चग्रन्थी' 'बुद्धिसागर' इति त्रीण्यपि नामानि ग्रन्थकर्त्रा ध्वनितानि । सं. ११२०-२४ वर्षेऽभयदेवसूरिः, सं. ११२५ वर्षे [3]जिनचन्द्रसूरिः, सं. ११३९ वर्षे गुणचन्द्रगणिः, जिनदत्तसूरिः, सं. १२९४ वर्षे विद्यमानः [6]पद्मप्रभसूरिः, सं. १२९५ वर्षे सुमतिगणिः, सं. १३३४ वर्षे प्रभाचन्द्रसूरिरित्यादयो ग्रन्थकर्तारो निजनिजग्रन्थेषु व्याकरणादिग्रन्थकृत्त्वेनैनं वर्णयामासुः । अयं व्याकरणकारो वर्धमानसूरेः शिष्यः, सुरसुन्दरीकथाकृद्धनेश्वरसाधु-संवेगरङ्गशालाकारजिनचन्द्रसूरि-नवाङ्गीवृत्तिकाराभयदेवसूरीणां गुरोरष्टकवृत्ति-कथाकोश-पञ्चलिङ्गीप्रकरण-प्रमालक्ष्म-षट्स्थानकप्रकरणादिग्रन्थकर्तुश्चैत्यवासिविजेतुर्जिनेश्वरसूरेश्च सहोदरः सतीर्थ्यश्च । प्रभाचन्द्रसूरिणाऽस्य व्याकरणस्य सहस्राष्टकमानं दर्शितं तन्न सम्यग्, यतः स्वयमेव कर्त्राऽस्य सप्तसहस्रकल्पत्वं समसूचि । ही. श्रीधरभाण्डारकरेण च प्रमालक्ष्मग्रन्थोऽस्य कृतित्वेन निर्दिष्टो न चैवम्, स तु जिनेश्वरसूरिविरचित इति तत्प्रान्तादवगम्यतेऽन्यत्र चैतद् विचारितम् ।

बलाबलसूत्रवृत्तिः पृ. ४५

बृहद्वृत्तेः संक्षिप्येयं निर्मितेति प्रान्ते दर्शितम् । इयं D. सूचिपत्रे हेमचन्द्रकृतित्वेन सूचिताऽन्यत्र ( B. पृ. १४८, I. पृ. २०४ ) परिभाषावृत्तिनाम्ना दुर्गसिंहकृतित्वेन निर्दिष्टा । प्रारम्भश्लोकस्तु प्रायः सर्वत्र समानः, किं तथ्यं तत्तु तत्पुस्तकपर्यालोचनसाध्यम् ।

---

व्या० श्रीबुद्धिसागराचार्यैः पाणिनि-चन्द्र-जैनेन्द्र-विश्रान्त-दुर्गटीकामवलोक्य वृत्तबन्धैः(?) धातुसूत्रगणोणादिवृत्तबन्धैः कृतं व्याकरणं संस्कृतशब्द-प्राकृतशब्दसिद्धये ॥"—प्रमालक्ष्मप्रान्ते ।

१ "जस्स य मुहकुहराओ विणिग्गया अत्थवारिसोहिल्ला ।
बुहचक्कवायकलिया रंगंतगुफक्कियतरंगा ॥
तडरुहअवसद्दमहीरुहोहउम्मूलणम्मि सुसमत्था ।
अज्जायपवरतित्था पंचग्गंथीनई पवरा ॥"—सुरसुन्दरीकथाप्रशस्तिः ।
'पञ्चग्रन्थी पञ्चाङ्गं व्याकरणम्'-प्रा. टिप्पणी

२ 'व्याकरणादिशास्त्रकर्तुः श्रीबुद्धिसागराचार्यस्य ।'—स्थानाङ्गवृत्तिः ।
"अन्योऽपि वित्तो भुवि बुद्धिसागरः पाण्डित्यचारित्रगुणैरनो(नु)पमैः ।
शब्दादिलक्ष्मप्रतिपादकानघग्रन्थप्रणेता प्रवरः क्षमावताम् ॥"—पञ्चाशकवृत्तिः ।

३ "बीओ पुण विरइयनिउणपवरवागरणपमुहबहुसत्थो ।
नामेण बुद्धिसागरसूरि त्ति अहेसि जयपयडो ॥"—संवेगरङ्गशालाप्रशस्तिः ।

४ "अन्नो य पुन्निमाचंदसुंदरो बुद्धिसागरो सूरी ।
निम्मवियए(प)वरवागरण-छंदसत्थो पसत्थगई ॥"—महावीरचरियप्रशस्तिः ।

५ "तिजयगयजीवबंधू जं बंधू बुद्धिसागरो सूरी ।
कयवायरणो वि न जो विवायरणकारओ जाओ ॥"—गणधरसार्धशतकम् ।

६ "श्रीबुद्धिसागरो बुद्धिविभवं वितनोतु मे ।
पद्यैः पद्यैव शब्दाब्धेर्येन व्याकरणं कृतम् ॥"—कुन्थुनाथचरितम् ।

७ "अथ च स्वनामानुरूपकृतव्याकरणोऽपि ।"—गणधरसार्धशतकबृहद्वृत्तिः ।

८ "श्रीबुद्धिसागरः सूरिश्चक्रे व्याकरणं नवम् ।
सहस्राष्टकमानं तत् श्रीबुद्धिसागराभिधम् ॥"—प्रभावकचरितम् ।

ले. सं. १२०६ विभक्तिविचारः क. २२२(२)

ही. सूचिपत्रेऽयं ग्रन्थो जिनपतिसूरिविरचितो दर्शितः, किन्तु तत्समयविचारणायां नैतत् सम्भवति; यतः सं. १२१० वर्षे तस्य जन्मेत्यादि पूर्वं (पृ. २८) सूचितम्।

ले. सं. १२०७ स्याद्यन्तप्रक्रिया । सर्वधर उपाध्यायः क. २६(१)

दुर्गसिंहवृत्तिटीकारूपा 'वाङ्मयप्रदीप' इत्यपराह्वाऽस्य विदुषस्त्याद्यन्तप्रक्रिया P. P. ६।२० इत्यत्र प्रदर्शिता; तथैवेयमपि काण्डचतुष्टयविभक्ता षड्लिङ्गप्रकरणप्रक्रिया कातन्त्रवृत्तिटीकारूपा सम्भाव्यते। B. पृ. १४८ इत्यत्रोल्लिखिता त्यादिव्याख्यावृत्तिरस्य कृतिर्ज्ञायते । ग्रन्थकारोऽयं बौद्धो भाति । धातुरत्नाकरकार—भरतसेन-भानुजी—रायमुकुटादिभिरयं स्मर्यतेस्म ।

कातन्त्रोत्तरम् (विद्यानन्दम्) । विजयानन्दः क. २१५ (१), ३१६

P. P. ४।१६ इत्यादावस्य 'सिद्धानन्द' इति नाम सूचितं तन्न सम्यग्, यतः सं. १३१२ वर्षेऽभयकुमारचरितस्य कर्ता चन्द्रतिलकोपाध्यायोऽस्य 'विद्यानन्द' इति नाम दर्शितवान् (पृ. ४९) यच्चादोऽध्यैष्ट । अन्यत्राप्येतदेव नाम समुपलभ्यते । जैनग्रन्थावल्यामेतन्नाम बृ० स्खलनोद्भवं सूचितं तन्न सुष्ठु । क्रियाकलापादिकर्ताऽयं चैक एव प्रतिभाति ।

कातन्त्रवृत्तिपञ्जिका । त्रिलोचनदासः क. ३४,७१,१०४,२६१; पृ. ५३

दुर्गसिंहवृत्तिविषमपदव्याख्यारूपा सुलभेयमन्यत्रापि (B. पृ. १४८, A. २।३३६) सूचिता । पञ्जिकाकारोऽयं बौद्धो ज्ञायतेऽनेन कातन्त्रोत्तरपरिशिष्ट–धातुपारायणाद्यपि कृतं श्रूयते ।

ले. सं. १२७४ व्याकरणचतुष्कावचूरिः(र्णिः) क. २९३(१)

अस्याः प्रारम्भश्लोकः कनकप्रभकृतस्य हैमन्यासस्य प्रारम्भश्लोकेन (पृ. ५३) सह संवदति । स एव हैमन्यासोऽयमथवा काऽप्यन्याऽवचूरिरिति प्रतिदर्शनं विना निर्णयोऽशक्यः । इयं पुस्तिका नरचन्द्रसूरीणामादेशेन पं. गुणवल्लभेन समर्थितेति वाक्येन संस्कृत्य लिखितेति प्रतिभाति ।

दु. सं. १३२८ कातन्त्रवृत्तिदुर्गपदप्रबोधः । प्रबोधमूर्तिः क. १५१

अस्य ग्रन्थकर्तुर्जन्म सं. १२८५ वर्षे, दीक्षा सं. १२९६ वर्षे, सूरिपदं सं. १३३१ (३३) वर्षे, स्वर्गमनं च सं. १३४१ वर्षे इति ख० पट्टावल्यादितो ज्ञायते । अयं खरतरगच्छीयजिनेश्वरसूरेः शिष्यो जिनचन्द्रसूरेश्च गुरुरासीत् । अस्य सूरिपदात् पूर्वं प्रबोधमूर्त्तिरिति, सूरिपदानन्तरं च जिनप्रबोधसूरिरिति नामाभवत । पत्तनीयप्रतिप्रान्ते तत् स्फुटमुल्लिखितं दृश्यते । एतद्ग्रन्थरचनावसरे प्रबोधमूर्तिरिति नामासीत् । सं. १३३३ वर्षीये गिरिनारगिरिशिलालेखे जिनप्रबोधसूरिरिति नाम निर्दिष्टम् । सं. १३३४ वर्षे विवेकसमुद्रगणिना विरचिता पुण्यसारकथाऽनेन समशोधीति तत्रापि पाश्चात्यमेव नाम दर्शितम् । सं. १३५१ वर्षे प्रह्लादनपुरे जिनचन्द्रसूरिणा प्रतिष्ठिताऽस्य सूरेर्मूर्तिः स्तम्भतीर्थे विद्यते ।

---

१ "कातन्त्रोत्तरं विद्यानन्दापरनामकं समासप्रकरणं यावत् विद्यानन्दसू० कृ० व्या० ।"—बृ०

२ 'कातन्त्रचतुष्कव्याख्यातकृत्पञ्जिका त्रिलोचनदासकृता दौर्गसिंहवृत्तिविषमपदव्याख्यारूपा ।'—बृ०

३ "सामान्यावस्थायां प्रबोधमूर्तिगणिनामधेयैः श्रीजिनेश्वरसूरिपट्टालङ्कारैः श्रीजिनप्रबोधसूरिभिर्विरचितो दुर्गपदप्रबोधः सम्पूर्णः ॥"—का० दु० प्र० P.

४ "षट्तर्कसिद्धान्तपयोधिकुम्भजन्मवादीभसिंहैः सुलब्धिवार्धिभिः ।
कथाऽसकौ श्रीमुनिराजनायकैर्जिनप्रबोधप्रभुभिर्विशोधिता ॥"—पुण्यसारकथा ।

सं. १३३६ बालशिक्षा । सङ्ग्रामसिंहः पृ. ४५

इयं सार्ववर्मिकात् कातन्त्रात् संक्षिप्य रचिता । ग्रन्थकारश्च श्रीमालवंशीयठक्कुरकूरसिंहपुत्र इत्यादि सूचितमेवात्र । गूर्जरभाषाऽत्र प्रयुक्ता दृश्यते ।

टी. सं. १३५२ कातन्त्रविभ्रमटीका । जिनप्रभसूरिः पृ. ४८

अस्या मूलं 'कस्य धातोस्तिवादीनाम्' इत्यादि हैमविभ्रमे मुद्रितं तदेव। टीकारचना योगिनीपुरि (दिल्ल्यां) कायस्थखेतलस्याभ्यर्थनया जातेत्यादि त्वत्र प्रोक्तमेव। टीकाकारोऽयं जिनप्रभसूरिरसाधारणप्रतिभावान् प्रभूतग्रन्थप्रणेता लघुखरतरगच्छप्रवर्तकस्य जिनसिंहसूरेः शिष्यः । प्रतिदिनं नवस्तवनिर्माणपुरःसरं निरवद्याहारग्रहणाभिग्रहवता चानेन यमक-श्लेष-चित्र-छन्दोविशेषादिनवनवभङ्गीसुभगा निजनामाङ्किताः सप्तशतीमिताः स्तवास्तपागच्छीयसोमतिलकसूरये उपदीकृताः श्रूयन्ते ( काव्यमाला गु. ७ पृ. ८६ ) । तेषु गोतमस्तोत्र-चतुर्विंशतिजिनस्तुति-स्तव-जिनराजस्तव (प्रा०)-व्यक्षरनेमिस्तव-पञ्चपरमेष्ठिस्तव-पार्श्वस्तव-वीरस्तव-शारदास्तोत्र-सर्वज्ञभक्तिस्तव-सिद्धान्तस्तवादयश्च समुपलभ्यन्तेऽपि । ज्ञानप्रकाश-धर्माधर्मविचार-परमसुखद्वात्रिंशिकादीनि प्राकृतापभ्रंश-संस्कृतकुलकान्यपि दृश्यन्ते । सं. १३२७-१३८९ वर्षेषु विविधतीर्थकल्पः, अनेकप्रबन्ध-अनुयोगचतुष्कोपेतगाथा-आवश्यकसूत्रावचूरि( षडावश्यकटीका )-चतुर्विधभावनाकुलक-चैत्यपरिपाटि-तपोटमतकुट्टन-नर्मदासुन्दरीसन्धि-नेमिनाथ-मुनिसुव्रतजन्माभिषेक-षट्पञ्चाशद्दिक्कुमारिकाभिषेक-नेमिनाथरास-प्रायश्चित्तविधान-युगादिजिनचरित्रकुलक-स्थूलभद्रफाग(?)-सूरिमन्त्रप्रदेशविवरणादयोऽनेके ग्रन्थाः, सं. १३५६ वर्षे द्व्याश्रयमहाकाव्यम् (श्रेणिकचरितम्), सं. १३६३ वर्षे विधिप्रपा ( सामाचारी ), सं.१३६४ वर्षे सन्देहविषौषधिः ( कल्पसूत्रवृत्तिः ), साधुप्रतिक्रमणसूत्रवृत्तिः, सं. १३६५ वर्षेऽयोध्यायाम् अजितशान्तिस्तववृत्ति-उपसर्गहरस्तोत्रवृत्ति-भयहरस्तोत्रादि(समस्सरण?)वृत्तय इत्यादीन्यनल्पानि ग्रन्थरत्नान्यस्य प्रौढपाण्डित्यपटहरूपाणि दृष्टिगोचरीभवन्ति । सं. १३४९ वर्षे रचितायां स्याद्वादमञ्जर्यां मल्लिषेणसूरिरस्य साहाय्यं स्वीचक्रे । सं १४०५ वर्षे प्रबन्धकोषादिप्रणेता राजशेखरसूरिर्न्यायकन्दलीपञ्जिकायाम्, रुद्रपल्लीयसङ्घतिलकसूरिश्च सं. १४२२ वर्षे विरचितायां सम्यक्त्वसप्ततिवृत्तौ दिल्ल्यां साहिमहम्मदप्रतिबोधकमेनं विद्यागुरुत्वेन वर्णयतः स्म । P. P. ४ इत्यत्र पृथग् दर्शितो जिनप्रभसूरिर्नास्माद् भिन्नः ।

सम्बन्धोद्योतः । रभसनन्दिः पृ. ४६ [ B. पृ. १५१, I. २०८,९ ]

अयं ग्रन्थोऽन्यत्र पटकारकसंज्ञया वल्लभानन्द-वहसनन्द्यादिविरचितश्च दर्शितः, किन्त्वत्र दर्शितमेव कर्तुर्नाम सम्यक् प्रतिभाति । सवृत्तिकोऽयं ग्रन्थः सं. १९४९ वर्षे नोभखालि (Noakhali) इत्यत्र मुद्रितः श्रूयते न च दृष्टः । P. P. ३।४०७ इत्यत्र सं. १५०१ वर्षे लिखिताऽस्य प्रतिः सूचितेति तत्पूर्वमस्य रचना स्फुटैव ।

काव्यग्रन्थाः ।

चन्द्रदूतकाव्यम् [ जम्बूकविः ] क. ३४५(१)

यमकमयमेतल्लघुकाव्यं केन निर्मितमिति यद्यपि नात्र दर्शितम्, तथापि P. P. ३।२९२ इत्यत्र जम्बूकविकृतं सूचितं तदेवैतत् प्रतिभाति । अयं च जम्बूकविः स एव ज्ञायते, यद्विहितजिनशतकस्य सं. १०२५ वर्षे शाम्बसाधुना वृत्तिर्विरचिता । अस्मिंश्च सूचीपत्रे निर्दिष्टो मुनिपतिचरित्रकारो जम्बूनागो नास्माद् भिन्नः सम्भाव्यते । दलालेन यद्यपि मूलमात्रमेव दर्शितमेतत् काव्यम्, किन्तु काव्यप्रमाणापेक्षया पत्रसङ्ख्याया आधिक्येन वृत्तिसहितं सम्भवेत् । H. प्रतौ शान्तिसूरिविरचिता वृत्तिर्विलोक्यते, सैव वृत्तिरत्रापि भविष्यतीति सम्भावये ।

वृन्दावनयमकम् [ सवृत्ति ] क. ३४५(३)

मूलमात्रं त्वेतन्मुद्रितम्, किञ्चैतदपि पूर्ववत् शान्तिसूरिविरचितया वृत्त्या समेतं सम्भाव्यते । अस्य वृत्तिप्रारम्भे वृत्तिकर्त्रा शान्तिसूरिणैतेन सार्कं पञ्चानां यमकमयकाव्यानां वृत्तिं कर्तुं

प्रतिज्ञातम् । अयं च शान्तिसूरिः पूर्णतल्लगच्छीयवर्धमानाचार्यस्य मुख्यशिष्यः । धनपालकविकृतायास्तिलकमञ्जर्याः टिप्पनं जैनतर्कवार्तिकवृत्तिश्चैतत्कृते विलोक्येते । एकादश–द्वादशशताब्दीमध्यकालीनोऽयं वृत्तिकारः सम्भाव्यते ।

मेघाभ्युदयकाव्यवृत्तिः । शान्तिसूरिः क्र. ३४५(२)

मूलमात्रमेतन्मानाङ्ककविनिर्मितं P. P. ३।२९१ इत्यत्र प्रदर्शितं तदेव । वृत्तिकारः शान्तिसूरिः पूर्वसूचितः स एव ।

राक्षसकाव्यटीका क्र. ३४५(४)

कालिदासकृतित्वेन प्रसिद्धमेतन्मूलमात्रं तु मुद्रितम् । टीकाकर्तुर्नाम नोपलभ्यते । शान्तिसूरिणा वृन्दावनकाव्य–घटखर्परकाव्य–मेघाभ्युदयकाव्य–शिवभद्रकाव्य–चन्द्रदूतकाव्यसंज्ञकानां पञ्चानां यमकमयकाव्यानां वृत्तयो विनिर्मितास्तेनैवेयमपि टीका विहिता वाऽन्येन केनचिदिति स्पष्टं न विज्ञायते । एतत्पुस्तकविलेखनं सं. १२१५ वर्षे जिनदत्तसूरिशिष्यजिनचन्द्रसूरेः शिष्यो जिनमत(? पति)यतिर्व्यधादिति प्रान्तप्रशस्तितोऽवगम्यते । लेखकोऽपि व्याख्याता सम्भाव्यते ।

घटखर्परटीका क्र. ३४५(५)

मूलमात्रमेतन्मुद्रितम् । टीकाकर्तुर्नाम नात्र दर्शितम्, तथापि शान्तिसूरिकृतेयमिति सम्भाव्यते; यस्मादन्या वृत्तयोऽत्रैव पुस्तके प्रदर्शिताः ।

ले. सं. १३४३ मधुवर्णनम् । केलिकविः क्र. १९८(३)

ले. सं. १३४३ विरहिणीप्रलापम् । केलिकविः क्र. १९८(४) [S. २।२८]

एतद् द्वयमपि यमकमयं लघुकाव्यं कवेः प्रौढकवित्वं प्रतिपादयति । कविवर्यस्यास्य सत्तासमयो न विज्ञातः ।

चक्रपाणिविजयम् । [ लक्ष्मीधरः ] क्र. २८१(१) [ S. २।७६ ]

अयं कविराजो भोजदेवसमकालीन इति प्रान्तप्रशस्तितोऽवगम्यते ।

भट्टिकाव्यलघुटीका । अनिरुद्धः क्र. ८३

इयमपूर्णा प्राचीना टीका न क्वाप्यन्यत्रोपलभ्यते । टीकाकारोऽयमनिरुद्धपण्डितः कदाऽऽसीदिति न विज्ञायते । साङ्ख्यसूत्रवृत्ति–भाष्यवार्तिकटीकाविवरणपञ्जिकाकारश्चानिरुद्धोऽस्माद्भिन्नोऽनुमीयते ।

किरातार्जुनीयटीका । प्रकाशवर्षः पृ. ५५ [ M. I. पृ. ७७०३ ]

इयं प्राचीना लघुटीका कदा प्रादुर्भावमागतेति न निश्चयेन ज्ञायते । टीकाकारेण स्वस्य काश्मीरकत्वं हर्षतनयत्वं च समसूचि । भट्टनरसिंहसूनुर्गौडकविः टीकाकारस्य विद्यागुरुर्ज्ञायते ।

---

१ वृन्दावनादिकाव्यानां यमकैरतिदुर्विदाम् । वक्ष्ये मन्दप्रबोधाय पञ्चानां वृत्तिमुत्तमाम् ॥—H.

२ चरणकरणदक्षः क्षीणदोषो जिताक्षः क्षपितविधिविपक्षः क्षान्तिमान् बद्धकक्षः ।
यतिपतिजिनदत्ताचार्यदत्तोपदेशास्खलितमहिमयोगात् कान्तकीर्तिर्मुनीन्द्रः ॥ १ ॥
समजनि जिनचन्द्रश्चन्द्रवच्चारुरोचिर्गणधरपदलाभाल्लब्धलोकप्रतिष्ठः ।
जिनमत(?)यतिरेतत्तद्विनेयः सुशान्तो व्यलिखदमलबुद्धिः कृत्स्नकर्मक्षयाय ॥ २ ॥
शरचन्द्रसूर्यसङ्ख्ये संवद्विक्रमभूपतेः । अतियाति नभोमासे पञ्चदश्यां तिथौ रवौ ॥ ३ ॥
यावज्जिनप्रवचनं प्रवरप्रतापं यावज्जिनागमविदो यतिनोऽपपापाः ।
यावत्सुदर्शनभृतः स्थिरधीरचित्तास्तावत् सुपुस्तकमदः सुधियः पठन्तु ॥ ४ ॥—H.

नैषधटीका ( साहित्यविद्याधरी ) । विद्याधरः　　क. १०७,१४२

इयं द्वादश्यां वा त्रयोदश्यां शताब्द्यां विनिर्मिता सम्भाव्यते, यतोऽस्याः स्मरणं सं. १३५३ वर्षे विरचितायां नैषधदीपिकायां पं० चाण्डूभट्टः कृतवान् ।[1]

[वृ. सं. १३१२[2]] द्याश्रयवृत्तिः । अभयतिलकगणिः　क. १९४,१९६

विंशतिसर्गविभूषितमेतन्महाकाव्यं सुप्रसिद्धहेमचन्द्राचार्येण ( पृ. २६ ) विरचितम् । अस्य वृत्तिः प्रह्लादनपुरे पूर्णभावं प्राप । इयं दशसर्गपर्यन्तं मुद्रिता प्रसिद्धा । मूलकाव्यस्य गूर्जरानुवादोऽसमीचीनोऽपि प्रसिद्धः । अनेन वृत्तिकारेण वृत्तिविरचनाकाल एव ( सं. १३१२ वर्षे ) चन्द्रतिलकोपाध्यायरचितमभयकुमारचरितं समशोधि । अस्यैव विदुषः पञ्चप्रस्थन्यायतर्कव्याख्या चास्मिन् पुस्तके दर्शिता । त्रयोदशशताब्दीप्रान्तरूपश्चतुर्दशशताब्दीप्रारम्भरूपोऽस्य सत्तासमयः स्फुटमवगम्यते । वृत्तिकारोऽयं चान्द्रकुलीन( खरतरगच्छीय )जिनेश्वरसूरिशिष्य इत्याद्यस्यान्यग्रन्थपरिचये ( पृ. ३१ ) परिचायितम् ।

[ टी. सं. १६९५ ] रघुवंशटीका । समयसुन्दरः　　पृ. ४५

इयं टीका सं.१६९५ वर्षे विनिर्मितेत्यन्यत्र (II.) प्रदर्शितम् । टीकाकारोऽयं समयसुन्दरगणिः बृहत्खरतरगच्छीयसकलचन्द्रगणिशिष्यः सप्तदशशताब्द्युत्तरार्धे विद्यमान आसीत् । टीकाकर्तुश्चास्य संस्कृतगूर्जरभाषाभिरामाऽनल्पा कृतिसंहतिरेव प्रौढविद्वत्तां प्रघोषयति । अद्यावधि ज्ञाता च सेयं ज्ञाप्यते—

सं. १६४१　भावशतकम्
सं. १६४६　अष्टलक्षार्थी ( अर्थरत्नावली )
सं. १६५९　सांबप्रद्युम्नचोपाई ( गृ. )
सं. १६६२　करकंडुचोपाई ( गृ. )
　,,　दान-शील-तप-भावनासंवाद(गृ.)
सं. १६६३　रूपकमालावचूर्णिः
　,,　गाथा-लक्षणम् (प्रा.)
सं. १६६५　चारप्रत्येकबुद्धरास ( गृ. )
　,,　चातुर्मासिकव्याख्यानम्
सं. १६६६　कालिकाचार्यकथा
सं. १६६७　श्रावकाराधनाविधिः
सं. १६६८　मृगावतीचोपाई ( गृ. )
सं. १६६९　शीलछत्रीसी ( गृ. )
　,,　संतोषछत्रीसी ( गृ. )
सं. १६७२　प्रियमेलकरास ( गृ. )
　,,　सामाचारीशतकम्
सं. १६७२(३) विशेषशतकम्
सं. १६७३　नल-दमयन्तीचोपाई ( गृ. )
　,,　पुण्यसारचरित्र (गृ.)
सं. १६७४　विचारशतकम्
सं. १६८१　वल्कलचीरीचोपाई ( गृ. )
सं. १६८२　वस्तुपालतेजपालरास ( गृ. )
　,,　शत्रुञ्जयरास ( गृ. )
सं. १६८५　बारव्रतरास ( गृ. )
　,,　विशेषसङ्ग्रहः
　,,　विसंवादशतकम्
सं. १६८६　गौतमपृच्छारास ( गृ. )
　,,　गाथासहस्री ( प्रा. सं. )
सं. १६८७　जयतिहुयणवृत्तिः
सं. १६८८　नवतत्त्ववृत्तिः
सं. १६९१　दशवैकालिकवृत्तिः
　,,　थावच्चाचोपाई ( गृ. )
सं. १६९३　व्यवहारशुद्धिचोपाई (गृ.)
सं. १६९४　वृत्तरत्नाकरवृत्तिः
सं. १६९५　चंपकचोपाई ( गृ. )
सं. १७००　द्रुपदीसतीसंबंध ( गृ. )

---

१ "बुद्ध्वा श्रीमुनिदेवसंज्ञविबुधात् काव्यं नवं नैषधम् । ······
टीकां यद्यपि सोपपत्तिरचनां विद्याधरो निर्ममे ॥······"—नैषधदीपिका ।

२ "अग्रे द्वादशभिस्त्रयोदशशते श्रीविक्रमाब्दे त्वियम् ।
श्रीप्रह्लादनपत्तने शुभदिने दीपोत्सवेऽपूर्यत ॥"—द्याश्रयवृत्तिप्र० C.

'श्रीद्याश्रयमहाकाव्य श्रीहेमसूरीय २० सर्ग संस्कृत २८२८—३०२८ । द्याश्रयकाव्यपाद २८ वृत्तिः १३१२वर्षे खरतर-अभयतिलकीया १७५७४ ।'—वृ०

अज्ञातरचनासमया चेयम्—कल्पसूत्रकल्पलतावृत्तिः, खरतरपट्टावली (?), दुरियरयसमीर वीरचरित्रस्तववृत्तिः, भक्तामरचतुर्थपादसमस्यास्तवाद्या संस्कृते; जंबूरास, धनदत्तचोपाई, नेमि-राजिमतीरास, प्रश्नोत्तरचोपाई, श्रीपालरास सीतारामचोपाई, हंसराज-वच्छराज चोपाई (?) प्रश्नोत्तरसारसङ्ग्रह, कर्मछत्रीशी, क्षमाछत्रीशी, पुण्यछत्रीशी, अनाथीऋषिसज्झाय, निद्रा-सज्झाय, निन्दावारकसज्झाय, पद्मावतीसज्झाय, शालिभद्रसज्झाय अन्तरिक्ष-गोडीपार्श्वछन्द, अल्पबहुत्वगर्भितमहावीरस्तवन, उपधानस्तवन, तीर्थमालास्तवन, पञ्चमीस्तवन शीतलनाथस्तवन, सीमंधरस्तवन इत्याद्या गूर्जरभाषानिबद्धा च कृतिरवलोक्यते। सं. १६७३ वर्षे मध्याह्न-व्याख्यानपद्धतिकारो हर्षनन्दनगणिरस्यैव शिष्यः।

## छन्दोग्रन्थाः।

ले. सं. ११९०　जयदेवच्छन्दःशास्त्रम्। जयदेवः　　क्र. २३८(१)

अष्टाध्यायविभूषितं सूत्ररूपमेतद् द्वादशशताब्दीप्रारम्भे जातो जिनवल्लभसूरिरध्यैष्टेति सं. १२९५ वर्षे विरचितायां गणधरसार्धशतकवृत्तौ सुमतिगणिना तच्चरित्रप्रस्तावे वर्णितम्। अग्रतो निर्दिश्यमाने सं. ११९२ वर्षे लिखिते छन्दोऽनुशासने च जयकीर्तिनाऽस्य नामकीर्तन-मकारीत्यतोऽस्य प्राचीनता प्रस्फुरत्येव।

ले. सं. ११९०　जयदेवच्छन्दोविवृतिः। हर्षटः　　क्र. २३८(२)

पूर्वोक्तच्छन्दःशास्त्रसूत्राणामिदं विवरणम्। विवरणकारोऽयं हर्षटः स्वस्य भट्टमुकुलकात्मज-त्वमदर्शयत्। अभिधावृत्तिमातृकाकारोऽयं मुकुलभट्टः सम्भाव्यते।

ले. सं. ११९०　कइसिट्ठम्। विरहाङ्कः　　क्र. २३८(३)

प्राकृतभाषायां मात्रावृत्त-वर्णवृत्तप्रतिपादकः षण्नियमविभक्तः कइसिट्ठ-कविसिट्ठ-कृतसिद्ध-छन्दोविचिति-वृत्तजातिसमुच्चयेत्यादिविविधसंज्ञया व्यवहृतोऽयं छन्दोग्रन्थः कदा प्रादुरभूदिति निश्चित्य वक्तुं न शक्यते। अयं कविः सद्भावलाञ्छनं गन्धहस्तिनमवलेपचिह्नं पिङ्गलं च प्रणमति स्म। दण्डिकविना काव्यादर्शे स्मृता[1] च्छन्दोविचितिरितो भिन्नाऽभिन्ना वेति न निर्णयः।

ले. सं. ११९०　कइसिट्ठवृत्तिः। गोपालः　　क्र. २३८(४)

पूर्वसूचितस्य प्राकृतच्छन्दोविचितिग्रन्थस्येयं वृत्तिः। वृत्तिकारोऽयं गोपालो भट्टचक्रपालस्य सूनुरिति प्रान्तांशनिरीक्षणादवबुध्यते। श्रीयुतभाण्डारकरेण तु (S. २१२५) कइसिट्ठस्थाने कहसिद्ध इति चक्रपालस्थाने चन्द्रपाल इति च निरदेशि। वृत्तिकर्त्रा कात्यायन-भरत-कम्बला-श्वतरादीनां स्मरणमकारि।

ले. सं. ११९२　छन्दोऽनुशासनम्। जयकीर्तिः　　क्र. २३८(६)

वर्धमाननमस्कारमङ्गलकरणेनायं कविर्जैनः प्रतिभाति। माण्डव्य-पिङ्गल-जनाश्रय-सेतव-पूज्यपाद-जयदेवबुधादीनां छन्दांसि वीक्ष्यैतच्छन्दोऽनुशासनं विहितमिति प्रान्ते दर्शितम्।

---

१ "पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा।
छन्दोविचित्यां सकलस्तत्प्रपञ्चो निदर्शितः॥"—काव्यादर्श

सं. ११९२ वर्षे योगसारलेखयिताऽमलकीर्तिरस्य शिष्यो ज्ञायते[1] । प्रा० शिलोपदेशमालायाः प्रणेता जयकीर्तिः स्वं जयसिंहसूरिशिष्यत्वेन परिचाययति स्म, स त्वस्माद् भिन्नो विज्ञायते ।

## अलङ्कारग्रन्थाः ।

ले. सं. ११६१ अलङ्कारदर्पणम् क्र. २११(१)

लघुकमपि प्राचीनमेतत् प्राकृतभाषयाऽलङ्कृतमलङ्कारपुस्तकं कदा केन निर्मितमिति नावगम्यते; तथापि श्रुतदेवीमङ्गलकरणात् कर्ता जैनः सम्भाव्यते । सं. ११६१ वर्षीयताडपत्रसङ्ग्रहे सङ्गृहीतत्वाच्च ततः पूर्वमस्य रचनेति स्पष्टम् । बर्लीनस्थपुस्तकसङ्ग्रहेऽप्येतत् श्रूयते ।

वक्रोक्तिजीवितम् । कुन्तकः क्र. २२१

अस्य रचनासमयो नावगतः । अलङ्कारसर्वस्व–साहित्यदर्पण–सारसमुच्चय( काव्यप्रकाशटीका ) प्रभृतिष्वस्य नामोपात्तम् । व्यक्तिविवेककर्त्रा च महिमभट्टेनास्य स्वग्रन्थे[2] खण्डनमकारीत्यस्य ततः प्राचीनतेति सिद्धम् । मुद्रिते च सवृत्तिके व्यक्तिविवेकग्रन्थेऽस्य 'कुन्तक' इति नाम दर्शिम्, तत्तु न शोभनं प्रतिभाति ।

ले. सं. १२१६ कविरहस्यवृत्तिः क्र. २७(२)

सुप्रसिद्धस्य हलायुधकृतस्य मूलस्यास्य वृत्तिकारो रविधर्म इति प्रसिद्धिः ।

[ काव्यादर्शव्याख्या( हृदयङ्गमा ) ] क्र. २२२(३) [ M. L. प्र. ८६३२ ]

अपूर्णेयं मुद्रिताऽत्रापि न परिपूर्णा, केवलं तृतीयपरिच्छेदसत्का । व्याख्यातुर्नाम नोपलभ्यते । सं. १२०६ वर्षीयता. सङ्ग्रहे वर्ततेऽतस्तत्पूर्वमस्या रचनेति स्पष्टम् ।

ले. सं. १२७१ काव्यप्रकाशसङ्केतः क्र. २९३(२)

अयं माणिक्यचन्द्रकृतोऽथवा भट्टसोमेश्वरविरचित इति न निर्णीयते । [3]सं. १२१(४)६ वर्षे माणिक्यचन्द्रेण कृतस्त्वन्यत्र साम्प्रतं मुद्रितः । भट्टसोमेश्वरकृतोऽपि तद्वत् प्राचीनः ।

ले. सं. १२८३ काव्यप्रकाशसङ्केतः ( काव्यादर्शः ) । भट्टसोमेश्वरः

क्र. ९९,३४६ [ P. P. ५।५२ ]

सङ्केतकारोऽयं भरद्वाजकुलीनभट्टदेवकपुत्रः[4] कदाऽऽसीदिति न निर्णीतम् ।

---

१ "श्रीजयकीर्तिसूरीणां शिष्येणामलकीर्तिना ।
लेखितं योगसाराख्यं विद्यार्थिवामकीर्तिना ॥"—P. P. ५।१४७

२ 'काव्यकाञ्चनकषाश्ममानिना कुन्तकेन निजकाव्यलक्ष्मणि ।
यस्य सर्वनिरवद्यतोदिता श्लोक एष स निदर्शितो मया ॥'—व्यक्तिविवेके

३ "रस–वक्त्र–ग्रहाधीशवत्सरे मासि माधवे ।
काव्ये काव्यप्रकाशस्य सङ्केतोऽयं समर्थितः ॥"—P. P. ३।३२०
'काव्यप्रकाशसङ्केतः १२१६ वर्षे माणिक्यचन्द्रीयः ३२४४ ।'—बृ०

४ 'भरद्वाजकुलोत्तंसभट्टदेवकसूनुना । सोमेश्वरेण रचितः काव्यादर्शः सुमेधसा ॥'—प्रान्ते

काव्यप्रकाशटीका । भवदेवः　　पृ. ५६ [ M. L. ८६२५, S. २।२८ ]

अस्याश्च टीकाया लीलेति संज्ञाऽन्यत्र दर्शिता । महामहोपाध्यायपदभाक् कृष्णदेवपुत्रो भवदेवठक्कुरस्य च शिष्यः टीकाकारोऽयं कदाऽऽसीदिति नावगतम् ।

काव्यप्रकाशावचूरिः[1]　　　　क्र. २६२(२)

मुद्रिते काव्यप्रकाशे तत्प्रस्तावनायां प्रस्तावकेन वामनाचार्येण २७ तमे प्रघट्टकेऽवचूरिकर्ता राघव इति सूचितम् ।

ले. सं. १२०५(?)　काव्यकल्पलताविवेकः　क्र. १८८,३१० [S. २।२५,७७]

सं. १६६५ काव्यकल्पलतावृत्तिमकरन्दः । शुभविजयः पृ. ५७ [P. P. ६।२५]

सुप्रसिद्धाया वायटगच्छीयामरचन्द्रसूरिकृताया अस्या वृत्तेर्मकरन्दकारोऽयं पण्डितोऽकब्बरप्रतिबोधकहीरविजयसूरेः शिष्यः यस्य स्याद्वादभाषा ( सवृत्तिः ), प्रश्नोत्तरसङ्ग्रहः ( रत्नाकरः ), सं. १६६३ वर्षे तर्कभाषावार्तिकमित्यादिका रचना दृश्यते । अस्य रचना तु विजयसेनसूरिपट्टालङ्कारविजयदेवसूरिनिर्देशात् सलेमसाहिराज्ये राजनगरे जाता । संशोधनं तु कल्याणविजयवाचकशिष्यधर्मविजयवाचकेन पं० मेरुविजयशिष्यपं० लावण्यविजयेन चाकारीत्येतत्प्रान्तेऽवलोक्यते ।

## कोशग्रन्थाः ।

शब्दरत्नप्रदीपः ।　　　　पृ. ५८

कर्तुर्नाम नावगतम् । सुमतिगणिना सं. १२९५ वर्षे विहितायां गणधरसार्धशतकवृत्तावयं नैकवारं प्रमाणत्वेनोद्धृतः । कल्याणमल्लकृतः शब्दरत्नदीपोऽयं चैक एव विभाव्यते ।

लिङ्गानुशासनविवरणम् । हेमाचार्यः　क्र. १८९(१) [ P. P. १।७६ ]

मूलं सावचूरिकं मुद्रितम् । स्वोपज्ञविवरणसहितमिदमन्यत्र मुद्राप्यत इति श्रुतम् । अयं ग्रन्थकारः सुप्रसिद्ध एव कुमारपालभूपालप्रतिबोधकत्वेन सार्धत्रिकोटिश्लोकपरिमितग्रन्थगणगुम्फयितृत्वेन च । कलिकालसर्वज्ञेति बिरुदमाबिभ्राणस्यास्य सूरिवर्यस्य सत्ताऽऽदिकं पूर्वं (पृ. २६) सूचितम् ।

ले. सं. १२८२　अनेकार्थकैरवकौमुदी　　क्र. ७७,१२५,१७९,१९५
[ P. P. १।८९,१२२ ]

सुप्रसिद्धस्य हैमानेकार्थसङ्ग्रहस्येयं वृत्तिर्हेमचन्द्रसूरिशिष्येण महेन्द्रसूरिणा[2] स्वगुरुनाम्ना प्रतिष्ठिता । अनेन महेन्द्रसूरिणा सं. १२४१ वर्षे सोमप्रभाचार्यविरचितः कुमारपालप्रतिबोधः[3]

---

१ 'काव्यप्रकाशावचूर्णिः १२५०'—बृ०

२ "श्रीहेमसूरिशिष्येण श्रीमन्महेन्द्रसूरिणा ।
भक्तिनिष्ठेन टीकेयं तन्नाम्नैव प्रतिष्ठिता ॥"—टीकाप्रान्ते
"हैमानेकार्थनाममाला[ वृत्तिः ] स्वरकाण्डषट्का । आदौ स्वरव्यञ्जनक्रमेण बद्धनामाऽन्तव्यञ्जनक्रमबद्धा श्रीमहेन्द्रसूरिकृता ।"—बृ०

३ "हेमसूरिपदपङ्कजहंसैः श्रीमहेन्द्रमुनिपैः श्रुतमेतत् ।
वर्धमान-गुणचन्द्रगणिभ्यां साकमाकलितशास्त्ररहस्यैः ॥"—कु० प्र०

श्रुत इत्यस्या रचना त्रयोदशशताब्दीपूर्वार्धेऽनुमीयते । अंशोद्धाररूपेयं वृत्तिः 'वायना' (Vienna) इत्यत्र मुद्रिता श्रूयते न तु दृष्टा ।

अपवर्गनाममाला । जिनभद्रः प्र. ४५

जैनग्रन्थावल्यां, H. प्रतिप्रान्ते, ही. सूचिपत्रे चास्याः 'पञ्चवर्गपरिहारनाममाला' इति नाम दृश्यते, दलालेनापि तथैव दर्शितमासीत्; तथाप्यस्याः प्रारम्भप्रान्ते विलोकितेऽपवर्गनाममालेत्येव नाम सम्यक् प्रतिभाति । कोशकारोऽयं जिनभद्रसूरिरात्मानं जिनवल्लभसूरि-जिनदत्तसूरिसेवकत्वेन न्यदर्शयत, जिनप्रिय( वल्लभ )स्य विनेयत्वेन च स्वं पर्यचाययदतो द्वादशशताब्द्यामस्या रचनाऽनुमीयते ।

नामकोशः । सहजकीर्तिः प्र. ५८

षट्काण्डान्वितः सलिङ्गनिर्णयोऽयं कोशः सप्तदशशताब्द्याश्चतुर्थे चरणे रचितो विज्ञायते, यतः सं. १६८३ वर्षेऽनेन ग्रन्थकर्त्रा शतदलकमलालङ्कृता लोद्रपुरीयपार्श्वजिनस्तुतिः कृताऽत्र (परि० ६) दर्शिता । सं. १६८५ वर्षे चानेन सर्वार्थश्रीसारेण साकं स्वगुरुगुरुनाम्ना कल्पमञ्जरीसंज्ञिका कल्पसूत्रवृत्तिर्विनिर्ममे । सं. १६८६ वर्षे महावीरस्तुतिवृत्तिः, सं. १६८८ वर्षे प्रीतिषट्त्रिंशिका (गू.), अनेकशास्त्रसारसमुच्चयः, ऋजुप्राज्ञव्याकरणम्, एकादिशतपर्यन्तशब्दसाधनिका, सारस्वतवृत्तिः, सिद्ध(?)शब्दार्णव इत्यादिकाऽस्य कृतिरप्येतत्पाण्डित्यं परिचाययति । अयं ग्रन्थकारो खरतरगच्छीयवाचकरत्नसारस्य शिष्यः ।

सं. १६८६ व्युत्पत्तिरत्नाकरः । देवसागरः प्र. ६१ [P. P. १।१३०]

अयं ग्रन्थः सुप्रसिद्धाया हैमीनाममालाया व्याख्यारूपः । ग्रन्थकारोऽयं विधिपक्षगच्छीयविनयचन्द्रवाचकस्य शिष्यः । सं. १६७६ वर्षे, सं. १६८३ वर्षे च शत्रुञ्जयगिरौ कल्याणसागरसूरिप्रतिष्ठितस्य श्रेयांस-चन्द्रप्रभजिनयोः प्रासादद्वयस्य प्रशस्तिरनेन विहिता (प्रा. जै. ले., एपिग्राफिआ इंडिका २।६४,६६,६८,७१) इत्यस्य विद्वत्ता सप्तदशशताब्द्युत्तरार्धे विद्यमानता च स्फुटमवसीयते ।

एकाक्षरनाममालिका । विश्वशम्भुः प्र. ५७ [A. ८।१०१, P. P. ६।९४]

नाटके ।

चन्द्रलेखाविजयप्रकरणम् । देवचन्द्रः क्र. २४

पञ्चाङ्कमेतन्नाटकं कुमारपालनृपसत्तायां त्रयोदशशताब्दीप्रारम्भे विरचितं विज्ञायते, यत एतत्प्रारम्भे सूत्रधारमुखेन 'कुमारविहारे मूलनायकपार्श्वजिनवामपार्श्वावस्थितश्रीमदजितनाथदेवस्य वसन्तोत्सवे कुमारपालपरिषच्चेतःपरितोषायास्य प्रणयनम्' इति समसूचि । अर्णोराजमन्थनरूपा कुमारपालवीरत्वसूचिका स्तुतिश्चात्र दृश्यते । अयं च देवचन्द्रो मुनिः सुप्रसिद्धस्य हेमचन्द्राचार्यस्य शिष्यः, न त्वयं गुरुर्देवचन्द्रसूरिः । जैनग्रन्थावल्यादावस्य हेमचन्द्रगुरुत्वं दर्शितम्, तत्तु समाननामभ्रान्त्यैवेति व्यक्तं भवति प्रारम्भप्रान्तदर्शनात् । अस्य कवेः सान्निध्यकर्ता शेषभट्टारकः क इति न विज्ञायते ।

---

१ विद्याम्भोनिधिमन्थमन्दरगिरिः श्रीहेमचन्द्रो गुरुः
सान्निध्यैकरतिर्विशेषविधये श्रीशेषभट्टारकः ।
यस्य स्तः कविपुङ्गवस्य जयिनः श्रीदेवचन्द्रस्य सा
कीर्तिस्तस्य जगत्रये विजयतात् साद्ध(?)ललीलायिते ॥—चन्द्रलेखाविजयप्रान्ते P.

मुरारिटिप्पनम् । नरचन्द्रसूरिः क. २२०

मुरारिकृतस्यानर्घराघवस्यैतट्टिप्पनं त्रयोदशशताब्द्युत्तरार्धे जातं सम्भाव्यते; यतोऽयं सूरिर्वस्तुपालसमकालीन आसीद् इत्याद्यस्य न्यायकन्दलीटिप्पनपरिचये (पृ. ३२) प्रादर्शि । अत्र टिप्पने विमलसूरिणा साहाय्यं कृतं व्यज्यते ।[1][2]

## प्रकीर्णग्रन्थाः ।

ले. सं. ११९५(?) पट्टावल्यादि ४३ ग्रन्थाः क. १५०(१)

अत्र सूचितास्त्रिचत्वारिंशद् ग्रन्थाः प्रायः प्राकृतभाषानिबद्धा ही. सूच्यां ७२२–७६२ क्रमाङ्केषु यथा दर्शितास्तथा संस्कृत्य प्रदर्श्यन्ते—

| | पत्रसङ्ख्या | श्लोकसङ्ख्या |
|---|---|---|
| पोरसीकुलकम् । जिनेश्वरसूरिः | ८ | १२५ |
| पञ्चलिङ्गीप्रकरणम् । ,, | ७ | १२५ |
| आगमोद्धारगाथा | ५ | १०० |
| धूमावलिका । जयभूषणसूरिः | ८ | २०० |
| अर्हदभिषेकविधिः । वादिवेताल-शान्तिसूरिः | ५ | १०० |
| उपदेशमाला । धर्मदासगणिः | ७ | १२५ |
| जिनस्नात्रविधिः । वादिवेताल-शान्तिसूरिः | ३ | ६० |
| स्थविरावलिः | ७ | १५० |
| दर्शनसप्ततिका । हरिभद्रसूरिः | ७ | १५० |
| नाणाचित्तयपगरणं | ५ | १०० |
| नवकारफलम् | २ | ४० |
| कथानककोषः । जिनेश्वरसूरिः | ३ | ५० |
| शीलोपदेशमाला | २ | ४० |
| सम्यक्त्वकलिका | २ | ३० |
| आराधनाप्रकरणम् | ३ | ५० |
| ज्ञानपञ्चाशिका | ४ | ७५ |
| पण्डितमृत्युप्रकरणम् | ४ | ५० |
| स्नात्रपञ्चाशिका | ८ | २०० |
| ऋषभस्तोत्रम् । जिनवल्लभसूरिः | ३ | ३० |
| पार्श्वस्तोत्रम् । ,, | १ | १५ |
| नेमिस्तोत्रम् । ,, | १ | १५ |
| शान्तिनाथस्तोत्रम् । ,, | २ | ३५ |
| महावीरस्तोत्रम् । ,, | १ | १५ |
| अजितशान्तिस्तवः । ,, | १ | १७ |
| जिनविज्ञप्तिः । ,, | २ | ३० |
| लघुशान्तिः (सं.) । मानदेवसूरिः | २ | २० |
| उत्साहवृत्तम् | २ | २५ |
| प्रव्रज्याभि(वि)धानम् | २ | ३० |
| चउसरणपयन्ना | २ | ३० |
| चतु[र्विंशति]जिनकल्याणकस्तोत्रम् | १ | १५ |
| स्तम्भनपार्श्वनाथस्तोत्रम् । अभयदेवसूरिः | २ | ४० |
| सुगुरुगुणस्तवसित्तरी । सोमचन्द्र(?जिनदत्त)सूरिः | ७ | १०० |
| चतुस्त्रिंशदतिशयस्तोत्रम् | २ | २० |
| उपदेशकुलकम् । जिनदत्तसूरिः | ३ | ४० |

१ "तदीयसिंहासनसार्वभौमः सूरीश्वरः श्रीनरचन्द्रनामा ।
सरस्वतीलब्धवरप्रसादस्त्रैविद्यमुष्टिन्धयधीर्बभूव ॥
टिप्पनमनर्घराघवशास्त्रे किल टिप्पनं च कन्दल्याम् ।
सारं ज्योतिषमदभद् यः प्राकृतदीपिकामपि च ॥"
—राजशेखरसूरिः । P. P. ३।२७५

'मुरारिटिप्पनकं मल० नरचन्द्रसूरीयं २३५०'—बृ०

२ "शब्द–प्रमाण–साहित्यत्रिवेणीसङ्गमश्रियाम् ।
श्रीमद्विमलसूरीणामिदमुद्यमवैभवम् ॥"—मु० प्रान्ते

| | प० | श्लो० |
|---|---|---|
| श्रुतस्तवः । जिनदत्तसूरिः | २ | ३० |
| ले. सं. ११९२ प्रतिक्रमणसूत्रम् | २१ | ४०० |
| सप्त स्मरणानि | १० | २५० |
| चतुर्विंशतिजिनस्तुतिः । जिनवल्लभगणिः | ६ | १२५ |
| ले. सं. ११७१ पट्टावली । जिनदत्तसूरिः(?पाल्हकविः) | ४ | ४० |
| अजितशान्तिस्तवः । नन्दिषेणसूरिः | ६ | ५० |
| ले. सं. १११५(?) अध्यात्मगीता । जिनदत्तसूरिः | ३३ | ७०० |

---

क्र. १५०(२) दर्शिता खरतरपट्टावली प्राचीनगूर्जरकाव्यसङ्ग्रहे सङ्गृहीता सैव सम्भाव्यतेऽत्र ही. स्खलनया ४० गाथा दर्शिताः, किन्तु दशैव दृश्यन्ते । कर्तुर्नाम जिनचन्द्र इति सूचितं तन्न सम्भवति, यतो जिनदत्तसूरिपर्यन्तसूरिवर्णनपरा सं. ११७१ वर्षे लिखितेयं खरतरपट्टावली, जिनदत्तसूरिशिष्यस्य जिनचन्द्रसूरेस्तु दीक्षाऽऽप्यपि तदनन्तरं क्षमाकल्याणकृतख० पट्टावल्यादेरवबुध्यत इति चिन्त्यमेतत् ।

| | | |
|---|---|---|
| | तपयोगाष्टकम् (?) | क्र. १०५ |
| ले. सं. १२२२ | तपश्चरणभेदस्वरूपम् | क्र. २४९(५) |
| ले. सं. १२२२ | त्रयोदशनवकारस्वरूपफलकुलकम् | क्र. २४९(६) |
| | पुलाकोद्देशसङ्ग्रहणी | क्र. ३०९(२) |

---

## कल्प-मन्त्र-ज्योतिः-शकुनादिग्रन्थाः ।

ले. सं. १२१५ वीनति (?) जिनवल्लभसूरिः क्र. २४८(२)

एतत्प्रान्ते दर्शिता गाथा जिनवल्लभसूरिविरचिते स्वप्नाष्टकविचारे दृश्यतेऽतोऽत्रत्यः प्रान्तग्रन्थः स्वप्नाष्टकविचारनामा, पूर्वग्रन्थश्चान्यो जिनविज्ञप्तिसंज्ञ एवं ग्रन्थद्वयं सम्भाव्यते ।

ले. सं. १४९९ वर्धमानविद्याकल्पः । [ सिंहतिलकसूरिः ] पृ. ५८

अस्य कर्ता सिंहतिलकसूरिः P. P. ३।१२९ इत्यत्र दर्शितः । यत्कृतं मन्त्रराजरहस्यमग्रे दर्शितं स एव सिंहतिलकसूरिरयं ज्ञायते ।

सं. १३२२(७) मन्त्रराजरहस्यम् । सिंहतिलकसूरिः पृ. ५८

अयं सूरिर्यशोदेवसूरिशिष्यविबुधचन्द्रसूरेः शिष्यः । सं. १३२६ वर्षेऽनेन भुवनदीपकवृत्तिर्विरचितेति चतुर्दशशताब्दीप्रारम्भेऽस्य विद्यमानता स्फुटैव । गणिततिलकवृत्तिरप्येतत्कृता श्रूयते । अस्य देवता प्रसन्नाऽऽसीदित्येतत्कृतग्रन्थप्रान्ताद् ध्वन्यते ।

सुधानिधिः । यादवसूरिः पृ. ४८

योगविवरणं यावदयं दृश्यते । P. P. ४।३५ इत्यत्र 'ताजिकयोगसुधानिधिः' इति नाम्नाऽयं सूचितः । कर्तृविषये न किमपि ज्ञातम्; नवरं ताजिककौस्तुभोऽनेन निर्मितः श्रूयते ।

शाकुनशास्त्रम् । लावण्यशर्मा पृ. ५०

भरद्वाजद्विजसुतोऽयं ग्रन्थकारः कदाऽऽसीदिति नावगतम् ।

---

१ "किंचि उदाहरणाइं बहुजणमिहिंगिव्व पू(पु)व्वसूरीहिं ।
एत्थं निदिं(दं)सियाइं एआइं इमंमि कालंमि ॥"—P.

## स्तुति-स्तोत्रादिग्रन्थाः ।

सरस्वतीस्तवः                    क्र. १२१(३)

सं. १६६२    साररङ्गसारवृत्तिः । हंसप्रमोदगणिः    पृ. ५३

वृत्तिकर्त्रा स्वस्य गुरुपरम्परा दर्शितेति नात्र पुनरावृत्तिः क्रियते । खरतरगच्छीयोऽयं वृत्तिकारो हर्षचन्द्रमुनेः शिष्यः सं. १६७७ वर्षे शत्रुञ्जयगिरौ प्रतिष्ठावसरे जिनसिंहसूरि–समयसुन्दर-गण्यादिभिः सार्धमासीदिति तत्रत्यशिलालेखाद् व्यज्यते; इत्यतोऽप्यस्य सप्तदशशताब्द्युत्तरार्धे विद्यमानता व्यक्तैव ।

[वृ. सं. १६७०]  शोभनस्तुतिवृत्तिः । जयविजयः पृ. ५६ [R. ८३–८४]

शोभनस्तुतयोऽवचूरिसहिताः काव्यमालासप्तमगुच्छके मुद्रिताः प्रसिद्धाः । येन सं. १६५२ वर्षे गद्यरामायणम्, सं. १६६० वर्षे गद्यपाण्डवचरितम्, सं. १६६६ वर्षे दानादिकुलकवृत्तिः, सं. १६७० वर्षे सप्ततिशतस्थानकवृत्तिरित्याद्यो ग्रन्था विहितास्तस्य तपागच्छीयपं० देवविजयस्य शिष्य आसीदयं वृत्तिकारोऽनेनाध्ययनं कल्याणविजयवाचकशिष्यधर्मविजयवाचकपार्श्वेऽकारि । सप्ततिशतस्थानकवृत्तिकार्ये पं० देवविजयोऽस्य साहाय्यं गृहीतवान् ।

## गूर्जरभाषाग्रन्थाः ।

नरबोधः                    पृ. ५५ [P. P. ५।२८८]

नारीबोधः                  पृ. ५५

उक्तीयकम् ( वाक्यविस्तरः ) । रामः      पृ. ४६

लौकिक(गूर्जर)भाषया शब्द-कारक–समास–तद्धित–क्रिया–कृत्प्रयोगाणां वाक्यविस्तररूपमेतदुक्तीयकं कदा विरचितमथवाऽयं कौशिकान्वयी नागरविप्रः सर्वदेवात्मजो रामः कदाऽऽसीदिति न ज्ञातम् । भाषा तु वि. षोडशशताब्दीमध्यकालीना ज्ञायते ।[1]

सं. १६६७    शत्रुञ्जयोद्धारः । ऋषभदासः    पृ. ५५

गूर्जरभाषानिबद्धोऽयं शत्रुञ्जयतीर्थोद्धारवर्णनात्मको रासः सुप्रसिद्धेन जैनगृहस्थकविना ऋषभदासेन स्तम्भतीर्थे विनिर्मितः । दलालमहाशयेनायं कविर्महिराजपुत्रत्वेन परिचायितः, वस्तुतस्त्वयं साङ्गणश्रेष्ठिनस्तनूजो महिराजस्य तु पौत्रः । एतद्विषये मो. द. देशाई इत्यनेन 'जैन-श्वेताम्बरकॉन्फरन्सहेरल्ड' नामकपुस्तकस्य १९१५ तमखिस्ताब्दस्य ७–९ खण्डे विशेषतो विवेचितं द्रष्टव्यं विशिष्टमहाशयैः । अस्य च कविवर्यस्य गूर्जरभाषायां कृतिबाहुल्यं समयश्च सप्तदशशताब्द्युत्तरार्धरूपः स्फुटमवगम्यते । एतदतिरिक्ता ज्ञाताज्ञातरचनासमया चेयं कविवर्यस्यास्य कृतिसंहतिः प्रदर्श्यते—

| | | | |
|---|---|---|---|
| सं. १६४४ | रोहणीआरास | सं. १६७७ | अजापुत्ररास |
| सं. १६६७ | नेमिनाथनवरसो | सं. १६७८ | भरतेश्वररास |
| सं. १६६८ | स्थूलिभद्ररास | ,, | समकितरास |
| ,, | सुमित्रराजरास | सं. १६८२ | हितशिक्षारास |
| सं. १६७० | कुमारपालरास (लघु, बृहत्) | ,, | श्रेणिकरास |
| सं. १६७६ | नवतत्त्वरास | सं. १६८४ | अभयकुमाररास |
| ,, | जीवविचाररास | ,, | बारबोलरास |

१ "......स्यादिकविभक्ति केती । कुण कुण प्र... । कारक केता ६ । सातमुं संबंधु । कर्ता कम्मु......किसइ अर्थि कुण कारकु । जु करइ सु कर्ता । जं कीजइ तं कर्मु"—प्रतिप्रारम्भे

सं. १६८५ वीशस्थानकतपरास
,, हीरविजयसूरिरास
आदिनाथविवाहलउ
आर्द्रकुमाररास
उपदेशमाला
ऋषभदेवरास
कयवन्नारास
क्षेत्रप्रकाशरास
जीवंतस्वामिरास
देवस्वरूपरास
पुण्यप्रशंसारास
पूजाविधिरास
मल्लिनाथरास
वीरसेनरास
व्रतविचाररास
श्राद्धविधिरास
समयस्वरूपरास
स्थूलभद्र–कोश्यासंवाद

एतदतिरिक्तानि बहूनि स्तुति-स्तोत्रादीनि श्रूयन्ते । स्वयं चानेन कविना हीरविजयसूरिरासे स्वकृतिपरिमाणमित्थं समसूचि 'तवन अठावन चोत्रीस रासो । गीत थुई नमस्कार बहु कीधां' मेघदूतसमस्यारूपनेमिदूतकाव्यस्य प्रणेता विक्रमोऽस्य कविवर्यस्य सहोदर इत्यनुमीयते ।

सं. १६८६ शनीश्व( ? नैश्च )रविक्रमरासः । धर्मसी पृ. ५५

ग्रन्थवस्तु पं० ललितसागरनिर्मिते 'शनि(नैं)श्चर चोपाई' नामके ग्रन्थे द्रष्टव्यम् ।

## वैद्यकम् ।

आत्मप्रकाशः । आत्मारामः पृ. ५७

## हिन्दीभाषाग्रन्थः ।

सं. १६६९ जहाङ्गीरसाहियशश्चन्द्रचन्द्रिका । केशवमिश्रः पृ. ४७

लोक( हिन्दी )भाषायामैतिह्यनिबन्धरूपोऽयं ग्रन्थो नाम्नैव विज्ञायमानस्वरूपो जहांगीर-साहियशोवर्णनपरो वरीवर्तीति ।

त्रुटितपत्र इत्यव्यक्तपदेन येऽत्रोपालक्षिता वाऽऽदिपदेन ये विवक्षितास्तेषु केषाञ्चिद्विषये दलालमहाशयेन निजे पूर्वोल्लेखे ( प्रस्ता० पृ. ९-१० ) पूर्वसूच्याः ( प्रस्ता० पृ. १० ) क्रमाङ्काः समसूच्यन्तातस्तेषां नामादीनि तत उद्धृत्यात्र प्रकटीक्रियन्ते ।

| | पत्रसङ्ख्या | श्लोकसङ्ख्या |
|---|---|---|
| क्र. ३ (ही. १२८९,१२९०,१२९४) | | |
| सचित्ताचित्तस्वरूपनिर्णयः | १–३८ | ६०० |
| स्याद्वादमञ्जरी । मल्लिषेणसूरिः | २–९८ | १५०० |
| आवश्यकबृहद्वृत्तिः | ८२–१८८ | २००० |
| क्र. १४ (ही. १३४३,१३४६,१३४७,१३५०,१३५३,१३५४,१३५५) | | |
| हैमशब्दानुशासनम् । हेमचन्द्राचार्यः | १६०–२०३ | १४०० |
| प्रभावतीचरित्रम् ( सं. ) | ९–१५० | २२०० |
| न्यायकुसुमाञ्जलिः | १–२० | ४०० |
| अभयकुमारचरितम् । चन्द्रतिलकोपाध्यायः | १–१७२ | ४००० |
| ,, ,, | १–११० | १८०० |
| विक्रमचरित्रम् | १–७५ | १२०० |
| नवनन्दचरित्रम् | १–३५ | १००० |
| क्र. १६ (ही. १३४०,१३४४,१३४५,१३४८,१३४९,१३५१) | | |
| पिण्डनिर्युक्त्यवचूरिः | १–३० | ६०० |
| द्व्याश्रयमहाकाव्यम् | १–१०० | २००० |
| जम्बूद्वीपप्रज्ञप्तिटीका | ४०–९३ | १५०० |
| धर्मसङ्ग्रहवृत्तिः | ४८–२३८ | २५०० |
| श्रेणिकचरित्रम् ( सं. ) | १–२० | ५०० |
| तपोटमतखण्ड(कुट्ट)नम् । गुण(?जिन)प्रभसूरिः | १–५० | ८०० |
| क्र. १७ (ही. १२९६,१२९७,१२९८,१२९९) | | |
| गणधरसार्धशतकटीका | १–१७३ | ३००० |
| पद्मानन्दाभ्युदयमहाकाव्यम् ( चतुर्विंशतिजिनचरितम् ) } अमरचन्द्रसूरिः | १–१३५ | ३००० |
| सामाचारी ( प्रा. ) । श्रीचन्द्रसूरिः | १–१११ | १३०० |
| न्यायकन्दलीटीका | | |
| क्र. १८ (ही. १३००,१३०१,१३०२) | | |
| कालज्ञानम् | | |
| न्यायप्रवेशटीका । हरिभद्रसूरिः | १–१५ | ४०० |
| सुभद्राचरित्रम् ( सं. ) | ४३–१०० | १५०० |

| क्र. ३७ (ही. १२३८,१२३९,१२४०) | प० | श्लो० |
| --- | --- | --- |
| दौर्गसिंहीवृत्तिः | १–११ | २०० |
| महानिशीथम् ( पञ्चममध्ययनम् ) | १–१२ | ३०० |
| कातन्त्रव्याख्या | १–९ | २०० |
| क्र. ३८ (ही. १६०५,१६०६) | | |
| पिण्डनिर्युक्तिटीका | १–२२४ | ७००० |
| अनुयोगद्वारटीका | १–१६२ | ६००० |
| क्र. ४० (ही. १६१०,१६११) | | |
| विलासवतीकथा | ९०–२९५ | ५००० |
| करणसित्तरीटीका | १–५० | ३००० |
| क्र. ४२ (ही. १५९४,१६०१) | | |
| अस्वाध्यायिकनिर्युक्तिः | १–२७२ | ३५०० |
| नवपदशास्त्रवृत्तिः। देवगुप्तसूरिः | १–१४५ | ७५०० |
| क्र. ६२ (ही. १६९२) | | |
| गुणस्थानक्रमारोहटीका | ६–१३७ | ३००० |
| क्र. ६३ (ही. १६९३) | | |
| कम्मपयडीटीका | ३–१८८ | ३००० |
| क्र. ६४ (ही. १६९८) | | |
| कल्पचूर्णी | ९–६१ | २००० |
| क्र. ६६ (ही. १६९०) | | |
| भगवतीसूत्रम् | २१–१०४ | २००० |
| क्र. ६७ (ही. १६९४) | | |
| उत्तराध्ययनटीका | २१–९४ | २००० |
| क्र. ६८ (ही. १६९५) | | |
| महावीरचरित्रम् ( सं. ) | १५० | ४००० |
| क्र. ६९ (ही. १६९६) | | |
| शत्रुञ्जयमाहात्म्यम्। धनेश्वरसूरिः | २०० | ३००० |
| क्र. ७० (ही. १६९७) | | |
| दशवैकालिकबृहट्टीका | ३०० | ६००० |

# Catalogue of palm-leaf mss. in the big Bhandar at Jesalmere.

1. ( 1 ) उत्तराध्ययनटीका ( त्रुटित ) ( मु. ).
   ( 2 ) उपासकदशाविवरण ( त्रुटित ) ( मु. ).
2. उपदेशमालावृत्ति ( हेयोपादेया ) by सिद्धर्षि ( त्रुटित ) ( मु. ).
3. पदार्थद्रव्य( धर्म )सङ्ग्रहवृत्ति ( न्यायकन्दली ). leaves 3-50. ( मु. ) and many loose leaves.
4. Loose leaves of सूर्यप्रज्ञप्ति ( मु. ), भगवती ( मु. ) etc.
5. काव्यप्रकाश ( त्रुटित ) ( मु. ). and other loose leaves.
6. [ प्रमाणान्तरवृत्ति ? by देवभद्र and यशोदेव ].

   Beg :—अथातो धर्मजिज्ञासा । लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति संभवे तदर्थान्येव सूत्रेष्वित्यवगंतव्यं ॥

   End :—इत्यद्भुताभावनिराक्रियेयं प्रतीतिसंस्पर्शितया प्रबंधात् ।
   वि(वे ?)परीतफल(?)स्फुरितं परेषां सदर्थनीतेरयमेव सारः ॥

   प्रमाणांतर्भावः समाप्तः

   श्रीदेवानन्दगच्छान्वय(म्बर)शिशिरकरे काशिभव्यारविन्दे
   सराबुद्योतनाख्ये प्रतपति तपने वादिकुमुदा(कुन्दा)वलीनां ।
   ता राज्ये सानुभावा समभवदमला साधुकृच्चालवाणी
   वंद्या विद्यार्थिवृंदस्थितचरणयुगा सद्यशोवर्द्धनाख्या ॥
   तत्पुत्रौ साधुशिष्यौ गुरुपरिचरणप्राम [ बुद्धा विबोद्धुं? ]
   ज्येष्ठोसौ देवभद्रोपरलघुकवयाः सद्यशोदेवनामा ।
   एतामुत्साम्यमानां कतिपयरचनां बौद्धमीमांसकानां
   व्यालेखिष्टां विशिष्टां निजगुरुपदवीमीप्समानौ प्रतीतां ॥

   सं० ११९८ भाद्रपदे

7. ( 1 ) पर्यू(र्यु)षणाकल्प ( मु. ) } 111 leaves.
   ( 2 ) कालि(ल)काचार्यकथा ( प्राकृत ) }
   ( 3 ) साधुस(सा)माचारी ( त्रुटित ). 112—157 leaves.
8. तत्त्वसङ्ग्रहपञ्जिका by कमलशील. 313 leaves. Complete, good Ms. Being printed in the Gaekwad's Oriental Series.
9. कल्पभाष्य ( त्रुटित ). 166 leaves.
10. ( 1 ) कृतपुण्य ( धन्य-शालिभद्र ? ) चरित्र. 1-156 leaves. 14 × 2.

   Beg :—श्रीनाभिनंदनो भास्वान् सत्पथं प्रथयत्वसौ ।
   गोभिराविश्वकारार्थान् यः सच्चक्राभिनंदनः ॥ १ ॥

---

1 P., H. 2 P. 3 H.

वाग्मिग्रामशिरोरत्नं वंदे मर्त्येश्वरस्तुतं ।
भक्त्या सुमेधसां धुर्यं श्रीमज्जिनपतिं गुरुं ॥ ४ ॥

End :—इति श्रीधन्यशालिभद्रमहर्षिचरिते शालिभद्रपूर्वजन्मभणनादिधन्यशालिभद्रसर्वार्थसिद्धिगमनमहाविदेहविजयभाविमुक्तिप्राप्तिफलप्रतिपादनपर्यन्तव्यावर्णनो नाम षष्ठः परिच्छेदः । समाप्ते(प्तं चे)दं धन्यशालिभद्रमुनिपुंगवयोश्चरित्रमिति अनुष्टुभां १४६०

श्रीमद्गूर्जरभूमिभूषणमणौ श्रीपत्तने पत्तने
श्रीमद्दुर्लभराजराजपुरतो यश्चैत्यवासिद्विपान् ।
निर्लोड्यागमहेतुयुक्तिनखरैर्वासं गृहस्थालये
साधूनां समतिष्ठपन्मुनिमृगाधीशोऽप्रधृष्यः परैः ॥
सूरिः स चान्द्रकुलमानसराजहंसः श्रीमज्जिनेश्वर इति प्रथितः पृथिव्यां ।
जज्ञे लसच्चरणरागसमिद्धशुद्धपक्षद्वयः शुभगतिं सुतरां दधानः ॥
[ तच्छिष्यो जिनचंद्रसूरिरमृतज्योतिर्नवी ]नोऽभवत्
पद्मोल्लासनसत्कलंकविकलो दोषोदयध्वंसनः ।
सुस्थेयो जडिमापहारचतुरः सच्चक्रमोदावहो
दूरीभूततमोभ(त्र)तिर्न कुटिलो न व्योमसंस्थानकृत् ॥
अन्यो विशिष्ट(पि शिष्य)तिलकोऽभयदेवसूरिः
श्रीमज्जिनेश्वरगुरोः शुभ(श्रुत)केतुरासीत् ।
पंचाशकाष्टकनवांगमनोज्ञटीकाकारः सुचारुधिषणः सुमनःप्रपञ्चः ॥ ४ ॥
आकर्ण्याभयदेवसूरिसुगुरोः सिद्धांततत्वा(त्त्वा)मृतं
येनाज्ञायि न संगतो जिनगृहे वासो यतीनामिति ।
तं त्यक्त्वा [ गृहमेधिगेहवसतिर्निर्दूषणा शिश्रिये
सूरिः श्री]जिनवल्लभोभवदसौ विख्यातकीर्तिस्ततः ॥ ५ ॥
भास्वांस्ततः समुदगाज्जिनदत्तसूरिर्भव्यारविंदचयबोधविधानदक्षः ।
गावः स्फुरंति विधिमार्गविकासनैकनानास्तमोविदलनप्रवणा यदीयाः ॥ ६ ॥
बाल्ये श्रीजिनदत्तसूरिविभुभिर्ये दीक्षिताः शिक्षिता
दत्वाचार्यपदं स्वयं निजपदं गैरेव संस्थापिताः ।
ते श्रीमज्जिनचंद्रसूरिगुरवोऽपूर्वेंदुबिंबोपमा
न ग्रस्तास्तमसा कलंकविकलाः क्षोणौ बभूवुस्ततः ॥ ७ ॥
यैर्वादीन्द्रकरींद्रदर्पदलने सिंहैरिव स्फूर्जितं
मोहध्वांतविनाशने भुवि सदा सूर्यैरिवोज्जृंभितं ।
भव्यप्राणिसमूहकैरववने चंद्रैरिवेहोद्गतं
ते श्रीमज्जिनपत्यभिख्यगुरवोऽभूवन् यतीशोत्तमाः ॥ ८ ॥
तेषु स्वर्गाधिरूढेष्विहह बहुगुणस्फद्धिनेयावतंसः
साधुर्वीरप्रभाख्यः सकलगणधुराधुर्यवर्यो जितश्रीः ।
आचार्यैः सर्वदेवैर्विहितगुरुपदोधिष्ठितस्तन्महिम्ना
नामानं लंभितः श्रीवसतिनिवसतिस्थापनाचुंचुसूरेः ॥ ९ ॥

1 H.

श्रीचंद्रगच्छममिनंदति शास्ति पाति तीर्थं प्रभावयति संप्रति जैनचंद्रे ।
यः श्रीजिनेश्वर इवाप्रतिमैर्वचोभिर्वृत्तैरिव त्रिभुवनं पृणति प्रतीतः ॥ १० ॥
तदाज्ञया सद्गुणसर्वदेवाचार्यैः समं जेसलमेरुदुर्गे ।
स्थितो गिरेषां स्वपरोपकारहेतोः समाधिं मनसोऽभिलष्यन् ॥ ११ ॥
शरवसुरविसंख्ये वैक्रमे वत्सरेऽस्मिन्वहति नपसि मासे शुक्लपक्षे दशम्यां ।
जिनपतिगुरुशिष्यः पूर्णभद्राभिधानो गणिरकृत चरित्रं धन्यगोभद्रसून्वोः ॥१२॥
चरितमिदमखिलं निर्मलविद्याकूपारपारदृश्वानः ।
वाचकमुख्याः सूरप्रभाभिधाः शोधयांचक्रुः ॥ १३ ॥
धन्यसाधुमुनिशालिभद्रयोः प्रीतिकारि चरितं विधापयत(ता) ।
पुण्यमत्र समुपार्जितं मया स्यात्ततो जगदिदं सुखास्पदम् ॥ १४ ॥
गगनसरसि यावन्निर्मले शारदेंदुः कलयति कलहंसस्फारलीलातिरेकं ।
जगति जयति(तु?) तावत्पठ्यमानं सुधीभिः
सुचरितमिदमुर्वे(च्चै)र्धन्यगोभद्रसून्वोः ॥ १५ ॥
सर्वसंख्यया प्रशस्तिरियं श्लोक २९ चरितं तु सर्वसंख्यया श्लोक १४९०.

( 2 ) **अतिमुक्तचरित्र** [ by **पूर्णभद्र** ]. leaves 157-347.
Beg :—प्रथमजिनवरेंद्रः प्रह्वसर्वामरेन्द्रः प्रदिशतु स सुखानि श्रेयसे श्रीसुखानिः ।
व्रतमहसि महिष्ठे सद्यवांकूरपूराविव चिकुरवतंसौ व्यावभस्तां(?)यदंसौ ॥ १ ॥
End :—स्थानांगपंचमसदंगमुपिस्तवेभ्यो दृष्ट्वा जडप्रकृतिनापि मया विदब्धं ।
चित्रं चरित्रमिह देवगुरुप्रसादाच्चंचन्मतेर्वरमुनेरतिमुक्तकस्य ॥ १८ ॥
श्रीमत्प्रह्लादनपुरवरे पूर्णभद्रो गणिर्द्राक् शिष्यः श्रीमज्जिनपतिगुरोश्चारु चक्रे चरित्रं ।
चित्ताश्चर्यं विजयतनयस्यातिमुक्तस्य साधो
द्व्यष्टार्काब्दे दितिसुतगुरौ कार्तिके पूर्णमास्यां ॥ २१ ॥
समाप्तं चेदमतिमुक्तकमुनिचरितं ।

( 3 ) **उवासग( उपासक ) दशाचूर्णि.** leaves 348-385. 14 x 2.
Beg :—जस्स [ पय ]नहपहाभरपंजरमज्झट्ठिया निलोई वि ।
पडिहासइ निच्चलमालिहिय व्व तं नमिय जिणवीरं ॥ १ ॥
End :—सप्तमांगचूर्णिः ग्रंथाग्रं श्लोक १०१ । मेदपाटे वरग्रामवास्तव्यश्रे० अभयोश्रावकपुत्रसमुद्धरश्रावकभार्यया कुलधरपुत्र्या सार्वितश्राविकया धन्यशालिभद्रकृतपुण्य(द्रातिमुक्त?)महर्षिचरितादिपुस्तिका स्वश्रेयोनिमित्तं लेखिता । संवत् १३०९ ।

**11. भगवती (मूल) ( त्रुटित ).** Size 25 x 2. **( मु. )**
End :—समत्ता भगवती संवत् १११—कार्तिकशुदि ६ रवौ उत्तराषाढनक्षत्र षट्त्रिंशद्दंलाकूलाभरणस्तंभतीर्थाभिधानवेलाकूलावसितेन गौडान्वये प्रसूतकायस्थगुंदलात्मजसुभच्छराजांगजसेह्लाकेन भगवतीपुस्तको (स्तिके?) यं समलेखि ॥

**12. न्यायकंदली** by **श्रीधर.** 288 leaves. 14 x 2½. **( मु. )**

**13. आवश्यकवृत्ति(प्रदेशव्याख्या)टिप्पन** by **मलधारिहेमचंद्र. ( मु. )**
315 leaves. 14½ x 2.

---

14. **धर्मोत्तरटिप्पन** by **मल्लवादी, अभयकुमारचरित्र(मु.)** by **जिनेश्वरशिष्यचंद्रतिलकोपाध्याय** etc. (**त्रुटितपत्र**).

15. **श्रावकदिनकृत्यवृत्ति.** leaves 7–248. 26½ × 2½.

16. **तिलकमंजरी** ( सं० ११३० ) ( **मु.** ) **न्यायभाष्यवार्तिकवृत्ति** ( **मु.** ) etc. ( **त्रुटितपत्र** )

17. **सुहबोधा सामाचारी** by **शीलभद्रसूरिशिष्यधनेश्वरसूरि** etc. (**त्रुटितपत्र**).

18. **त्रुटितपत्र**

19. ( 1 ) **न्यायकंदलीटिप्पन** [ by **नरचन्द्र** ]. leaves 1–164. 14 × 2.

Beg :—अव्याहतमनाद्यंतमनंतमहिमास्पदं ।
विश्वपवित्रतयोद्योति ज्योतिस्तन्मे प्रसीदतु ॥ १ ॥
यथाम्नायं यथाप्रज्ञमात्मनः स्मृतिहेतवे ।
कंदलीटिप्पनारंभसंरंभः क्रियते मया ॥ २ ॥

( 2 ) **न्यायावतारवृत्तिटिप्पन** [by **राजशेखर**]. leaves 165–230. (**मु.**)

Beg :—नत्वा श्रीवीरमेकांतध्वांतविध्वंसभास्करं ।
वृत्तौ न्यायावतारस्य स्मृत्यै किमपि टिप्यते ॥ १ ॥

End :—न्यायावतारविवृतौ विषमं विभज्य किंचिन्मया यदिह पुण्यमवापि शुद्धं ।
संत्यज्य मोहमखिलं भुवि शश्वदेव भद्रैकभूमिरघु(सु)नास्तु समस्तलोकः ॥

इति न्यायावतारटिप्पनकं समाप्तं । संवत् १४८९ वर्षे श्रावणसुदि बुधे त्रयोदश्यां तिथौ लिखितं ।

20. **अनुयोगद्वारवृत्ति** ( **त्रुटित** ). 160 leaves. 30 × 2. ( **मु.** )

Beg :—सम्यग्ग(क्स)रेन्द्रकृतसंस्तुतिपादपद्म०

21. **छन्दोनुशासनवृत्ति** by **हेमचन्द्र.** Size 14 × 2. ( **मु.** )

Colophon:—सं० १४९० वर्षे आषाढसुदि ६ शनिदिने श्रीमति स्तंभतीर्थे अविचलत्रिकालज्ञाज्ञापालनपटुतरे विजयिनि श्रीमत्खरतरगच्छे श्रीजिनराजसूरिपट्टे लब्धिलीलानिलयबंधुरबहुबुद्धिबोधितभूवलयकृतपापपूरप्रलयचारुचारित्रचंदनतरुमलययुगप( प्र )वरोपममिथ्यात्वनिकरदिनकरप्रसरसमश्रीमद्गच्छेशभट्टारकश्रीजिनभद्रसूरीश्वराणामुपदेशेन ५० गूजरसुतेन रेषाप्राप्तसुश्रावकेण धरणाकेन पुत्रसाईयासहितेन छंदचू(दश्चू)डामणिपुस्तकं लिपापितं पुरोहितहरीयाकेन लिखितं ।

22. (1) **द्वादशकुलकविवरण** by **जिनपाल.** ( **जिनपतिशिष्यलेश** ).
ग्रं. ३३६३. 157 leaves.

(2) **रत्नचूडकथाविषम[पद]विवरणटिप्पणक.** 157–158 leaves.

23. **न्यायप्रवेशटीका** by **हरिभद्र.** 134 leaves. 9 × 1¼. ग्रं. ५९० ?

Colophon:—संवत् १२०१ वर्षे माघमासीयचरमशकले तुरीयतिथौ तिमिरासहनवासरे श्रीभृगुकच्छे स्थितिमता पंडितेन यशसा सहितेन धवलेन पुस्तिकेयमलेखि ।

Beg :—साधनं दूषणं चैव साभासं.

24. **चंद्रलेखाविजयप्रकरण.** a drama in five acts by **देवचन्द्र** pupil of **हेमचन्द्र.** 203 leaves. 9 × 1½.

25. **प्रकरणपुस्तिका.** 167 leaves. 11 × 2.

( 1 ) **उपदेशमाला (मु.)** 69 leaves.

( 2 ) **धर्मोपदेशमाला** 69–82.

( 3 ) **सत्तरिसयठाण** 82–108. (**मु.**)

( 4 ) **प्रतिक्रमण (मु.)** 108–157.

( 5 ) **विवेकमंजरी (मु.)**

( 6 ) **अजितशांति (मु.)** 158–167.

Col:—सं. १३४५ वर्षे आषाढवदि ९ भौमे पंडि० सादेवेन

26. ( 1 ) **स्याद्यन्तप्रक्रिया** [ by **सर्वधर** ]. 94 leaves. 12 × 2½.

Beg:—प्रणम्य शिरसा सार्वं सर्वज्ञं जगतां गुरुं ।
स्याद्यन्तप्रक्रियां वक्ष्ये सविशेषं समासतः ॥
रूढिशब्दाः प्रकीर्त्यंते पुंसि क्लीबे स्त्रियामपि ।
गुणद्रव्यक्रियायोगात्रिलिंगास्तदनंतरं ॥

End:—इत्युपाध्यायसर्वधरविरचितस्याद्यंतप्रक्रियायां त्रिलिंगकांडश्चतुर्थः समाप्तः । संवत् १२०७ माघसुदि २ रवौ मंगलं ।

( 2 ) **वासवदत्ता.** 47 leaves. (**मु.**)

Col:—संवत् १२०७ श्रावणवदि ८ सोमे रुद्रपल्लागमावासे राजश्रीगोविन्दचन्द्रदेवविजयिराज्ये श्रीयशोधरेण श्रीआचार्याणां कृते लिखितेयं वासवदत्ता ।
शिवमस्तु सर्वजगतः परहितनिरता भवंतु भूतगणाः ।
दोषाः प्रयांतु नाशं सर्वत्र सुखीभवंतु लोकाः ॥

27. ( 1 ) **काव्यमीमांसा** [ by **राजशेखर** ]. leaves 1–90. 11 × 2. (**मु.**)
संवत् १२१६ फाल्गुनवदि १ सोमे दिने.

( 2 ) **कविरहस्यवृत्ति.** leaves 1–71.
संवत् १२१६ चैत्रसुदि ४ सोमे श्रीम्व(अ)जयमेरुदुर्गे पुस्तकमिदं लिलिखे ।

28. **उपदेशपद** by **हरिभद्र.** ग्रंथाग्र १०४०. 109 leaves. 12 × 2. (**मु.**)

29. ( 1 ) **सांख्यसप्ततिभाष्य** by **गौडपाद.** Leaves 1–70. (**मु.**)

( 2 ) **सांख्यसप्तति** by **ईश्वरकृष्ण.** Leaves 1–7. (**मु.**)

( 3 ) **सांख्यतत्त्वकौमुदी** by **वाचस्पतिमिश्र.** 1–80 leaves. (**मु.**)

30. **हेमशब्दानुशासनलघुवृत्ति** ( Adhyâyas 1–5 ). 277 leaves. 12¼ × 2. (**मु.**)

31. **हेमशब्दानुशासनलघुवृत्ति** ( ७ **अध्याय** ). 198 leaves 11 × 2. (**मु.**)

32. **त्रुटितपत्र.**

33. **पार्श्वनाथचरित्र** by **माणिक्यचंद्र (त्रुटित).** 327 leaves. 20 × 2.

34. **कातंत्रवृत्तिपंजिका** by **त्रिलोचनदास.** 14 × 2.

35. **अनुयोगद्वारादि ( त्रुटितपत्र ) (मु.).**

36. **योगशास्त्र (मु.), जंबूद्वीपप्रज्ञप्तिवृत्ति (मु.).**
**पांडवचरित्र (मु.), महावीरचरित्र (मु.) ( त्रुटितपत्र ).**

37. **त्रुटितपत्र.**

**38. त्रुटितपत्र.**

**39. ( 1 ) जंबूदीवपन्नत्ती( जंबूद्वीपप्रज्ञप्ति ) ( मूल ).** 1-73 leaves. **(मु.)**

( 2 ) **सिद्धपाहुड(प्राभृत) वृत्ति.** 1-44 leaves.

**40. त्रुटितपत्र.**

**41. बृहत्कल्पभाष्य (त्रुटित).** 7-288 leaves. 23 × 2.

**42. उत्तराध्ययन (मु.)** etc. ( **त्रुटित** ).

**43. क्षेत्रसमासवृत्ति** ( **त्रुटित** ). 2-341 leaves. 23 × 2.

**44. निशीथचूर्णि, ज्ञाताधर्मवृत्ति (मु.)** etc. **(त्रुटितपु०).**

**45. सु( सू )य[ग]डांग(सूत्रकृताङ्ग)वृत्ति(त्रु.).** 2-414 leaves. 24 × 2. **(मु.)**

**46. पंचाशकवृत्ति** by **अभयदेव.** 262 leaves. 24 × 2½. **(मु.)**

Colophon:—सप्तोत्तरसूर्यशते विक्रमसंवत्सरे त्वजयमेरौ ।
दुर्गे पल्लीभंगे त्रुटितं पुस्तकमिदमग्रहीत्तदनु ॥
अलिखत्स्वयमत्र गतं श्रीमज्जिनदत्तसूरिशिष्यलवः ।
स्थिरचंद्राख्यो गणिरिह कर्मक्षयहेतुमात्मनः ॥

**47. ( 1 ) चैत्यवंदन[सूत्र]वृत्ति [** by **श्रीचन्द्रसूरि ].**

Beg:—प्रणम्य श्रीमहावीरं सर्वभावप्रकाशकम् ।
चैत्यवंदनसूत्रस्य स्पष्टा व्याख्या प्रकाश्यते ॥ १ ॥

End:—इति श्रीशीलभद्रप्रभुश्रीधनेश्वरसूरिशिष्यश्रीचंद्रसूरिविरचिता सुबोधा चैत्यवंदनसूत्रवृत्तिः ॥ ग्रं. ५४०

( 2 ) **श्रावकप्रतिक्रमणसूत्रवृत्ति [वृ० श्रीचन्द्र].** ग्रंथाग्र १९५०. On the last leaf which has been supplied later on, the colophon runs:— संवत् १६३५ वर्षे आषाढशुदिनवम्यां पूर्णतां प्रापितं पत्रमदः प्रातिम श्रीजिनमाणिक्यसूरिपट्टांभोजभास्करश्रीजिनचंद्रसूरिः ( रिभिः? )

**48. उपदेशपदटीका [ मू० हरिभद्रसूरि, टी० वर्धमानसूरि ].** 192 leaves.

Beg:—वंदे देवनरेंद्रवृंदविनुतं स्वर्गापवर्गास्पदं
लोकालोकविमर्शिकेवलकरप्रध्वस्तदोषोदयं ।
भव्यांभोरुहषंडमोहमुकुलध्वंसोष्णरश्मिं जिनं
कर्म्माद्रिद्रुतदारणैककुलिशं श्रीनाभिभूपांगजं ॥ १ ॥
सिद्धं सर्वज्ञगत्वा(वां?)यं वीरं नत्वा जिनेश्वरं ।
उपदेशपदव्याख्यां प्रत्या(भव्या?)त्मस्मृतये यते ॥ २ ॥
हरिभद्रवचोव्याख्यां कः कुर्याद्यो विचक्षणः ।
स्वशक्तिमविचार्यैव तथाप्यभ्युद्यतोत्रपः ॥ ३ ॥

End:—सिध्ये संसारभयात्पार्श्विलगणिवचनतः प्रथममेषा ।
स्नेहादलेखि शीघ्रं मुनिना नत्वाम्रदेवेन ॥
कर्मक्षयाय वृत्तिर्येरेषा वर्णिता यशोविमुखैः ।
पार्श्विलगणिना तेषां स्तुतिरियमुपवर्णिता भक्त्या ॥
प्रशमविजितकोपैर्माईवाप्यस्तमानैः
ऋजुगुणहतमायैस्ताप(?)संतोषलोभैः ।

जिनवचनविचारे नित्यमाश(स)क्तयोगैः
सुविमलगुणरंध्रैर्वर्द्धमानव्रतींद्रैः ॥
इयमुपदेशपदानां टीका रचिता जनाववोधाय ।
पंचाधिकपंचाशद्युक्ते संवत्सरसहस्रे ॥
कृतिरियं जिनागमभावनाभावितांतःकरणानां श्रीवर्धमानसूरिपूज्यपादानामिति ।
अक्षरघटनामात्रं सम्यगविज्ञाय यत्कृतं धार्ष्ट्यात् ।
गंभीरपदार्थानामुपदेशानां मया स्मरणहेतोः ॥
विद्वद्भिरागमव(च?)रैरवधानपरैः परोपकाररतैः ।
मय्यनुकंपकरैस्तच्छोध्यं मर्पणीयं च ॥

संवत् १२१२ चैत्रसुदि १३ गुरौ अद्येह श्रीअजयमेरुदुर्गे समस्तराजावलीविराजितपरमभट्टारकमहाराजाधिराजश्रीविग्रहराजदेवविजयराज्ये उपदेशपदटीकाऽलेखीति ।

**49. त्रुटितपत्र.**

**50. पंचाशकवृत्ति** by **अभयदेव.** 185 leaves. (**त्रुटित**) 30 × 2½. **(मु.)**

**51. उपदेशपदटीका** by **वर्धमानाचार्य.** leaves 149–299.
Same as No. 18. 25 × 2½.

संवत ११९३ ज्येष्ठसुदि २ रवौ ।

**52. त्रुटितपत्रसंग्रह.**

**53. हैमतद्धितवृत्ति** ( **त्रुटित** ). 265 leaves. 19½ × 2. **(मु.)**
Beg:—तद्धितोणादि [ : । ६।१।१॥ ]

**54. पंचसंग्रहवृत्ति** [by **मलयगिरि**]. 2–132 leaves. 21 × 2. ( **मु.** )
चरमसंछोभसमयं(ए?) एगा ठिइ(ई) होइ etc.
तदेवमुक्ता बंधविषयाः (धयः । )

**55.** ( 1 ) **ज्ञाता(मूल).** 1–146 leaves. (**त्रुटित**) **(मु.)**
( 2 ) **ज्ञातावृत्ति** [ by **अभयदेव** ]. 149–264 leaves. **(मु.)**

**56. नवपदप्रकरणवृहद्वृत्ति.** 1–255 leaves. 32 × 2½.

Beg:—शुद्धध्यानघनप्राप्त्या कर्मदारिद्र्यविद्रुतौ ।
निर्वृतिः साधिता येन तं नमामि जिनप्रभुं ॥ १ ॥
जयति जिनकर्मेशचलेध्वा(ध्वा?)तुलमहिमकेवलपताकः ।
त्रिदशासुरकृतपूजः स तत्व(त्त्व)विनिवेदको वीरः ॥ २ ॥
यस्याः प्रसादयत्ने(याने?)न लीलया ज्ञेयसागरं ।
तरंति विबुधाः सा मे सन्निधत्तां सरस्वती ॥ ३ ॥
मम बुद्धिकुमुदिनीयं यत्संगमशशधरोदये सम्यक् ।
अलभत विकासमसमं तान्भक्त्या निजगुरून्नौमि ॥ ४ ॥
श्रीदेवगुप्तसूरिर्विरचितवान्नवपदप्रकरणं यत् ।
विवृतिं तस्य विधित्सुर्विज्ञपये सज्जनानेवं ॥ ५ ॥
वृत्तिर्यद्यपि विद्यतेत्र विहिता तैरेव पूज्यैः स्वयं
*संक्षेपेण तथापि सा न सुगमा गंभीरशब्दा यतः ।*
विस्पष्टार्थपदप्रबंधरुचिरा तेनेयमारभ्यते
*किंचिद्विस्तरशालिनी तनुधियामिच्छानुवृत्त्या मया ॥ ६ ॥*

यच्चासमंजसं किंचिज्ज्ञायतेत्र प्रमादतः ।
पुत्रापराधवत्सर्वं तद्बुधैर्मम सह्यताम् ॥ ७ ॥

**57. भगवतीवृत्ति ( त्रुटित ) [ by अभयदेव ].** 434 leaves. 27 × 2½. **(मु.)**
Beg:–[ सर्वज्ञमीश्वरमनन्तमसङ्गमग्र्यं, सार्वीयम ]स्मरमनीशमनीहमि [ द्धम् । ]
सिद्धं शिवं शिवकरं etc.

**58. आवश्यकबृहद्वृत्ति ( द्वितीयखंड ).** leaves 4–341. ( No. 380 ) **(मु.)**

**59. ( 1 ) समवायांगटीका.** leaves 3–362. 31 × 2. **( त्रुटित ) (मु.)**
**( 2 ) सु( सू )यगडांग (सूत्रकृताङ्ग) टीका.** 121–267 leaves. **( त्रु. ) (मु.)**

**60. योगशास्त्रटीका ( मु. ), आचारांग (मूल) (मु.), महानिशीथचूर्णि, पाक्षिकसूत्रवृत्ति ( मु. ), आचारांगवृत्ति (मु.) ( त्रुटितपु० ).**

**61. सम्यक्त्वालंकार.**
Beg:–प्रव्रज्याप्रमदाविवाहमहसि स्कंधस्थकेशावली—
संक्रांतिच्छलतः कपोलविलसत्कस्तूरिकामंडनः ।
सर्वस्ववनिताप्रगीतधवलः सन्मार्गमार्ग...
...मिह जायतां जिनवरः श्रीनाभिभूः संमुखः ॥ १ ॥
कीर्त्या पीयूषवृष्ट्या मम निखिलमगो तापमालोत्थमस्तं
नूनं मत्वेति येभ्यः करचरणनखच्छद्मना रत्नराशिः ।
स्वःसन्मत्थ(?)मपि हि मणीः कौस्तुभं दासयन्तीः
प्राप्ता प्राभृत्यकार्षीन्मम ददतु शिवं तेजिनाद्या जिनेंद्राः ॥ २ ॥
आयाता गलहस्तितामृतरुचिच्छत्रत्रयीच्छद्मत—
स्त्रिस्रोताः किल तीर्थमुत्तमतमं यं......वितुं ।
ऊर्ध्वस्था व्यस्चत्रिविष्टपजने भस्य(?)न्यथेयं कथं
तीर्थत्वं जडरूपिणी व्रजति स श्रीवर्धमानः श्रिये ॥ ३ ॥
ऊर्ध्वस्फुटामदलकः करुणामृतेना –
कंठं भृतो दशनदीधि[ति?]पु...
विश्वत्रयीशिरसि संस्थित आशु भूया—
च्छ्रीपार्श्वपूर्णकलशो मम संमुखीनः ॥ ४ ॥
श्रीगौतमः सूरिजिनेश्वरश्च श्रुतं च जैनं श्रुतदेवता च ।
चतुष्कमेवं हृदयांगणे स्वेनुक्ता(?)मया सिद्धिकृते प्रपूर्य ।
आमूलचूलविलसत्सुवृत्तनरनायकम(स?)हसं
सम्यक्त्वालंकारं हृदलंकारं सतां कुर्वे ॥ ६ ॥

**62. त्रुटितपत्रसंग्रह.** about 200 leaves. 16 × 2.

**63. अनुयोगद्वारव्याख्या.** 6–137 leaves. 17 × 2½. **(मु.)**

**64. भाष्यत्रयवृत्ति (मु.), कल्पचूर्णिवृत्ति, आदि (त्रुटित).** 15 × 2.

**65. जम्बूद्वीपप्रज्ञप्तिवृत्ति (मु.) (त्रुटित).** 17 × 2.

**66. व्याकरणपत्र ( त्रुटित ).**

**67. शिष्यहिता ( विशेषावश्यकव्याख्या? )** by **हेमचन्द्र ( त्रुटित )** 14 × 2.

**68. त्रुटितपत्र** ( No 1695. ) **जीर्ण.**

**69. त्रुटितपत्र** ( No 1696.) 17 × 2.

**70. त्रुटितपत्र** ( No 1697.)

71. **कातन्त्रवृत्तिपंजिका** of **त्रिलोचनदास.**

72. **उत्तराध्ययनबृहद्वृत्ति** (त्रुटित) by **शान्तिसूरि.** 393 leaves. 20 × 2½. **(मु.)**

73. (1) **सूर्यप्रज्ञप्तिवृत्ति** 264 leaves. **अपूर्ण. ( मु. )**
    (2) **आवश्यकवृत्ति.**
    (3) **ओघवृत्ति ( त्रुटित ).** 30 leaves. 30 × 2½. **( मु. )**

74. **विशेषावश्यकवृत्ति** by **जिनभद्र.** 336 leaves. 31½ × 2½.
    Beg:—नतविबुधवधूनां

75. **व्यवहारवृत्ति ( त्रुटित ).** leaves 2–341. 32 × 2½.

76. **आवश्यक[लघु]वृत्ति (त्रुटित).** 301 leaves. 30 × 2½.

77. **अनेकार्थकौमुदी ( प्रथमखण्ड ).** 336 leaves. 18½ × 2.

78. **सुपार्श्वचरित्र(प्रा०)** by **लक्ष्मणगणि.** 343 leaves. 31 × 2. **( मु. )**

79. **बृहत्कल्पवृत्ति** ( **त्रुटित** ) upto **षष्ठ उद्देश.** 282 leaves. 38 × 2½.
    Col:—कल्पटीकायां षष्ठ उद्देशः समाप्तः ।

80. **पिण्डनिर्युक्तिवृत्ति ( शिष्यहिता ).** 234 leaves. **त्रुटित अपूर्ण.**
    Beg:—नम्रामरेश्वरकिरीटनिविष्ट upto 646 th गाथा. 33 × 2.

81. **विशेषावश्यक** 4300 gâthâs मू. ७४ 16½ × 2 very old. **( मु. )**

82. **आवश्यकबृहद्वृत्ति ( शिष्यहिता ) प्रथमखण्ड** by **हरिभद्र.** leaves 396. 32 × 2. **( मु. )**

Col:—स्वस्ति संवत् १४८५ वर्षे पोषवदि २ भोमे स्तंभतीर्थे पुस्तकं लेखिनीयी(?) । श्रीखरतरगच्छे श्रीजिनराजसूरिपट्टे श्रीजिनभद्रसूरिविजयराज्ये सा० डूंगरसुत वलिराज उदयराजसुश्रावकयो (काभ्यां ?) निजपुण्यार्थं पुस्तकं लेखापितं ।

83. **भट्टिकाव्यलघुटीका** [ by **अनिरुद्ध** ]. upto the 15th sarga 22nd stanza 179–415 leaves.

इति भट्टिकाव्ये लघुटीकायामनिरुद्धपंडितविरचितायां रावणवधाधिकारकांडे तृतीयः परिच्छेदः ।
Beg:—अथेदानीमात्मनेपदमधिकृत्याह अगाव(ह)त त[नो] व्योम [ स० ८ श्लो० १ ]

84. (1) **प्रमाणमीमांसा.** 1–111 leaves. 15 × 2. **( अ. मु. )**
    Beg:—अथ प्रमाणमीमांसा । सम्यगर्थनिर्णयः
    End:—समासपरीक्षानाम प्रकरणं
    (2) **परीक्षामुख [ विवरण ( प्रमेयकमलमार्तण्ड )** by **प्रभाचन्द्र** ]. 112–119 leaves. **(मु.)**
    End:—नंदताद्वारितैकांतरजा जैनमतार्णवः ।
    (3) **न्यायग्रन्थ.** 120–137 leaves.

85. **मुनिसुव्रतचरित्र** by **पद्मप्रभ.** 221 leaves. 31 × 2.

86. (1) **योगशास्त्रस्वोपज्ञविवरण.** 119–312 leaves. **त्रुटित** 32×2. **(अ. मु.)**
    (2) **आवश्यकवृत्ति ( त्रुटित ).**

87. **पंचाशकलघुवृत्ति** 265 leaves. 12 × 2½.

88. **त्रिषष्टि ( तृतीयपर्व ).** 2–140 leaves. 10 × 2. **( मु. )**

**89. साधुप्रतिमाप्रकरण** 5-100 leaves. **त्रुटित** 36-1017 gâthâs.

**90.** (1) **प्रश्नोत्तररत्नमालावृत्ति** [ by **हेमप्रभ** ]. paper ms.

Beg:—चंद्रादित्यमहौपधीमणितडिद्दीपादितेजस्विनो
यैं(यै)भावाः प्रकटप्रकाशपदवीं नेतुं न शक्याः क्वचित् ।
दृश्यंते खलु तेपि निर्म्मलतमज्ञानेन यस्यानिशं
तस्मै श्रीपरमात्मने निरुपमत्रैलोक्यनेत्रे नमः ॥
कामदा कामदा काम कामाक्षी कामरूपिणी ।
कामधेनूपमा कं मे देयाद्देवी सरस्वती ॥
हीरकवद्दुर्भेद्या प्रश्नोत्तरभू (?) ततोपि भिद्यते ।
अत्यंतविशदवर्णा गुणगणरम्या महार्थविषया च ।
योग्या क्षमाधराणामनेकवर्णप्रभावयुता ॥

End:—श्रीजैनशासनांभोधिसमुल्लाससुधाकराः ।
जज्ञिरे जगति ख्याताः श्रीचंद्रप्रभसूरयः ॥
धर्माधारतया सुदुश्चरतपश्चारित्रतेजस्तया
नानासूरिविनेयसेविततया तैस्तैर्गुणैर्विश्रुतः ।
श्रीचंद्रप्रभसूरिपट्टतिलक(को ?) निर्ग्रंथचूडामणि-
र्जज्ञे श्रीजयसिंहभूपतिनुतः श्रीधर्मघोषप्रभुः ॥
तदीयहस्तपद्मेन लब्धश्रीसूरिसंपदः ।
वभूवुर्जंगमं तीर्थं श्रीयशोघोषसूरयः ॥ ९ ॥
आवर्जिते गुणगणैर्येषां गभीरिमादिभिः ।
समं( रूप )लक्ष्मीसरस्वत्यौ समायातां स्वर्ग(?)तले ॥ १० ॥
तेषां सपुण्यलावण्यरूपपांडित्यसंपदां ।
स्वहस्तदीक्षितैः शिष्यैः श्रीहेमप्रभसूरिभिः ॥ ११ ॥
भुवनश्रुतिरविसंख्ये वर्षे हरिपालमंत्रिविज्ञप्तैः ।
एषा चक्रे वृत्तिः प्रश्नोत्तररत्नमालायाः ॥ १२ ॥
कनकगिरिकनकदंडं धत्तेम्वरमेघडंबरं छत्रं ।
जगती जगतो यावत्(द्) वृत्तिरियं वर्ततां तावत् ॥ १३ ॥
ग्रंथाग्र २१३८. After this follows a प्रशस्ति of
25 verses of which the last verse is
श्रीजिनेश्वरसूरीणां पादांभोजमधुव्रतैः ।
श्रीदेवमूर्त्युपाध्यायैर्निर्मितैषा प्रशस्तिका ॥

इति प्रश्नोत्तररत्नमालावृत्तिपु० साधु अभयचंद्रलेखितायाः प्रशस्तिः समाप्ता ।

(2) **न्यायवार्तिक** 2-155 leaves. 12 × 2¼. ( **मु.** )
On page 117 इत्युद्योतकार(करे ?) न्यायवार्तिके चतुर्थस्य प्रथममाह्निकं ।
and on page 146 उद्योतकरे न्यायवार्तिके पंचमस्याद्यमाह्निकं ।

•**91. आवश्यकनिर्युक्तिवृत्ति.** 3-240 leaves. **अपूर्ण** 31 × 2.

**92. दुर्गसिंहवृत्ति.** 181 leaves. **त्रुटित** 14½ × 1⅓. ( **मु.** )

**93.** (1) **भाष्यवार्तिकटीका** [ by **अनिरुद्ध** ]. 1-117 leaves. 13 × 2.

Beg:—स्यादेतत्प्रथमाध्याये प्रमाणादयः पदार्था उद्दिष्टा यथोद्देशं च सजातीयव्यावृत्ता लक्षणतोधिगतास्तत्किमपरमवशिष्यते येन ( यदर्थं ? ) द्वितीयाध्यायोयमारभ्यते ॥

End:—पण्डितश्रीअनिरुद्धविरचितायां भाष्यवार्त्तिकटीकाविवरणपंजिकायां पंचमोध्यायः।

(2) **सांख्यसप्ततिवृत्ति ( माठरवृत्ति? ).** 8–102 leaves. 13 × 2.

End:—कृतिराचार्यम···स्येति सांख्यसप्ततिवृत्तिः समाप्ता ।

**94. भगवती ( मु. )** etc **त्रुटित** 32 × 2.

**95.** (1) **द्रव्यालंकारवृत्ति ( द्वितीयप्रकाश )** [ by **रामचन्द्र** & **गुणचन्द्र** ]. 1–113 leaves. 13 × 2.

Beg:—एवं तावद्द्रव्यपंचकमव्या(ध्या ?)जीवद्रव्यं । स्वपरपरिज्ञानसंपदां सकलद्रव्याणां मूर्धाभिषिक्तत्वेन प्रथमं व्याख्यायाधुना तदत्यंतोपकारकं पुद्गलद्रव्यं व्याख्यातुं तल्लक्षणमुच्यते ।

End:—रूपं च सत्व(त्त्व)मथ वादिविटैर्विलुप्तमित्थं यया स्थितिमनीयत पुद्गलानां ।
तन्मा कदाचिदपि पुद्गलतामभी नौ मंदीदृशन्यदि भवंतितमां कृतज्ञाः ॥

इति श्रीरामचंद्रगुणचंद्रविरचितायां स्वोपज्ञद्रव्यालंकारटीकायां द्वितीयः पुद्गलप्रकाशः समाप्तः ।

(2) **द्रव्यालंकारवृत्ति (तृतीयप्रकाश)** [by **रामचन्द्र** & **गुणचन्द्र**]. 1–197 leaves. 13 × 2 ( 80–82, 115–118 & 128 leaves missing )

Beg:—प्रथमप्रकाशे तावदशेषद्रव्याणां प्रधानमात्मस्वरूपभेदैः प्रमाणप्रतिष्ठितः(तं) कृतस्त(तं त)दनु द्वितीयप्रकाशे तदत्यंतोपकारकाः पुद्गलाः । संप्रति पुनर्गतिस्थित्यवगाहदानेनोभयोपकारकाणां धर्मादीनामवसरस्ततस्तेपि स्वरूपतः प्रमाणप्रतिष्ठिताः क्रियंते । ······ अथाकंपानीति अथ ध्वनिरधिकारार्थो मंगलार्थो वा अस्मिन्प्रकाशेऽकंपानि त्रीणि द्रव्याण्यधिक्रियंते ।

End:—पूर्वैर्यस्य समुद्धृतिर्न विहिता धीरैः कुतोप्याशया-
दावाभ्यां स समुद्धृतः श्रुतनिधेर्द्रव्योक्त(त्क)रो दुर्लभः ।
एनं यूयमनंतकार्यनिपुणं गृह्णीत तत्कोविदाः
स्वातंत्र्यप्रसवां यदीच्छत चिरं सर्वार्थसिद्धिं हृदि ॥
मध्यं बौद्धामृतजलनिधेर्गाढवान् भ्रांतवांश्च
न्यायाटव्यां वचनशठताप्रोष्ट(त्थ ? ) सत्कंटकायां ।
आम्नातीवाविषमविफलप्रक्रियेयो विशेषे
शास्त्रारंभे यदि परमसौ दक्षतां लक्षयन्नौ ॥
नोत्प्रेक्षावहुमानतो न च परस्पर्द्धासमुल्लासतो
नापींदुद्युतिनिर्मलाय यशसे नो वा कृते संपदः ।
आवाभ्यामयमादृतः किमु बुधा द्रव्यप्रपंचश्रमः
संदर्भांतरनिर्मितावनवमप्रज्ञाप्रकर्षश्रिये ॥

इति श्रीरामचंद्रगुणचंद्रविरचितायां स्वोपज्ञद्रव्यालंकारटीकायां तृतीयोऽकंपप्रकाश इति संवत् १२०२ सहजिगेन लिखि.

**96. पदार्थधर्मसंग्रहव्याख्या.** 2–111 leaves. **अपूर्ण** 12 × 2 . first & 107 leaves are missing.

नमो जलदनीलाय शेषपर्यङ्कशायिने ।
लक्ष्मीकंठग्रहानंदनिष्पंदाय मुरद्विषे ॥

प्रासाददेवालयधर्म्मशालामठाद्यमेवं सुकृतास्पदं तु ।
सार्द्धं कुलेनोद्धृतमार्यलोकैर्यत्रावनिं शासति भूमिपाले ॥ १५
इतश्च । चांद्रे कुले यतींद्रः श्रीमज्जिनदत्तसूरिराराध्यः ।
तस्यान्वयशृंगारः समजनि जिनकुशलगुरुसूरिः ॥ १६
जिनपद्मसूरिजिनलब्धिसूरिजिनचंद्रसूरयो जाताः ।
समुदैयरुरिह गच्छे जिनोदया मोदयासुर्नः (?) ॥ १७
तदासनांभोरुहराजहंसः श्रीसाधुलोकस्य शिरोवतंसः ।
...धामनिरासहंसो बभूव सूरिर्जिनराजराजः ॥ १८
क्रूरग्रहैरनाक्रांतः सदा सर्वकलान्वितः ।
नवीन...नो यो नालीकस्य प्रकाशकः ॥ १९
तस्य श्रीजिनराजसूरिसुगुरोरादेशतः सर्वतो
राज्ये लक्ष्मणभूपतेर्विजयिनि प्राप्तप्रतिष्ठोदये ।
अर्हद्धर्म्मधुरंधरः खरतरः श्रीसंघभट्टारकः
प्रासादं जिनपुंगवस्य विशदं प्रारब्धवान् श्रीपदं ॥ २०
नवेषुवार्द्धींदुमितेथ वर्षे निदेशतः श्रीजिनराजसूरेः ।
अस्थापयन् गर्भगृहेत्र बिंबं मुनीश्वराः सागरचंद्रसाराः ॥ २१
ये चक्रुर्मुनिपा विहारममलं श्रीपूर्वदेशे पुरा
ये गच्छं च समुन्नतं खरतरं संप्रापयन् सर्वतः ।
मिथ्यावादबलोन्मदद्विपकुले यैः सिंहलीलायितं
येषां चंद्रकलाकलान् गुणगणान् स्तोतुं क्षमः कोथवा ॥ २२
तेषां श्रीजिनवर्द्धनाभिधगणाधीशां सभादेशतः
श्रीसंघो गुरुभक्तियुक्तिनलिनीलीलन्मरालोपमः ।
संपूर्णीकृतवानमुं खरतरप्रासादचूडामणिं
त्रिद्वीपांबुधियामिनीपतिमिते संवत्सरे विक्रमात् ॥ २३
अंकतोपि संवत् १४७३ ।
वर्ण्यं तन्नगरं जिनेशभवनं यत्रेदमालोक्यते
स श्लाघ्यः कृतिनां महीपतिरिदं राज्ये यदीयेजनि ।
येनेदं निरमायि सौवविभवैर्धन्यः स संघः क्षितौ
तेभ्यो धन्यतरास्तु ते सुकृतिनः पश्यंति येदः सदा ॥ २४
श्रीलक्ष्मणविहारोयमिति ख्यातो जिनालयः ।
श्रीनंदीवर्द्धमानश्च वास्तुविद्यानुसारतः ॥ २५
यावद् गगनशृंगारौ सूर्यचंद्रौ विराजतः ।
तावदापूज्यमानोयं प्रासादो नंदताच्चिरं ॥ २६
प्रशस्तिर्विहिता चेयं कीर्त्तिराजेन साधुना ।
धन्नाकेन समुत्कीर्णा सूत्रधारेण सा मुदा ॥ २७

शोधिता वा० जयसागरगणिना श्रीः ।

---

## ( २ )

## शान्तिजिनालयस्य प्रशस्तिः ।

॥ जगदभिमतफलवितरणविधिना निरवधिगुणेन यशसा च ।
यः पूरितविश्वाशः स कोपि भगवान् जिनो जयति ॥ १

मनोभीष्टार्थसिद्ध्यर्थं कृतनम्यनमस्कृतिः ।
प्रशस्तिमथ वक्ष्येहं प्रतिष्ठादिमहःकृतां ॥ २

ऊकेशवंशे विशदप्रशंसे रंकान्वये श्रेष्ठिकुलप्रदीपौ ।
श्रीजाषदेवः पुनरासदेवस्तज्जाषदेवोद्भवझांबटोभूत् ॥ ३

विश्वत्रयीविश्रुतनामधेयस्तदंगजो धांधलनामधेयः ।
ततोपि च द्वौ तनयावभूतां गजूस्तथान्यः किल भीमसिंहः ॥ ४
सुतौ गजूजौ गणदेवमोषदेवौ च तत्र प्रथमस्य जाताः ।
मेघस्तथा जेसलमोहणौ च वेडूरितीमे तनया नयाढ्याः ॥ ५
तन्मध्ये जेशलस्यासन् विशिष्टाः सूनवस्त्रयः ।
आंबः प्राच्योपरो जींदो मूलराजस्तृतीयकः ॥ ६

तत्र श्रीजिनोदयसूरिप्रवरादेशसलिलेशकेशवः संवत् १४२५ वर्षे श्रीदेवराजपुरकृतसविस्तर-तीर्थयात्रोत्सवस्तथा संवत् १४२७ वर्षे श्रीजिनोदयसूरिसंसूत्रितप्रतिष्ठोत्सवांभोदोदकपल्लवितकमनीय-कीर्तिवल्लीवलयः सं. १४३६ वर्षे श्रीजिनराजसूरिसदुपदेशमकरंदमापीय संजातसंघपतिपदवीको राजहंस इव सं. आंबाकः श्रीशत्रुंजयोज्जयंताचलादितीर्थमानसरो यात्रां चकृवान् । तथा

मोहणस्य पुनः पुत्राः कीहटः पासदत्तकः ।
देल्हो धन्नश्च चत्वारश्चतुर्वर्गा इवांगिनः ॥ १
शिवराजो महीराजो जातावाद्यसुतावुभौ ।
मूलराजभवश्चास्ति सहस्रराजनामकः ॥ २

तथा तत्र श्रीजिनराजसूरिसदाज्ञासरसीहंसेन संवत् १४४९ वर्षे श्रीशत्रुंजयगिरिनारतीर्थयात्रा निरमापि सं० कीहटेनेति ।

धामा कान्हा जगन्मल्ला इत्येते कीहटांगजाः ।
वीरदत्तश्च विमलदत्तकर्मणहेमकाः ॥ १
ठाकुरसिंह इत्येते पासदत्तसुता मताः ॥ २
देल्हजौ साधुजीवंदकुंपौ धन्नांगजाः पुनः ।
जगपालस्तथा नाथूरमरश्चेति विश्रुताः ॥ ३
तथा ॥ भीमसिंहस्य पुत्रोभूल्लाषणस्तस्य मम्मणः ।
जयसिंहो नरसिंहो माम्मणी श्रेष्ठिनावुभौ ॥ ४
तत्र स्तो जयसिंहस्य रूपाधिल्हाभिधौ सुतौ ।
नारसिंही पुनर्भोजो हरिराजश्च राजतः ॥ ५
इत्थं पुरुषरत्नौघाकुलं श्रेष्ठिकुलं कलौ ।
जयत्यधर्मविच्छेदि निःकलंकमदः कलं ॥ ६

इतश्च । श्रीवीरतीर्थे श्रीसुधर्मस्वामिवंशे युगप्रधानश्रीजिनदत्तसूर्यन्वये । श्रीजिनकुशलसूरिश्रीजिनपद्मसूरिश्रीजिनलब्धिसूरिश्रीजिनचंद्रसूरिश्रीजिनोदयसूरयो जाताः । तत्पट्टे श्रीजिनराजसूरय उदैषुः । अथ तत्पट्टे श्रीखरतरगणशृंगारसाराः कृतश्रीपूर्वदेशविहाराः श्रीजिनवर्द्धनसूरयो जयंति । अथ श्रीजेशलमेरौ श्रीलक्ष्मणराजराज्ये विजयिनि सं० १४७३ वर्षे चैत्रसुदि १५ दिने तैः श्रीजिनवर्धनसूरिभिः प्रागुक्तान्वयास्ते श्रेष्ठिधनाजयासिंहनरसिंहधामाः समुदायकारितप्रासादप्रतिष्ठया सह जिनबिंबप्रतिष्ठां कारितवंत इति । वा० जयसागरगणिविरचिता प्रशस्तिरियमुत्कीर्णा सूत्रधारहापाकेनेति नंदतात् ॥

## ( ३ )

## सम्भवजिनालयस्य प्रशस्तिः ।

॥ अर्हं ॥ स्वस्ति श्रीस्तंभनपार्श्वनाथपादकल्पद्रुमेभ्यः ॥

प्रत्यक्षः कल्पवृक्षस्त्रिजगदधिपतिः पार्श्वनाथो जिनेंद्रः
श्रीसंघस्येप्सितानि प्रथयतु स सदा शक्रचक्राभिवंद्यः ।
प्रोत्सर्पंति प्रकामातिशयकिशलया मंगलश्रीफलाढ्याः
स्फूर्जद्धर्म्मार्थवल्ल्यो यदनुपमतमध्यानशीर्षं श्रयंत्यः ॥ १

श्रीशांतितीर्थंकरवासरेश्वरः सुप्रातमाविष्कुरुतां स्फुरद्द्युतिः ।
यस्य प्रतापादशिवक्षपाक्षये पुण्यप्रकाशः प्रससार सर्वतः ॥ २

कल्याणकल्पद्रुममेरुभूमिः संपल्लतोल्लासनवारिवाहः ।
प्रभावरत्नावलिरोहणाद्रिः श्रीसंभवेशः शिवतातिरस्तु ॥ ३

प्रासादत्रितये नत्वा मूलनाथत्रयं मुदा ।
रत्नत्रयमिवाध्यक्षं प्रशस्तिं रचयाम्यहं ॥ ४

यत्प्राकारवरं विलोक्य बलिनो म्लेच्छावनीपा अपि
प्रोद्यत्सैन्यसहस्रदुर्ग्रहमिदं गेहं हि गोस्वामिनः ।
भग्नोपायबला वदंत इति ते मुंचंति मानं निजं
तच्च श्रीजेसलमेरुनाम नगरं जीयाज्जनत्रायकं ॥ ५

वंशो यद्यदुनायकैर्नरवरैः श्रीनेमिकृष्णादिभि-
र्जन्मेव प्रवरावदातनिकरैरत्यद्भुतैराप्यतः ।
तेनासौ लभते गुणं त्रिभुवनं सन्नादतो रंजयेत्
को वा ह्युत्तममानितो न भवति श्लाघापदं सर्वतः ॥ ६

श्रीनेमिनारायणरौहिणेया दुःखत्रयात् त्रातुमिव त्रिलोकं ।
यत्रोदिताः श्रीपुरुषोत्तमास्ते स वर्ण्णनीयो यदुराजवंशः ॥ ७

तस्मिन् श्रीयादववंशे । राउलश्रीजइतसिंहमूलराजरत्नसिंहराउलश्रीदूदाराउलश्रीघटसिंहमूलराजपुत्रदेवराजनामानो राजानोभूवन् ।

ततोभूत्केसरी राजा केसरीव पराक्रमी ।
वैरिवारणसंहारं यश्चकारासिदंष्ट्रया ॥ १

श्रीमत्केसरिराजसूनुरभवच्च श्रीलक्ष्मणो भूपति-
र्विद्वल्लक्ष्मणलक्षतोक्षणशरच्च श्रीलक्ष्मणस्तेजसा ।

दानाशाय करग्रहाच्च सकलं लोकं व्यधाल्लक्ष्मणं
योर्बिबे मृगलक्ष्मणोपि यशसा सौवाभिधानं व्यधात् ॥ २
तदीयसिंहासनपूर्वशैलप्राप्तोदयो ह्युग्रतरप्रतापः ।
श्रीवैरसिंहक्षितिपालभानुर्विभासते वैरितमो निरस्यन् ॥ ३

इतश्च ॥ चंद्रकुले श्रीखरतरविधिपक्षे ॥

श्रीवर्धमानाभिधसूरिराजो जातः क्रमादर्बुदपर्वताग्रे ।
मंत्रीश्वरश्रीविमलाभिधानः प्राचीकरद्यद्वचनेन चैत्यं ॥ १
अणहिल्लपाटकपुरे यैर्दुर्लभराजपर्षदि विवादे ।
प्राप्तं खरतरबिरुदं जिनेश्वरास्सूरयो जज्ञुः ॥ २

ततः क्रमेण श्रीजिनचंद्रसूरिनवांगीवृत्तिकारश्रीस्तंभनपार्श्वनाथप्रकटीकारश्रीअभयदेवसूरिश्रीपिंड-विशुद्ध्यादिप्रकरणकारश्रीजिनवल्लभसूरिश्रीअंबिकादेवताप्रकाशितयुगप्रधानपदश्रीजिनदत्तसूरिश्रीजिनचंद्र-सूरिश्रीजिनपतिसूरिश्रीजिनेश्वरसूरिश्रीजिनप्रबोधसूरिश्रीजिनचंद्रसूरिश्रीजिनकुशलसूरिश्रीजिनपद्मसूरिश्री-जिनलब्धिसूरिश्रीजिनचंद्रसूरयः श्रीजिनशासनं प्रभासितवंतः ॥ ततः ।

श्रीगच्छलक्ष्मीधरणे जिनोदयाः प्रकाशितप्राज्ञसभाजिनोदयाः ।
कल्याणवार्द्धीदशवाजिनोदयाः पाथोजहंसा अभवन् जिनोदयाः ॥ १
जिनराजसूरिराजः कलहंसा इव बभुर्जिनमताब्जे ।
सन्मानसहितगतयः सदामरालीश्रिता विमलाः ॥ २

तत्पट्टे ॥ ये सिद्धांतविचारसारचतुरा यानाश्रयन् पंडिताः
सत्यं शीलगुणेन यैरनुकृतः श्रीस्थूलभद्रो मुनिः ।
येभ्यः शं वितनोति शासनसुरी श्रीसंघदीप्तिर्यतो
येषां सार्वजनीनमाप्तवचनं येष्वद्भुतं सौभगं ॥ १
श्रीउज्जयंताचलचित्रकूटमांडव्यपूर्जाउरमुख्यकेषु ।
स्थानेषु येषामुपदेशवाक्यान्निर्मापिताः श्राद्धवरैर्विहाराः ॥ २
अणहिल्लपाटकपुरप्रमुखस्थानेषु यैरकार्यंत ।
श्रीज्ञानरत्नकोशा विधिपक्षश्राद्धसंघेन ॥ ३
मंडपदुर्गप्रल्हादनपुरतलपाटकादिनगरेषु ।
यैर्जिनवरबिंबानां विधिप्रतिष्ठाः क्रियंते स्म ॥ ४
यैर्निजबुध्यानेकांतजयपताकादिका महाग्रंथाः ।
पाठ्यंते च विशेषावश्यकमुख्या अपि मुनीनां ॥ ५
कर्मप्रकृतिप्रमुखग्रंथार्थविचारसारकथनेन ।
परपक्षमुनीनामपि यैश्चित्तचमत्कृतिः क्रियते ॥ ६
छत्रधरवैरिसिंहत्र्यंबकदासक्षितींद्रमहिपालैः ।
येषां चरणद्वंद्वं प्रणम्यते भक्तिपूरेण ॥ ७
शमदमसंयमनिधयः सिद्धांतसमुद्रपारदृश्वानः ।
श्रीजिनभद्रयतींद्रा विजयंते ते गणाधीशाः ॥ ८

इति श्रीगुरुवर्ण्णनाष्टकं ॥

इतश्च ॥

श्रीमानूकेशवंशोयं वर्धतां सरलाशयः ।
नरमुक्ताफलं यत्र जायते जनमंडनं ॥ १

तस्मिन् श्रीऊकेशवंशे चोपडागोत्रे । सा० हेमराजः तदंगजः सा० पूनाकस्तदात्मजः सा० दीताख्यस्तत्पुत्राः सा० सोहड कर्मण गणदेव महिपा सा० पांचा सा० ठाकुरसिंहनामानः षट् । तत्र सा० पांचाभार्या रूपादे तत्पुत्रा इमे यथा ॥

शिवराजमहीराजलोलालाषणनामकाः ।
चत्वारः श्रीचतुर्वर्गसाधकाः संति पांचयः ॥ १

एतेषां भगिनी श्राविका गेली । तत्र सा०शिवाभार्या सूहवदे तयोः पुत्रः थिराख्यः पुत्री हीराई । महिराभार्या महघलदे तयोरंगजाः सादा सहसा साजणाख्याः सुते नारंगदेवल्हीनाम्न्यौ । लोलाभार्या लीलादे पुत्रौ सहजपालमेलाकौ पुत्री लाषाई । लाषणभार्या लषमादे तदात्मजाः शिखरा समरा मालाख्याः ॥

इत्यादिपरिवारेण संयुताः श्रावका इमे ।
कुर्वंति धर्मकार्याणि शासनोन्नतिहेतवे ॥ १
विक्रमवर्षचतुर्दशसप्ताशीतौ विनिर्ममे यात्रा ।
शत्रुंजयरैवतगिरितीर्थे संघान्वितैरेभिः ॥ २
पंचम्युद्यापनं चक्रे वत्सरे नवतौ पुनः ।
चतुर्भिर्बांधवैरेभिश्चतुर्धा धर्मकारकैः ॥ ३

अथ संवत् १४९४ वर्षे श्रीवैरिसिंहराउलराज्ये श्रीजिनभद्रसूरीणामुपदेशेन नवीनः प्रासादः कारितः । ततः संवत् १४९७ वर्षे कुंकुमपत्रिकाभिः सर्वदेशवास्तव्यपरःसहस्रश्रावकानामंत्र्य प्रतिष्ठामहोत्सवः सा० शिवाद्यैः कारितः । तत्र च महर्द्धि श्रीजिनभद्रसूरिभिः श्रीसंभवनाथप्रमुखबिंबानि ३०० प्रतिष्ठितानि प्रासादश्च ध्वजशेखरः प्रतिष्ठितः । तत्र श्रीसंभवनाथो मूलनायकत्वेन स्थापितः । तत्र चावसरे सा० शिवामहिरालोलालाषणश्राद्धैः दिन ७ साधर्मिकवात्सल्यं कृतं राउलश्रीवैरसिंहेन साकं श्रीसंघो विविधवस्त्रैः परिधापितः । राउलश्रीवैरसिंहेनापि चत्वारस्ते बांधवाः स्वबांधववद्वस्त्रालंकारादिदानेन सम्मानिता इति ॥

॥ अथ जिनपतिपार्श्वौ राजतां यत्प्रसादात्
सकलसुकृतकार्यं सिध्यति ध्यायकानां ।
जिनकुशलमुनींद्रास्ते जयंतु त्रिलोक्यां
खरतरविधिपक्षे तन्वते ये सुखानि ॥ १
सरस्यामिव रोदस्यां पुष्पदंतौ विराजतः ।
हंसवन्नंदतात्तावत् प्रासादः संभवेशितुः ॥ २
प्रासादकारकाणां प्रासादविधिप्रतिष्ठितिकराणां ।
सूरीणां श्राद्धानां दिने दिने वर्द्धतां संपत् ॥ ३
सेवायै त्रिजगज्जनान् जिनपतेर्यच्छृंगमूले स्थिता
दंडव्याजभृतस्त्रयः सुपुरुषा आमंत्रयंति ध्रुवं ।

प्रेंखोलद्ध्वजपाणिभी रणरणद्घंटानिनादेन तत्
प्रासादत्रितयं त्रिलोकतिलकं वंदे मुदाहं त्रिधा ॥ ४
प्रासादत्रितयं नंद्यात् त्रिलोकीतलमंडनं ।
त्रिविधेन त्रिधा शुद्ध्या वंदितं त्रिजगज्जनैः ॥ ५
सौभाग्यभाग्यनिधयो मम विद्यादायकाः कविगजेंद्राः ।
श्रीजयसागरगुरवो विजयंते वाचकगरिष्ठाः ॥ ६
तच्छिष्यो वाचनाचार्यो वर्त्तते सोमकुंजरः ।
प्रशस्तिर्विहिता तेन वाचनीया विचक्षणैः ॥ ७ ॥ श्रीः ॥ श्रीः ॥ श्रीः ॥

लिखिता च पं० भानुप्रभगणिना ॥ सर्वसंख्यायां कवित्वानि ३३ ॥ शुभं भवतु संघस्य ॥ ८ ॥

जिनसेनगणिश्चात्र चैत्यैकार्षीद् बहूद्यमं ।
सूत्रभृच्छिवदेवेन प्रशस्तिरुदकारि च ॥ १

After this is added in a different hand

प्रासादे क्रियमाणेथ बहुविघ्नोपशांतये ।
विज्ञानं रचयामास जिनसेनो महामुनिः ॥ २ ॥ शुभं ।

## (४)

## लक्ष्मीकान्तप्रासादस्य प्रशस्तिः ।

स्वस्ति श्रीगणेशाय नमः । स्वस्तिश्रीजयोऽभ्युदयश्च ॥
ददातु वः स देवेशः शंखभूषणभूषितः ।
निपतंती दिवो येन केन मंदाकिनी धृता ॥ १ ॥
सलिलनिधिसुधाया हृत्सरस्यां वगाढो
लवणिमजलभाजि स्वेष्टकांताविनोदः ।
विकचकुचसरोजे मंजु गुंजन् षडंघ्रिः
सजलजलदनीलः पातु वः शार्ङ्गपाणिः ॥ २ ॥
श्रीमज्जेसलमेरुनाम नगरं पृथ्व्याः परं मंडनं
भोग्यं यादवभूभुजामिव नवं चारु स्वभर्तुर्वयः ।
शूरैर्यादववंशजैरुपचितं स्वाकारशुद्धैर्नृपै-
र्नानावित्तवणिग्विशां विजयतेऽजेयं परैस्तच्चिरं ॥ ३ ॥
सम्राट् श्रीजैत्रसिंहो यदुकुलजलधिप्रोल्लसत्पार्वणेंदु-
स्तत्सूनुर्मूलराजो जगति सुविदितो देवराजो नृराजः ।
तद्वंशे यादवेंद्रः समभवदसकौ केहरिस्तत्तनूजः
श्रीमद्रामाभिरामः समजनि तनयो लक्ष्मणो लक्ष्मणेशः ॥ ४ ॥
लक्ष्मणस्य तनयो विराजते वैरिसिंह इति विश्रुतः सदा ।
तेन देवभवनं प्रतिष्ठितं राज्यवृद्ध्याखिलपापशुद्धये ॥ ५ ॥
वेदांकाब्धींदुवर्षे शिशिरऋतुवरे माघशुक्ले च पक्षे
षष्ठ्यां वै शुक्रवारेश्विनिभ उदग्यान इंदौ तु मेषे ।

भूपः श्रीवैरिसिंहः सुरवरभवनेकारयत्सुप्रतिष्ठा-
मृत्विग्भिर्वेदविद्भिर्नृपतिभिरनिशं वंदितांघ्रयब्जयुग्मः ॥ ६ ॥

संवत् श्रीविक्रमार्कसमयातीतसंवत् १४९४ वर्षे भाटिके संवत् ८१२ प्रवर्तमाने महामांगल्य-माघशुदि ६ शुक्रवारे अश्विनीनक्षत्रे शुक्लाख्ययोगे तीतलाख्यकरणे मेषस्थे चंद्रे महाराजाधिराज-श्रीयादववंशीयराउलश्रीजेतसिंहराउलश्रीमूलराजराजराउलश्रीदेवराजराउलश्रीकेहरिराउलश्रीलक्ष्मणत-त्पद(ट्ट)पूर्वाचलप्रचंडमार्तंडायमानमहाराजाधिराजश्रीवैरिसिंहेन सर्वकामसमृद्ध्यर्थं श्रीलक्ष्मीकांतप्रीत्यर्थं पंचायतप्रासादः प्रतिष्ठितः ।

प्रासादसत्कूपसरःप्रतिष्ठा विधापिता येन यदूत्तमेन ।
प्रजाः सुखेन प्रतिपाल्यते यः षड्दर्शनाधारपरः स जीयात् ॥ १ ॥
पौर्वैरमीभिः खलु भूमिपालैः व्य(र्थ्य)स्मारि यद्यद्भुवि ।
मत्वैव तत्कार्यसमर्थमेनं श्रीवैरिसिंहं व्यदधाद्विधाता ॥ २ ॥

शुभं भवतु । श्री············पंचालीसाल्हासुतशिवदासभाटीदेपासुतभोजा······

## ( ५ )

## अष्टापदप्रासादस्य प्रशस्तिः ।

॥ स्वस्ति ॥ श्रीपार्श्वनाथस्य जिनेश्वरस्य प्रसादतः संतु समीहितानि ।
श्रीशांतिनाथस्य पदप्रसादाद्विघ्नानि नश्यंतु भवेच्च शांतिः ॥ १ ॥

संवत् १५८३ वर्षे मागसिरसुदि ११ दिने श्रीजेसलमेरुमहादुर्गे राउलश्रीचाचिगदेवपट्टे राउल-श्रीदेवकर्णपट्टे महाराजाधिराजराउलश्रीजयतसिंहविजयिराज्ये कुमरश्रीलूणकर्णयुवराज्ये श्रीऊके-शवंशे श्रीसंखवालगोत्रे सं० आंबापुत्र सं. कोचर हूया । जिणइ कोरंटइ नगरि अनइ संखवाली-गामइ उत्तंगतोरण जैनप्रासाद कराव्या । आबू जीराउलइ श्रीसंघिसुं यात्रा कीधी । जिणइ आपणइ उदारगुणइ आपणा घरनउ सर्व धन लोकनं देई कोरंटइ कर्णनामिना लीधी । सं. कोचरपुत्र सं. मूला तत्पुत्र सं. रउला सं. हीरा। सं. रउलाभार्या सं. माणिकदे पुत्र सं. आपमल्ल सं. देपमल्ल । सं. आपमल्लभार्या कमलादे पुत्र सं. पेथा सं. भीमा सं. जेठा । सं. पेथाभार्या पूनादे पुत्र सं. आसराज सं. मूंधराज पुत्रिका स्याणी । सं. आसराजइ श्रीशत्रुंजयमहातीर्थि श्रीसंघसहित यात्रा करी आपणा वित्त सफल कीधा । सं. आसराजभार्या चो. सं. पांचापुत्री गेली जिणइ श्रीशत्रुंजय गिरनार आबूतीर्थे यात्रा कीधी । श्रीशत्रुंजयादितीर्थावतारपाटा करावी । सतोरण सपरिकर श्रीनेमिनाथनां बिंब भरावी श्रीसंभवनाथनइ देहरइ मंडाव्या । समस्तकल्याणकादिक तपनी पाटी सैलमय करावी । सं. आसराजपुत्र सं. षेता सं. पाता । सं. षेतइ सं० १५११ श्रीशत्रुंजयगिर-नारतीर्थइ श्रीसंघसहित यात्रा कीधी । इम वरसइ २ तीर्थयात्रा करता सं० १५२४ तेरमी यात्रा करी श्रीशत्रुंजय ऊपरि छ अरी पालता श्रीआदिनाथप्रमुखतीर्थंकरनी पूजा करता छट्ठतप करी बि लाष नवकार गुणी चतुर्विधसंघनी भक्ति करी आंपणा वित्त सफल कीधा ॥ वली चोपडा सं. पांचापुत्र सं. सिवराज सं. महिराज सं. लोला संघवीलाषण पुत्रिका सं. गेली । सं. लाषणपुत्र सं. सिषरा सं. समरा सं. माला सं. महणा सं. सहणा सं. कुंरां प्रमुखपरिवारसहित चो. सं. लाषण संखवाल सं. आसराजपुत्र सं. षेता ए बिहु मिली श्रीजेसलमेरुनगरि गढ ऊपरि त्रिभूमिक श्रीअष्टापदमहातीर्थप्रासाद कराव्या । सं. १५३६ वर्षे फागुणसुदि ३ दिने राउल-श्रीदेवकर्णराज्ये समस्तदेसना संघ मेलवी श्रीजिनचंद्रसूरिश्रीजिनसमुद्रसूरिकन्हलि प्रतिष्ठा करावी श्रीकुंथुनाथ श्रीशांतिनाथ मूलनायक थपाव्या । चउवीस तीर्थंकरनी अनेक प्रतिमा भरावी ।

सं. षेतइ समस्त मारूयाडिमाहि रूपानाणासहित समकितलाडू लाह्या । सोनाने आषरे श्रीकल्पसिद्धांतनां पोथां लिखाव्यां । श्रीजिनसमुद्रसूरिकन्हां श्रीशांतिसागरसूरि आचार्यनी पद-स्थापना करावी । श्रीअष्टापदतीर्थइ बिहु भूमिकाए जगति करावी बिंब मंडाव्या । सं. षेताभार्या सं. सरसति पुत्र सं. वीदा सं. नोडा पुत्रिका धानू वीजू । सं. नोडाभार्या सं. नायकदे सं. पूनी । सं. वीदाभार्या सं. अमरादे सं. विमलादे सं. विमलादेपुत्र सं. सहसमल्ल सं. करणा सं. धरणा । पुत्रिका हरषू सलषू द्रस्तू । सं. सं. सहसमल्लभार्या सं. कुंरीपुत्र भोला सं. सवीरीपुत्र डाहा- सं. करणा सं. कनकादेपुत्र षीदा । पुत्रिका लाला सं. धरणाभार्या धरणिगदे पुत्रिका वाल्ही । इत्यादि परिवारसहित सं. वीदइ श्रीशत्रुंजय गिरनार आबूतीर्थे यात्रा कीधी । समकितमोदक घृत षांड साकरनी लाहिणि कीधी । श्रीजिनहंससूरिगच्छनायकनी वर्षग्रंथिमहोछव करी अल्ली घर २ प्रतइ लाही । पांचमिनां ऊजमणा कीधा । पांच सोनइया प्रमुख अनेक वस्तु ऊजमणइ मांडी । श्रीकल्पसिद्धांतपुस्तक घणीवार वचाव्यां । पांचवार लाप नवकार गुणी चारसो जोडी अल्लीनी लाहिणि कीधी । सं. सहसमल्ल श्रीशत्रुंजयतीर्थइ यात्रा करी जूनइगढि राणपुर वीरमगाम पाटण पारकरि षांड अल्ली लाहणि करी घरे आव्या पछइ सं. वीदइ घर २ प्रतइ दस २ सेर घृत लाह्या । अष्टापदप्रासादइ बिहु भूमिकाए जगतिना बारणानी चउकी करावी । पउडसाण जाली १४ सुहणा देहरा ऊपरि कांगुरा अष्टापदइ कराव्या । काउसग्गीया श्रीपार्श्वनाथनां बि कराव्या । बिहुं हाथिए सं. षेता सं. सरसतिनी मूर्त्ति करावी । सं. १५८१ वर्षे मागसिरवदि १० रविवारे महाराजाधिराज राउलश्रीजयतसिंह तथा कुमरश्रीलूणकर्ण्णवचनात् श्रीपार्श्वनाथ अष्टापदविचालइ सं. वीदइ सेरी छावी । कुतना वड बंधाव्या । बारणा पउडसाण कराव्या । वेईबंध छज्जा-वलि करावी । कोहर एक कराव्या । गाइसहस १ जोडी घृत अन्न गुल रुन घणी वार षट्दरसण ब्राह्मणादिकनां दीधा । श्रीजेसलमेरुगढनी दक्षिणदिसइ घाघरा बंधाव्या । देहरानी सेरीनइ घाघरा बे कु. श्रीजयतसिंहराउलनइ आदेसइ सं. वीदइ कराव्या । गउप करावी दस अवतार सहित लषमीनारायणनी मूर्त्ति गउषइ मंडावी ॥

जिनो दशावतारोप्यवताररहितस्य तु ।
श्रीषोडशजिनेंद्रस्य समियाय परीक्षये ॥ १
शुद्धसम्यक्त्वधारित्वाद्भावितीर्थंकरत्वतः ।
सलक्ष्मीकः समायातो जिनो दातुमिव श्रियं ॥ २

मंडपादिकनीकमठा सं. सहसमल्ल सं. करणा सं. धरणा कराविस्यइ ॥ इत्येषा प्रशस्तिः श्रीबृहत्खरतरगच्छे श्रीजिनहंससूरिपट्टालंकारश्रीजिनमाणिक्यसूरिविजयिराज्ये श्रीदेवतिलकोपाध्यायेन लिखिता चिरं नंदतु ॥

सूत्रधारमनसुखपुत्रसूत्रधारषेताकेन मुदकारि प्रशस्तिरेषा कोरीतं ॥ ॐ ॥ श्रीर्भवतु ॥

## ( ६ )

## शतदलकमलान्तःस्थो लेखः ।

श्रीनिवासं सुरश्रेणिसेव्यक्रमं
वामकामाग्निसंतापनीरोपमं ।
माधवेशादिदेवाधिकोपक्रमं
तत्त्वसंज्ञानविज्ञानभव्याश्रमं ॥ १ ॥

नव्यनीरागताकेलिकर्म्मक्षमं
यं(य)स्य भव्यैर्भजे नाम संपद्रमं ।
नीरसं पापहं स्मर्यते सत्तमं
तिग्ममोहार्त्तिविध्वंसतापाभ्रमं ॥ २ ॥
लब्धप्रमोदजनकादरसा(?)स्वधाभं
तापाधिकप्रमदसागरमस्तकामं ।
घंटारवप्रकटिताद्भुतकीर्त्तिरामं
नक्षत्रराजिरजनाय लता(नीशप्रभा)भिरामं ॥ ३ ॥
घंटापथप्रथितकीर्त्तिरमोपयामं
नागाधिपः परमभक्तिवशात् सदामं ।
गंभीरधीरसमतामयमातंगमं
मं(म)र्त्यानतं नमत तं जिनपं निकामं ॥ ४ ॥
संसारकांतारमपास्य नाम
कल्याणमालास्पदमस्तशामं ।
लाभाय वभ्राम तवाविरामं
लोभाभिभूतः श्रितरागधूमः ॥ ५ ॥
कर्म्मणां राशिरस्तोकलोकोद्गमः
संसृतेः कारणं मे जिनेशावमं ।
पूर्णपुण्याढ्य दुःखं विधत्तेऽतिमं
पर्णे(न) क्षमस्त्वां विना कोऽपि तं दुर्गमं ॥ ६ ॥
कार्म्मणं निर्वृतेर्हेतुमन्योऽसमः
यं(य)क्षराट्पूज्य तेनोच्यते निर्ममं ।
श्रीपते तं जहि द्राग् विधायोद्यमं
दानशौंडाय मे देहि शं...प्रगं ॥ ७ ॥
यस्य कृपाजलधेर्विश्रामं
कंठगताशुसुभटसंग्रामं ।
भयजनकव्याया······मं
जेतारं जगतः श्रितधामं ॥ ८ ॥
कक्षीकृतवसुभृत······पुग्रामं
लापोच्चारमहा············ ।
केशोच्चयमिह नयने क्षमं
लिंगति कमला कुरु मे क्षेमं ॥ ९ ॥
कलयति जगतः······प्रेमं
लंभयति सौख्यपटलमुद्दामं ।
कालं हंति च गतपरिणामं
महे तं महियसो·········मं ॥ १० ॥
रसनयेप्सितदानसुरद्रुमं
हितमहा······द्विजलोत्तमं ।

तं सदापुण्यरमोदयसंगमं
समरसामृतसुंदरसंयमं ॥ ११ ॥
हिनस्ति सद्ध्यानावस्थितस्य मध्यमं
तं तीर्थनाथं समरप्लवंगमं ।
सुरासुराधीशम.............. यमं
रैःनाथसंपूजितपदयुगसुमं ॥ १२ ॥
संसारमालाकुलचित्तमादिमं
साक्षार्थसंवेदनशून्यमश्रमं ।
रम्याप्ततावस्थितपूर्णचिद्घनं
सर्पांकितः शोषितपापकर्दमः ॥ १३ ॥
रत्नत्रयालंकृतनित्यहेम
सीमाद्रिसागोपमसत्त्वसोम ।
शोभामयो ज्ञानमयं विमामं
षड्वर्ग मां देव विधेह्यकामं ॥ १४ ॥
भावविभासकनष्टविलोमं
स्कंदितस्कंदलतं प्रणमाम ।
रंगपतंगनिवारण सुभीमं
कंबुदानं (गलं) जिनप...हृत ते भौमं ॥ १५ ॥
मंत्रेश्वरः पार्श्वपतिपरिश्रमं
लालाश्रितस्यापनया मनोरमं ।
कर्मोत्थितं मे जिन साधु नेगमं
रंभाविलासालसनेत्रनिर्गमं ॥ १६ ॥
समितिमारशरीरमविश्रमं
हरिनतोत्तमभूरिगमागमं ।
श्रयत तं जितमानभुजंगमं
फलसमृद्धिविपीनपराक्रमं ॥ १७ ॥
णमंगेशः सृजति शं जिनसार्व्वभौमः
तारस्वरेण विबुधैः श्रित......होम ।
शोकारिमारिविरहय...वातस(दा?)मं
भव्यैः स्तुतं निहतदुर्मतदंडपव(?)मं ॥ १८ ॥
मायांबुजध्वंसविधौ महद्धिमं
न वाजयत्याशु मनस्तुरंगमं ।
मंत्रोपमं ते जिन राम(ग)पंचमं
स्तवेन युक्तं गुणरत्नकुट्टिमं ॥ १९ ॥
कलिशैलोरु व्यधाम(?)
माहात्म्यं हृदयंगमं ।
लब्धश्रितवसुत्राम
यंतिवर्गस्तुतं नुमः ॥ २० ॥
लोकोत्पत्तिविनाशसंस्थितिविदां मुख्यं जिनं वै स्तुमः
द्रव्यारक्तसमाधरं नमत भो पूजां वरां पार्श्विमं ।

परपक्षस्य तव स्तवं त्वन्निमित्त करींद्रमे(?)
तत्तद्भावमयं वस...तस्मै...काम्यस्तवेदे ॥ २१ ॥
नयनाननसद्मोमं
संततिं तव जंगम ।
स्थावराशु(सु)मतां स्याम(?)
नयते शमकृत्रिमं ॥ २२ ॥
दासानुदासस्य मम
नवानंदविहंगमं ।
मायति प्राप्य सुमं
नंपा(नया)क्षत्तां महाद्रुमं ॥ २३ ॥
क्षमाबोहित्थनिर्यामं
मानवार्च्यं महाक्षमं ।
गुणिपूज्यं प्रीणयाम
रुं(रु)चिं स्तौमि नमं नमं ॥ २४ ॥
स्मरंति यं सुंदरयक्षकर्द्दमं
रागात् समादाय महंति कौंकुमं ।
मिथो मिलित्वा मवु(?)जाड्यकुंकुमं
चंद्राननं तं प्रविलोकतादूमं ॥ २५ ॥

## शतदलकमलबहिःस्थो लेखः ।

इत्थं पार्श्वजिनेश्वरो भुवनदिक्कुंभ्यंगचंद्रात्मके
वर्षे वाचकरत्नसारकृपया राकादिने कार्त्तिके ।
मासे लोद्रपुरस्थितः शतदलोपेतेन पद्मेन सन्
नूतोयं सहजादिकीर्त्तिगणिना कल्याणमालाप्रदः ॥ २५ ॥

ऐं नमः ॥ श्रीसाहिर्गुणयोगतो युगवरेत्यद्दं(?ह्वं) पदं दत्तवान्
येभ्यः श्रीजिनचंद्रसूरय इलाविख्यातसत्कीर्त्तयः ।
तत्पट्टे मिततेजसो युगवराः श्रीजैनसिंहाभिधा-
स्तत्पट्टांबुजभास्करा गणधराः श्रीजैनराजाः श्रुताः ॥ १
तैर्भाग्योदयसुंदरैरिषुसरस्वत्षोडशाब्दे १६७५ सित-
द्वादश्यां सहसः प्रतिष्ठितमिदं चैत्यं स्वहस्तश्रिया ।
यस्य प्रौढतरप्रतापतरणेः श्रीपार्श्वनाथेशितुः
सोयं पुण्यभरां तनोतु विपुलां लक्ष्मीं जिनः सर्वदा ॥ २
पूर्वं श्रीसगरो नृपोभवदलंकारोन्वये यादवे
पुत्रौ श्रीधरराजपूर्वकधरौ तस्याथ ताभ्यां क्षितौ ।
श्रीमल्लोद्रपुरे जिनेशभवनं सत्कारितं षीमसी
तत्पुत्रस्तदनुक्रमेण सुकृती जातः सुतः पूनसी ॥ ३
तत्पुत्रो वरधर्म्मकर्म्मणि रतः ख्यातोऽखिलैस्सद्गुणैः
श्रीमल्लस्तनयोथ तस्य सुकृती श्रीथाहरूनामकः ।
श्रीशत्रुंजयतीर्थसंघरचनादीन्युत्तमानि ध्रुवं
यः कार्याण्यकरोत्तथा लसरफीं पूर्णां प्रतिष्ठाक्षणे ॥ ४

प्रादात्सर्वजनस्य जैनसमयं चालेखयत् पुस्तकं
सर्वं पुण्यभरेण पावनमलं जन्म स्वकीयं व्यधात् ।
तेनायं भवनस्य यस्य जिनपस्योद्धारकः कारितः
सार्द्धं सद्धरराजमेघतनयाभ्यां पार्श्वनाथो मुदे ॥ ५ ॥ श्रीः ॥*

## ( ७ )

श्रीलोध्रवानगरे श्रीबृहत्खरतराधीशैः सं. १६७५ मार्गशीर्षसुदि १२ तिथौ गुरौ भांडशालिक सा० श्रीमल(ल्ल)भा० चांपलदेपुत्ररत्नथाहरूकेण भार्याकनकादेपुत्रहरराजमेघराजादियुतेन श्रीचिंतामणिपार्श्वनाथबिंबं का०......युगप्रधानश्रीजिनसिंहसूरिपट्टप्रभाकरभ० श्रीजिनराजसूरिभिः प्रतिष्ठितं ॥*

## ( ८ )

संवत् १६७५ मार्गशीर्षसुदि १२ गुरौ श्रीअजितनाथबिंबं का० भ० थाहरूभार्याकनकादेपुत्ररत्नहरराजेन प्र० युगप्रधानश्रीजिनसिंहपट्टप्रभाकरश्रीजिनराजसूरिभिः ॥*

## ( ९ )

सं. १६९३ मार्गसीरसुदि ९ भणसालीसंघवीथाहरूकेण श्रीपार्श्वनाथदेवगृहं स्ववृद्धभार्याकनकादेवीपुण्यार्थमकारि प्र० श्रीजिनराजसूरिभिः ॥*

## ( १० )

सं. १६९३ मार्गशीर्षसुदि ९ भणसालीसंघवीथाहरूकेण श्रीआदिनाथदेवगृहं स्वलघुभार्यासुहागदेवीपुण्यार्थमकारि प्रतिष्ठितं श्रीजिनराजसूरिभिः ॥*

## ( ११ )

सं. १६९३ मार्गशीर्षसुदि ९ भणसाली संघवीथाहरूकेण श्रीअजितदेवगृहं पुत्ररत्नहरराजपुण्यार्थमकारि प्र० श्रीजिनराजसूरिभिः ॥*

## ( १२ )

सं. १६९३ मार्गशीर्षसुदि ९ संघवीथाहरुकेण श्रीसंभवनाथदेवगृहं पुत्रमेघराजपौत्रभोजराज सुखम(?)स्य पुण्यार्थं प्र० श्रीजिनराजसूरिभिः ॥*

## ( १३ )

श्रीमहावीरतीर्थे श्रीसुधर्मस्वामिसंताने श्रीखरतरगच्छे श्रीउद्योतनसूरिश्रीवर्धमानसूरिश्रीजिनेश्वरसूरिश्रीजिनचंद्रसूरिश्रीअभयदेवसूरिश्रीजिनवल्लभसूरिश्रीजिनदत्तसूरिश्रीजिनचंद्रसूरिश्रीजिनपतिसूरिश्रीजिनेश्वरसूरिश्रीजिनप्रबोधसूरिश्रीजिनचंद्रसूरिश्रीजिनकुशलसूरिश्रीजिनपद्मसूरिश्रीजिनलब्धिसूरिश्रीजिनचंद्रसूरिश्रीजिनोदयसूरिश्रीजिनराजसूरिसुगुरुपट्टालंकारश्रीजिनभद्रसूरिविजयराज्ये श्रीजेसलमेरुदुर्गे श्रीचाचिगदेवे पृथिवीं शासति सति संवत् १५०५ वर्षे श्रीशंखवालगोत्रे सा० पेथापुत्रसा० आसराजभार्यया सा० षेता सा० पाताजनन्या गेलीश्राविकया वाचनाचार्यरत्नमूर्तिगणिसदुपदेशेन वा० जिनसेनगणिरम्योद्यमेन श्रीतपःपट्टिका कारिता । लिखिता च पं० मेरुसुंदरगणिना शुभमस्तु । सद्भिर्वाच्यमाना चिरं नंद्यात् । श्रीकीर्तिरत्नसूरि......

---

* एतच्चिह्नाङ्किताः सप्तापि लेखा लोद्रपुरमन्दिरसत्काः ।

## ( १४ )

संवत् १५१८ वर्षे वैशाषसुदि १० दिने राउलश्रीवयरसिंहपुत्रराउलश्रीचाचिगदेवविजयराज्ये चोपडागोत्रे सा० सिवराजमहिराजलोलाबांधवसं० लाषणसुश्रावकेण सं० थिरा सं० सहसा सं० सहजपाल सा० सिषरा सा० समरामालासहणाकुंरापौत्रश्रीकरणउदयकरणप्रमुखपरिवारसहितेन श्रीसित्तुजयगिरनारावतारपट्टिका समराभार्यासहजदेश्राविकापुण्यार्थं कारिता प्रतिष्ठिता खरतरगच्छे श्रीजिनभद्रसूरिपट्टालंकारश्रीजिनचंद्रसूरिभिः । वाचनाचार्यकमलराजगणयः प्रत्यहं प्रणमंति ॥

## ( १५ )

संवत् १५१८ वर्षे वैशाषसुदि १० दिने गणधरगोत्रे सा० नाथूपुत्र सं. पासडभार्याप्रेमलदे पुत्रसं. जीवंदसुश्रावकेण पुत्रसधारणधीराप्रमुखपरिवारसहितेन निजमात्राप्रेमलदेपुण्यार्थं नंदीश्वरपट्टिका कारिता प्रतिष्ठिता श्रीखरतरगच्छे श्रीजिनभद्रसूरिपट्टे श्रीजिनचंद्रसूरिभिः । वा० कमलराजगणिवराणां शिष्य उत्तमलाभगणिः प्रणमति ॥

## ( १६ )

संवत् १५१८ वर्षे वैशाषसुदि १० दिने संखवालगोत्रे सा० पेथापुत्र सा० आसराजश्रावकेण पुत्र षेता पाता पौत्र दीदा हेमराज प्रमुखपरिवारसहिनेन निजभार्यागेलीपुण्यार्थं वा० कमलराजगणीश्वराणामुपदेशेन श्रीशत्रुंजयगिरनारावतारपट्टिका कारिता प्रतिष्ठिता श्रीखरतरगच्छे श्रीजिनभद्रसूरिपट्टालंकारश्रीजिनचंद्रसूरिभिः । उत्तमलाभगणिः प्रणमति सादरं ॥

## ( १७ )

राउलश्रीवयरसिंहपुत्रराउलश्रीचाचिगदेवविजयिराज्ये विक्रमात् सं० १५१८ वर्षे वैशाषसुदि १० दिने······समरापुत्र सं० सजाकेन सं० सद्धारुहदे सोटा (?) राणा जावड भावड सं० सोही रांभू वीजूप्रमुखपुत्रपुत्रिकादिपरिवारसहितेन श्रीमंडोवरनगरवास्तव्येन भार्यासूहवदेपुण्यार्थं श्रीनंदीश्वरपट्टिका कारिता खरतरगच्छे श्रीजिनचंद्रसूरिभिः ॥

## ( १८ )

संवत् १५१८ वर्षे ज्येष्ठवदि ४ दिने श्रीचाचिगदेवविजयराज्ये गणधरगोत्रे जगसीपुत्रनाथू तत्पुत्रसं० सच्चराजभार्या सं० धविणि सिंगारदे पुत्रसं० धरमा सं० जिणदत्त देवसी भीमसी पौत्र लाषा रिणमल्ल देव अमरा भउणा सूरा सामलादिपरिवारयुतेन श्रीशत्रुंजयगिरनारावतारपट्टिका कारिता प्रतिष्ठिता श्रीखरतरगच्छे श्रीजिनभद्रसूरिपट्टालंकारश्रीजिनचंद्रसूरिभिः । अरवात्रीजदिने लिखितं ॥

## ( १९ )

श्रीपार्श्वनाथाय नमः ॥ संवत् १६ चैत्रादि ७३ वर्षे जेठसुदि १५ सोमवारे मूलनक्षत्रे । श्रीजेसलमेरुनगरे राउलश्रीकल्याणजीविजयराज्ये । श्रीखरतरवेगडगच्छे । भ० श्रीजिनेश्वरसूरिविजयराज्ये । छाजहडगोत्रे सं० कुलधर······वेगडापुत्र मं.······सुर······देवद······पुत्र मंत्री गुणदत्त तत्पुत्र मं.······सरजन पुत्रमं. जी······कं······तत्पुत्रमं. चांपसी मं. उदयसिंह मं. ठाकरसी······ चांपसीपुत्र······कर्ण उदयसिंहपुत्र······उपारार······पदं कारितं चिरं जयतु । श्रीसंघस्य······ सूत्रधारपाचागेन······

## ( २० )

श्रीखरतरवेगडगच्छे भट्टारकश्रीजिनेश्वरसूरिसंताने भट्टारकश्रीजिनगुणप्रभुसूरिपट्टे भ० श्रीजिनेशरसूरि तत्पट्टे भट्टारकश्री ५ जिनचंद्रसूरिपट्टे भट्टारकश्रीजिनसमुद्रसूरि तत्पट्टालंकारहारसारभट्टारक श्री १०७ श्रीजिनसुंदरसूरि तत्पट्टे युगप्रधानभट्टारकश्री ७ श्रीजिनउदयसूरिविजयराज्ये प्राज्यसम्राज्ये ॥ श्रीरस्तुः ॥ श्रीः

## ( २१ )

॥ उं नमः श्रीपार्श्वनाथाय नमः ॥ श्रीवागडेशाय नमः ॥ संवत् १७८१ वर्षे शाके १६४६ प्रवर्त्तमाने महामांगल्यप्रदे मासोत्तमचैत्रमासे लीलविलासे शुक्लपक्षे त्रयोदश्यां गुरुवारे उत्तराफाल्गुनीनक्षत्रे वृद्धिनामयोगे एवं शुभदिने श्रीजेसलमेरुगढमहादुर्गे राउलश्री ५ अषैसिंघजी विजैराज्ये ॥

## ( २२ )

## सुपार्श्वजिनालयस्य प्रशस्तिः ।

ॐ नमः श्रीसुपार्श्वनाथाय ॥

श्रीनाभेयमनुं वृषांकिततनुं पापारिनाशे धनुं ।
श्रीमच्छांतिजिनं तमोभरदिनं लोकत्रयीस्वामिनं ॥
सर्वानंदकरं महाभयहरं श्रीनेमिनाथं परं ।
वंदे पार्श्वप्रभुं सुरासुरविभुं श्रीवर्द्धमानं सु(शु)भं ॥ १ ॥

भुवनभवनपापध्वांतदीपायमानं
परमतप्रतिघानप्रत्यनीकायमानं ।
धृतिकुवलयनेत्रावश्यमंत्रायमानं
भजत विदितकीर्तिं श्रीसुपार्श्वं विमानं ॥ २ ॥

अर्हत ईशाः सकलाश्च सिद्धा आचार्यवर्या अपि पाठकेंद्राः ।
मुनीश्वराः सर्वसमीहितानि कुर्वंतु रत्नत्रययुक्तिभाजः ॥ ३ ॥

गजारूढा पीना द्विगुणभुजयुग्मेन सहिता ।
लसद्विद्युत्कान्तिर्नरसुरभरैः पादमहिता
ददाना भक्तेभ्यः प्रतिदिवसमुच्चैरमरतां
शुभं शांता संघस्य दिशतु सदानंदजननी ॥ ४ ॥

सत्सर्वर्द्धिसमन्विते शुभयुते दुष्टैर्जनैर्वच्युते
धर्माधिष्ठितचित्तलोकलसिते विद्याविनीतोच्चिते ।
श्रीमज्जेशलमेरुनाम्नि नगरे चैत्यं सुजातं कथं
तं वक्ष्ये ह्यधुना सुपार्श्वजिनपस्याहं तपागच्छके ॥ ५ ॥

गांभीर्यौदार्यधैर्यादिगुणसमुदयैः सद्गुरोर्धर्मचर्या
श्रुत्वा युक्तस्य वाणीं दुरितशतदलारामकामे हिमानीं ।
कंदर्प्पस्तेपि(?) घस्रां नवजिनभवनोत्पादनेनेत्यजस्रं
मर्त्यः प्राप्नोति नित्यं प्रतिभवकृतं यत्पापमाहत्य मुक्तिं ॥ ६ ॥

ब्रह्मेंद्रेंद्रीशदेवासुरनरनिकरैः सेवितांह्रिद्वयस्य ।
भक्तानां मंगलाय प्रमथितदनुजेंद्रस्य मायायुतस्य ।

श्रीमद्विष्णोः पदाब्जामलकलनजलैः क्षालितस्वांतकस्य ।
सन्न्यायाध्वप्रकर्त्तुर्जगति च विदितस्यारिवर्गांतकस्य ॥ ७ ॥

निश्शेषोर्व्वीशमान्यस्य जनसुखकृतो मूलराजाभिधान-
राज्ञः संप्राप्य चाज्ञां द्रुतहतसमघः कारयामास संघः ।
सत्प्रासादं प्रसादं सुरभवनसमं नष्टदुष्कृद्विषादं
युक्तं पापाद्विमुक्तं गतकुमतमतं जालिकातोरणाद्यैः ॥ ८ ॥

शुभं श्रीमच्छ्रीविक्रमस्य क्षितिपतिशुभात् प्राज्यसाम्राज्यराज्या-
द्वर्षव्राते सुजाते वहनरसगजोर्व्वीमिते सौम्यमार्गे
सूर्ये मासोत्तमाश्वियुजि सितदले कर्मवाव्यां दशम्यां ।
रम्यां सद्योगगम्यां वसुपतिभयुजि सौम्यवारान्वितायां ॥ ९ ॥

..............जातं हि पूर्णं गतवत्सु तूर्णं
चैत्यं हि पंचस्वपि हायनेषु
जाता प्रतिष्ठा बलिनोंतरायात्
ततोंतरायस्य गता निवृत्तिः ॥ १० ॥

राजेंद्रक्षयसिंहनामनृपतेः पट्टोदयाद्रौ रवेः
श्रीयद्वन्वयक्षीरनीरधिविधोः सर्वर्द्धिविद्योदधेः ।
श्रीनाथस्य पदांबुजालिसदृशस्यामर्दितासन्म...
श्रंडार्खंडकुमित्रपद्मिदलने दुर्दंतपंचास्यिनः ॥ ११ ॥

सत्प्रासादतडागयागप्रभृतिश्रेयस्कृतेर्वर्द्धिता-
मंदानंदकृदुत्तमानघपयःपुण्यीकृतप्राणिनः ।
जाग्रत्प्रोत्कटयत्प्रतापतपना नष्टारिजांधकृतौ
राज्ये राउलमूलनामनृपतेर्वै विद्यमाने चिरं ॥ १२ ॥

सर्वाकृत्यनिवर्तिते शुभमते सद्यौवराज्यांकिते
गोषद्दर्शनपालके गज...वाख्ये कुमारे स्थिते ।
श्रीनारायणभक्तितत्परमतिर्माहेश्वरीयेन्वये
प्रावोभूत्करुणामृतार्द्रहृदयः प्रामप्रतिष्ठाश्रयः ॥ १३ ॥

आन्येनेव सुरूपसिंह इति तत्सूना अमात्योत्तमे
स्वज्ञातौ तिलकोत्तमे सुहृदयानंदप्रकंदोपमे ।
सर्वक्षोणिमलब्धसत्कृतिसमे सत्पुण्यपुष्पद्रुमे
नाम्ना सालिमसिंहके मतवरे विख्यातपृथ्वीतले ॥ १४ ॥

वर्षे हर्षजनप्रदे नवरसाष्टेंदौ मिते संमते
श्रीमद्विक्रमभूपतेः सुललितस्यादभ्रराज्याद्गुतात् ।
ग्रीष्मर्त्तौ वृषराशिगे ग्रहपतौ सौम्यायने भास्करे
सत्सद्राशिनवांशगेषु सकलेषु व्योमगेषु क्रमात् ॥ १५ ॥

राधे मासि समन्विते सुविशदे पक्षे बलक्षे सखे
श्रीमन्नाभिसुतस्य पारणदिने शुद्धे तृतीयातिथौ ।
वारे चंद्रसुते शुभर्क्षसहिते सद्योगवेलायुते
दिग्वामा मृदुमंजुलाख्यविशदे जाते...निजे ॥ १६ ॥

सव्रीडीकृतनाकिनागवनिताव्रातामिरत्यद्भुते
गीतिसप्तस्वरान्विते वग(?)दिने सीमंतिनीभिः शुभे ।
काल्याणीयमहोत्सवे बहुकृते जाते महाडंबरे
वादित्रध्वनिपूरिते जयरवे वंदीजनोच्चारिते ॥ १७ ॥
सद्वंशेषु तपागणस्य निखिलेषूत्पत्तिभाजां स्व......
वृद्धाचार्यमतानुगतसुहृदां पुण्यात्मनामाग्रहात् ।
श्राद्धानां सुखदा मया नगजयेनेष्टा प्रतिष्ठा मुदे
चैत्यस्य ध्वजदंडयोश्च कलस(श)स्याकारि सु(शु)भा हिता ॥ १८ ॥

अष्टभिः कुलकं

श्रीमत्तपागणसरोजविकाशहंसाः प्राभूवनापंशुचिमानसराजहंसाः ।
सिद्धांतसिंधुमथनैकनिबद्धकक्षाः सूरीशहीरविजया हृतदुष्टमक्षाः ॥ १९ ॥
दिल्लयामकब्बरसमस्तकुसार्वभौमे-
नासेव्यमानचरणाः करुणार्द्रचित्ताः ।
यद्बोधनाज्जगति त्यक्तमृताकरेण
व्यादत्तराज्यनवचिह्नत्रिदिगूपुरेण ॥ २० ॥ युग्मं
तत्पश्चात्संव्यतीते कतिपयसुसुमे श्रीजिनेंद्राख्यसूरिः
कालेस्मिन् सन्निकर्षे विजितमदनेकाभिमानिव्रृंदः ।
श्रेष्ठानंतक्षितीशाः सदननरभृतां माननीयो मुनींद्रो
जैनं चर्कर्द्धि राज्यं सुकृतयुतजनानंदजं पुण्ययुक्तं ॥ २१ ॥
शांतो दांतो धीमान् गीतार्थो मानवर्जितः सुचेताः ।
लोके हि लब्धसुयशा दगूछतमहागाधजलधितटः ॥ २२ ॥
श्रीहीरविजयसूरेः शाखायां श्रीगुलालविजयोस्ति ।
पुरवरजेशलमेरोस्तच्छिष्यौ द्वौ समायातौ ॥ २३ ॥
दीपविजयनगविजयौ संघस्य तपागणस्य विज्ञप्तैः ।
ताभ्यामिमाः प्रतिष्ठाश्चैत्यध्वजदंडकलशानां ॥ २४ ॥
सुपार्श्वपार्श्वभगवतो ह्यात्महितार्थं कृतास्सकल्याणं ।
बहाडंबरयुक्ते कृते महातूर्यसंरावे ॥ २५ ॥
जाते जयजयशब्दे दत्ते वंदीजनेषु सद्दाने ।
मिष्टान्नभोजनेन संतुष्टे सकलभूतगणे ॥ २६ ॥
प्रतिष्ठाकृत्ये संपूर्णे सिद्धे सर्वमनोरथे ।
स्वपूर्वजकृताचारविधिज्ञेन महौजसा ॥ २७ ॥
राज्ञा श्रीमूलराजेन गृहमागत्य सन्मुदा ।
वस्त्रादिकृतसत्कारः परोपकृतिकर्मटः ॥ २८ ॥
अवर्ण्णवादी न क्वापि देवगुर्वोश्च पूजकः ।
कृतसंगः सदाचारैः श्रृण्वानो धर्ममन्वहं ॥ २९ ॥
दीनानाथादिहृदुःखे दयार्द्रीकृतमानसः ।
पापभीरुः प्रसिद्धं च देशाचारं समाचरन् ॥ ३० ॥
सर्वमिष्टान्नसंपूर्णं सर्वव्यंजनसंयुतं ।
सर्वसुष्टुरसोपेतं सर्वचित्तसुखप्रदं ॥ ३१ ॥
संघः साधर्मिवात्सल्यं चकारामंदभोजनं ।
ईदृक्छुभेन कार्येण नरः प्राप्नोति निश्चितं ॥ ३२ ॥

इहलोके धनं चायुर्वृद्धिं कीर्त्तिं सुतं सुखं ।
परत्र देववैभव्यं परमां शिवसंपदां ॥ ३३ ॥ षड्भिः कुलकं
भद्रं कुरुष्व परिपालय सर्वविश्वं
विघ्नं हरस्व विपुलां कमलां प्रयच्छ ।
जैवातृकार्कसुरसिद्धजलानि यावत्
स्थैर्यं भजस्व हि सुपार्श्वज(जि)नस्य नित्यं ॥ ३४ ॥
रविचंद्रधरासुतसौम्यगुरूशनसः
शनिराहुशिखिप्रमुखा दिविगाः ।
दिविगास्सततं मम हर्षयुताः
प्रदिशंत्वयि भद्रभरं भवतां ॥ ३५ ॥
क्षेत्राधीश्वरयोगिनीजनगणैः सिद्धैः समाराधितो
ध्यातो देवगणैस्तथा मुनिगणैः कार्यार्थिभिः सर्वदा ।
साम्राज्यार्थकरश्चतुर्भुजधरः खड्गादिशस्त्रैर्वरैः
श्रीसंघस्य सुखं ददातु सततं श्रीमाणिभद्रो द्रुतं ॥ ३६ ॥
क्षोण्यां चाखिलदेवता गजमुखाः क्षेत्राधिपा भैरवा
योगिन्यो बटुकाश्च सिद्ध...तरपैशाचकाश्चेटकाः ।
अन्ये भूचरखेचरामृत(ता)पगा वेतालभूतग्रहाः
सानंदाः प्रदिशंतु मंगलवरं संघस्य मे सत्वरं ॥ ३७ ॥
यासां संस्मरणाद् भवंति सकलाः संपद्गणा देहिनां
याः सर्वा दुः(?)खं दिनाश्रिजगतामाधारभूताश्च याः ।
संघस्याप्यखिलस्य दुःखनिवहं कुर्वंतु दूरं सदा
श्रीमच्छासनदेवताः सुनयनाः संपूर्णचंद्राननाः ॥ ३८ ॥
उद्यच्छारदचंद्रास्या सूर्यकांतिसमप्रभा ।
सुखाय मे च संघस्य भूयाच्छ्रीशांतिदेवता ॥ ३९ ॥
यावद्विष्णुपदं ध्रुवस्थितियुतं वर्वर्त्ति तेजोनिधी
यावच्चंद्रदिवाकरौ दिविसरौ यावद्धरित्रीधरौ ।
यावत्संति धरांबुवह्निखमरुद्धाराधरामंडलं
यावत्तावदिदं प्रमोदभरदं चैत्यं चिरं तिष्ठतु ॥ ४० ॥
येषां लग्नं द्रव्यं यैश्चेयं कारिता प्रतिष्ठा ।
तेषां कुलस्य नित्यं वृद्धिर्भूयाद्धनयशसोः ॥ ४१ ॥
सुवृष्ट्यास्संतु जलदाः सुवातास्संतु वायवः ।
बहुधान्यास्तु पृथिवी सुस्थितोस्तु जनोखिलः ॥ ४२ ॥
सर्वेपि संतु सुखिनः सर्वे संतु निरामयाः ।
सर्वे भद्राणि पश्यंतु मा कश्चिद्दुःखभाग् भवेत् ॥ ४३ ॥
नगविजयेन मयैषा कृता प्रतिष्ठाप्रशस्तिरवशेषा ।
भूयाद्वृद्धिरशेषा संघस्य मे शस्यशुभरेखा ॥ ४४ ॥
विनयनतकोटिकोट्यमरनरभरसेवितांह्रिकमलस्य ।
श्रीमत्संखेश्वरस्य......................॥ ४५ ॥

संवत् १८६९ वर्षे वैशाखसुदि ३ दिने
श्रीसंघेन प्रतिष्ठा कारिता ॥

---

# जेसलमेरुदुर्गभाण्डागारीयग्रन्थानां

# वर्णानुपूर्व्या सूची ।



* एतच्चिह्नाङ्किता ग्रन्था यावज्ज्ञातमद्यावधि क्वापि मुद्रणेन न प्रसिद्धाः ।

# सूचिपत्रनिर्दिष्टग्रन्थकर्तॄणां तद्ग्रन्थनामोपेता सूची।

## (क)

## जैनग्रन्थकाराः।

# (ख)

## जैनेतरग्रन्थकाराः ।

# सपरिशिष्टसूचिपत्रनिर्दिष्टविशिष्टनामसूची ।

## [ १ ]

## जैनाचार्यमुनिप्रभृतयः ।

## [२]

## जैनजैनेतरश्रेष्ठिप्रभृतयः।

# [३]

## जैनमुनिवंश-गच्छादि ।

## [४]

### गृहस्थवंश-कुल-ज्ञाति-गोत्रादि ।



## [५]

### नृपाः ।

## [६]
## स्थानानि।

# GAEKWAD'S ORIENTAL SERIES

## WORKS PUBLISHED.

| No. | Work | Rs. | A. | P. |
|---|---|---|---|---|
| 1. | Kavyamimansa by Rajasekhara, edited by C. D. Dalal, M.A. and R. A. Shastry ... ... ... ... ... ... | 2 | 0 | 0 |
| 2. | Naranarayanananda by Vastupala, edited by C. D. Dalal, M.A. and R. A. Shastry ... ... ... ... ... ... | 1 | 4 | 0 |
| 3. | Tarkasangraha by Anandajnana or Anandagiri, edited by T. M. Tripathi, B.A. ... ... ... ... ... ... | 2 | 0 | 0 |
| 4. | Parthaparakrama by Pralhadanadeva, edited by C. D. Dalal, M.A. ... ... ... ... ... ... ... ... | 0 | 6 | 0 |
| 5. | Rashtraudhavansa-Mahakavya by Rudrakavi, edited by E. Krishnamacharya, Introduction by C. D. Dalal, M.A.. ... | 1 | 12 | 0 |
| 6. | Linganusasana by Vamana, edited by C. D. Dalal, M.A. ... | 0 | 8 | 0 |
| 7. | Vasantavilasa by Balchandrasuri, edited by C. D. Dalal, M.A... | 1 | 8 | 0 |
| 8. | Rupakashatka by Vatsaraja, edited by C. D. Dalal, M.A. ... | 2 | 4 | 0 |
| 9. | Mohaparajaya by Yasahpala, edited by Muni-Chaturvijayaji. Introduction and appendices by C. D. Dalal, M.A. ... ... | 2 | 0 | 0 |
| 10. | Hammiramadamardana by Jayasinhasuri, edited by C. D. Dalal, M.A. ... ... ... ... ... ... ... | 2 | 0 | 0 |
| 11. | Udayasundarikatha by Soddhala, edited by C. D. Dalal, M.A. and E. Krishnamacharya ... ... ... ... ... | 2 | 4 | 0 |
| 12. | Mahavidyavidambana by Bhatta Vadindra, edited by M. R. Telang .. ... ... ... ... ... ... ... | 2 | 8 | 0 |
| 13. | Prachinagurjarakavyasangraha, collection of old Gujarati poems—12th to 15th centuries, edited by C. D. Dalal, M.A. ... ... | 2 | 4 | 0 |
| 14. | Kumarapalapratibodha by Somaprabhacharya, edited by Muni Jinavijayaji ... ... ... ... ... ... ... | 7 | 8 | 0 |
| 15. | Ganakarika by Bhasarvajna, edited by C. D. Dalal, M.A. ... | 1 | 4 | 0 |
| 16. | Sangitamakaranda by Narada, edited by M. R. Telang ... | 2 | 0 | 0 |
| 17. | Kavindracharya List, List of works in the collection of Kavindracharya, a 17th century pandit, edited by R. A. Shastry with a foreword by Dr. Ganganatha Jha. ... ... | 0 | 12 | 0 |
| 18. | Varahagrihyasutra, edited by R. Shama Shastry ... ... | 0 | 10 | 0 |
| 19. | Lekhapaddhati. Specimen Sanskrit letters, etc., 8th to 15th centuries, edited by C. D. Dalal, M.A. (*shortly*) ... ... | | | |
| 20. | Panchamikaha or Bhavisayattakaha by Dhanapala, edited by C. D. Dalal, M.A. and Dr. P. D. Gune, M.A., Phd. (*shortly*). | | | |
| 21. | Descriptive catalogue of manuscripts in the Bhandars at Jaisalmere. Compiled by C. D. Dalal, M.A. and edited by L. B. Gandhi ... ... ... ... ... ... ... | 2 | 8 | 0 |

22, 23. Parasuramakalpasutra, with commentary by Ramesvar, and Paddhati by Emananda. Edited by A. Mahadeva Shastry, B.A. Director, Adyar Library. 2 volumes (*shortly*) ...

24. Tantrarahasya. Edited by Dr. R. Sama Sastry, B.A., Ph. D. Central Government Oriental Library, Mysore (*shortly*) ...

## IN THE PRESS.

1. Samarangana by Bhoja (a work on Indian Architecture) edited by Mahamahopadhyaya T. Ganapati Shastry, Hon. M. R. A. S., Curator for publication of Sanskrit Manuscripts, Trivandrum. ... ... ... ... ... ... ...
2. Tattvasangraha of Santaraksita, with commentary by Kamalasila. Edited by Embar Krishnamacharya, Adhyaksha, Sanskrit Pathasala, Vadtal ... ... ... ... ...
3. Nyayapravesa of Dingnaga, with commentary by Haribhadrasuri and Panjika by Parsvadeva. Edited by A. B. Dhruva, M.A., LL.B., Principal Central Hindu College, Benares ...

# गायकवाड ओरिएन्टल सिरीझ.

### मुद्रितग्रन्थाः

१. राजशेखरकृतकाव्यमीमांसा ... २- ०-०
२. वस्तुपालकृतनरनारायणानन्दः ... १- ४-०
३. आनन्दज्ञानकृततर्कसङ्ग्रहः ... २- ०-०
४. प्रह्लादनदेवकृतपार्थपराक्रमः ... ०- ६-०
५. रुद्रकविकृतराष्ट्रौढवंशमहाकाव्यम् ... १-१२-०
६. वामनकृतलिङ्गानुशासनम् ... ०- ८-०
७. बालचन्द्रसूरिकृतवसन्तविलासः ... १- ८-०
८. वत्सराजविरचितरूपकषट्कम् ... २- ४-०
९. यशःपालकृतमोहपराजयनाटकम् ... २- ०-०
१०. जयसिंहसूरिकृतहम्मीरमदमर्दनम् ... २- ०-०
११. सोड्ढलकृतोदयसुन्दरीकथा ... ... २- ४-०
१२. मल्लवादीन्द्रकृतमहाविद्याविडम्बनम्
(भुवनसुन्दरसूरिटीकायुतम्) ... २- ८-०
१३. प्राचीनगूर्जरकाव्यसङ्ग्रहः
(प्रथमो भागः) ... ... २- ४-०
१४. सोमप्रभाचार्यकृतकुमारपालप्रतिबोधः ७- ८-०
१५. भासर्वज्ञकृतगणकारिका सटीका
(कारवणमाहात्म्योपेता) ... १- ४-०
१६. नारदकृतसङ्गीतमकरन्दः ... ... २- ०-०
१७. कवीन्द्राचार्यसूचीपत्रम् ... ... ०-१२-०
१८. वाराहगृह्यसूत्रम् ... ... ... ०-१०-०
१९. लेखपद्धतिः ... ... ... (सम्पूर्णप्राया)
२०. धनपालकृतपञ्चमीकहा(अपभ्रंशभाषायाम्) ,, ,,
२१. जेसलमेरुभाण्डागारीयग्रन्थानां सूची २- ८-०
२२. परशुरामकल्पसूत्रं सव्याख्यम् ...(सम्पूर्णप्रायम्)
२३. परशुरामकल्पसूत्रोपरि उमानन्दपद्धतिश्च(सम्पूर्णप्राया)
२४. रामानुजाचार्यकृतं तन्त्ररहस्यम् ...(सम्पूर्णप्रायम्)

### मुद्र्यमाणग्रन्थाः

१. भोजकृतसमराङ्गणम्
२. दिङ्नागकृतन्यायप्रवेशः हरिभद्रसूरिकृत।
वृत्तिपार्श्वदेवकृततत्पञ्जिकाभ्यां विभूषितः
३. शान्तरक्षितकृततत्त्वसङ्ग्रहः
कमलशीलकृतपञ्जिकायुतः

**"इमे ग्रन्था: सेन्ट्रल लाइब्रेरी वडोदरा"**

**इत्यत्र प्राप्स्यन्ते.**